# महाभाष्यप्रदीपोद्द्योतः।

नागेशभट्टविरचितः।



बहुवल्लभशर्मणा परिशोधितः।



बङ्गदेशीयासियाटिक्सोसाइट्याख्यसमाजानामनुमत्या
व्ययेन च।



कलिकाताराजधान्यां
बाप्तिस्टमिशनयन्त्रे मुद्रितः।
शकाब्दाः १८२३।

# महाभाष्यप्रदीपोद्योतः ॥



नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ।
पाणिन्यादिमुनीन् वन्द्यान्पितरौ च सतीशिवौ ॥ १ ॥
नागेशभट्टो नागेशभाषितार्थविचक्षणः ।
हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः ॥ २ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ।
[1]शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः ॥ ३ ॥
नाविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् ।
भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति ॥ ४ ॥

भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति सर्वेति । क्रान्तानां पञ्चमश्लोकोत्तरार्द्धेनान्वयः ॥ सर्वाकारत्वं सर्वोपादानकारणत्वात् । मृदादिवत् । कार्य्यातिरिक्तदृश्यस्वरूपाभावान्निराकारत्वम् । कर्तृत्वादिश्वाध्यस्तत्वम् । स ऐक्षतेति श्रुतेः । अतीन्द्रियत्वं विगतेन्द्रियत्वेन । पश्यत्यचक्षुरित्यादिश्रुतेः । सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव । इन्द्रियाविषयत्वेनवातीन्द्रियत्वम् । सदसद्रूपता । प्रपञ्चधर्मः । एतच्च स्त्रियामिति सूत्रे वक्ष्यते । तामतीतम् । तद्रहितमित्यर्थः । एवञ्च सदेवेति भावः । नन्वीदृशमस्माभिः कुतो न दृश्यत इत्यत आह अदृश्यमित्यादि ॥ १ ॥

---

१ शृङ्गवेरपुराधीशरामतः ॥ क ।

मायया वृतैरित्यस्य कृत्यमाह ज्ञानेति । [1]तत्त्वमस्यादिवाक्यजनिताखण्डाद्वितीयसच्चिदानन्दब्रह्माकाराकारावृत्तिर्ज्ञानम् । तदेव शोधनं तेन संप्रेक्ष्यमित्यर्थः नासयणमित्यादि । सर्वनरसमूहानमर्थभिन्नमित्यर्थः । सर्वविद्यावेदरूपा तद्विधायिनम् ॥१॥ वचनसन्दर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति । पुरुषा इति । देवत्वम् । पाण्डित्यम् ॥२॥ सम्प्रदायशुद्धिं द्योतयन् गुरुं नमति । पदेति । व्याकरणमीमांसातर्काणामित्यर्थः ॥ धीमतः । ऊहापोहकुशलस्य ॥४॥ महाभाष्येति । व्याख्यातृत्वेऽप्यशेष्यादिकथनेनान्याख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम् ॥ अवारपारयोर्भवम् ॥ सूयतेऽनेनेति सेतुः [2]सेतुः ॥ यथागमम् । सम्प्रदायमनतिलङ्घ्येत्यर्थः ॥५॥ औद्धत्यं परिहरति भाष्येति । मयूरव्यंसकादिसमासो रूपकश्चेति बोध्यम् । पिशुनत्वं दुष्टत्वम् ॥६॥ नन्वेवं कथं प्रवृत्तिरत आह तथापीति । तत्त्वतः सारांश एवात्र निबद्ध इति भावः । शनैरित्यनेनात्यन्तग्रन्थसंकोचः । पङ्गुवदित्यनेन व्याख्येयांशापरित्यागो व्याख्यानस्याविस्तृतत्वं च बोध्यते ॥७॥ यद्यपि पाणिनिना 'ब्राह्मणेन निष्कारण' इत्यादिश्रुतेः संध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात् प्रयोजनं नोक्तं वार्त्तिककृतापि शास्त्रपूर्वकप्रयोगे धर्म इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम् भगवांस्तु विवरणकारत्वान्मन्दाधिकारिणां प्रवृत्तेः परोक्षकप्रयोजनप्रतिपत्तिप्रवणत्वाद्व्यवहितेषु स्वर्गापूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं

---

१ तत्त्वमस्यादिमहावाक्य ॥ क ॥ २ शवं सेतुम् ॥ क ॥ ख ॥

वदतीत्याह **भाष्यकार इति**। तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोध्यम्। तज्जिज्ञासुरधिकारी। प्रतिपाद्यप्रतिपादकभावसम्बन्ध इत्यर्थादेवलभ्यम्॥ ननु कानि पुनरित्यादिना प्रयोजनानि वक्ष्यति तेन पौनरुक्त्यमत आह **साक्षादिति** तदेवाह **प्रयोजनप्रयोजनानीति**॥ **व्याख्यातुमित्यस्य** शब्दानुशासनमित्यादिनेति शेषः॥ **तावत्** प्रथमम्। **व्याचष्टे इति** पदार्थज्ञानाद्यानन्तर्याद्यर्थकत्वनिरासायचेति शेषः। भाष्यत्वादेवच स्ववाक्यव्याख्यानमिति भावः॥ नन्विति विनाप्यथशब्दोऽधिकारार्थं इत्येवोच्यतामत आह **एवं हीति**॥ पदान्तरैः शब्दपदाधिकारार्थपदप्रयुज्यत इति पदैः॥ **व्याख्यातुमिति**। अधिकारार्थत्वेनेति शेषः॥ अथेतिशब्दोऽधिकारार्थं इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भ्राम्येदतोऽयमिति भाष्ये योऽयमस्मिन् वाक्ये स इत्यर्थः॥

**विस्पष्टेति** नवेतीत्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्त्तयितुमित्यर्थः॥ ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह **अधिकार इति**॥ **प्रस्ताव इति** प्रारम्भ इत्यर्थः। सचार्थाद्व्याख्यायमानस्य। अर्थशब्दः प्रयोजनवाचीति भावः॥ **निपातानां च द्योतकत्वमिति**। निपातानां [1]द्योतकत्वं चेत्यर्थः। उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याव्ययं विभक्तीति सूत्रे भाष्ये स्पष्टत्वात्। उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं गतिर्गताविव्यत्र भाष्ये इति

---

१ द्योतकत्वमपीत्यर्थः॥ ख॥

तत्रैव निरूपयिष्यामः। अत एव साक्षात्क्रियते गुरुरित्यादि संगच्छते। प्रारम्भक्रियाविषयत्वद्योतकत्वाच्चथशब्दस्यान्यार्थं नीय-मानदध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः[1] प्रयुज्यते इति फलि-तम्। परेत्वथ वाचकत्वमेवेच्छन्ति। अधिकृतमिति च तदर्थं वदन्ति॥ भाष्ये **प्रयुज्यते** इत्यनेन वर्त्तमाननिर्देशेन सर्वलोक-सिद्धमस्याधिकारार्थत्वं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनि-तम्॥ ननु विवरणेऽधिकृतमित्यधिकं वाचकपदाभावाद् द्योतक-त्वानुपपत्तिश्चेत्यत आह **अनेकेति**। उच्यते श्रूयते क्रियत इति **प्रतीयत इति** एतावतैव द्योतकत्वमिति भावः॥ [2]ननु भावसाधनानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह **व्याकरणस्य चेति**। अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः। अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य[3]बोध्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः॥ इदमेव ध्वनयितुम् भाष्ये नामपदोपादानं नामनामिनोरभेदान्नामशास्त्रमिति सामा-नाधिकरण्यम्। अनेनैवापभ्रंशानामविषयत्वं सूचितं[4]ध्वनीनां च॥ **केषामिति** प्रश्नस्तु किं [5]लौकिकमात्रविषयशाकटायनादि-शास्त्रमधिकृतमुत वैदिकमात्र[6]विषयप्रातिशाख्यमितीति[7]परे॥

ननु कर्मणि चेति निषेधात्कथं कर्मषष्ठ्यन्तेन समासोऽत आह

---

१ उभयार्थशब्दः॥ क॥ २ "ननु" इति नास्ति॥ ख॥

३ विविच्य ज्ञाप्यन्ते॥ क॥ ख॥ ४ "ध्वनीनां च" इति नास्ति॥ ख॥

५ लौकिकमात्रविषयम्॥ क॥ ख॥ ६ विषयम्॥ ख॥

७ "परे" इति नास्ति॥ ख॥

**अथवाचार्य्यस्येति**। उभयोरुपादान एवोभयप्राप्तिरित्याम्नमाने इति सूचे भाष्ये स्पष्टम्॥ कर्त्तृकर्मणोरिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह **इध्मेति**। षष्ठ्यर्थकतया कर्मणीत्युक्तार्थविहितषष्ठ्येव समासनिषेध इति भावः॥ **भाष्ये शास्त्रमित्यस्य** कर्त्तव्यत्वेनेति शेषः। विवरणकारत्वाद्व्याख्यातव्यत्वेनेति शेष उचित इत्यन्ये। शास्त्रत्वं चास्य साधुत्वरूपैकप्रयोजनसम्बद्धत्वाद्बोध्यम्॥ **सामान्यशब्दत्वादिति**। लोकव्यवहारे ध्वनावपभ्रंशे च शब्दशब्दप्रयोगादिति भावः। एतेन ध्वनिव्यङ्ग्य एव तपरसूत्रादौ [1]शब्दशब्दप्रयोगादिदं चिन्त्यमित्यपास्तम्॥ ननु व्रीहीन्प्रोक्षतीत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु [2]प्रवृत्तिवत्तद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह **विनेति**। व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः॥ **वाशिता-दीनाम्** इत्यादिनापभ्रंशसंग्रहः॥ उत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह **उत्तरपदार्थान्तर्गतस्येति**। ततः पृथगुपस्थित्यविषयस्येत्यर्थः॥ **बुद्ध्या** मानस्या यद्वा वाक्यजन्यबुद्ध्या॥ **वेदाङ्गत्वादिति** तत्त्वं चागमसिद्धम्। अनेन तस्मीशब्दादीनामविषयता सूचिता न च वेदाङ्गत्वाद्वैदिका एव विषयास्तु:। तच्च तत्र भाषायां छन्दसीत्याद्युक्त्योभयोरपि विषयत्वात्॥ ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्वाद्वेदेनाभिधानं न युज्यते इत्यत आह **वैदिकाना-मिति**। वैदिकानां लौकिकत्वेऽपीतिपाठः॥ **तेषां त्विति**

---

१ शब्दप्रयोगात्॥क॥  २ प्रवृत्तिवद्वाचके॥क॥ख॥

लौकिकानां याज्ञे कर्मण्येव तत्परिहारस्तेषां तु सर्वत्रेति भावः ॥ **भाषाशब्दानामिति।** भाषाप्रयोज्यप्रयोजकवृद्धव्यवहारस्थ प्रयुज्यमानानामित्यर्थः। एवं च वेदमात्रान्तर्गतकर्णैर्भिर्वाशो ऽभ्भ्रणामौल्याद्यतिरिक्तपरता लौकिकशब्दस्य तेस्तद्व्यवहारादर्शनात्[१]। अतएव गौरश्व इत्यादीनां लौकिकोदाहरणत्वसंगतिः। लोके स्वरानादरादेतदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य शन्न इत्यादीनां वैदिकोदाहरणत्वसंगतिरिति भावः ॥

लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव [२]तत्त्वोक्ता-वाशयमाह तथेति पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम्। लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वञ्च तु शाकटायनादिव्याकर-णस्येत्युत्तराशयं परे॥ **भाष्ये लौकिकास्तावदिति।** ताव-च्छब्दोऽनुक्रमे पूर्वं लौकिका उदाह्रियन्ते पश्चाद्वैदिका इत्यर्थः। वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः॥ **अभेदेन लोके इति।** अभेदेनैवेत्यर्थः। शब्दपरत्वाभिप्राये-णास्य[३] गौरिति प्रयोगाभावादिति भावः। पुरोवर्त्तिव्यक्तिं पश्यतो [४]वाचकजिज्ञासया कोऽयमिति प्रश्नेऽयं गौरयं वर्णशुक्ल इत्युत्तरस्थले सन्निहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतिरिति तात्पर्यम्। शब्दार्थयोस्तादात्म्यमेव शक्तिः स्पष्टं चेदं पातञ्जलभाष्ये इति

---

१ तद्व्यवहारदर्शनात् ॥ख॥ २ तथोक्तावाशयम् ॥क॥

३ "अस्य गौरिति" इति नास्ति ॥ख॥ ४ वाचकजिज्ञासायाम् ॥क॥

[1]मञ्जूषायामस्माभिर्हरिसंमततया[2] व्युत्पादितम्। [3]अत एव जात्यादिव्यक्त्योरिव रामेतिद्व्यक्षरं नाममानभङ्गः पिनाकिन इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः॥ **अथ गौरिति भाष्ये** अथेत्यस्य पृच्छ्यते इति शेषः॥ किं पृच्छ्यते तदाह **गौरित्यत्रेत्यादि**॥ **कः शब्द इति**। कः शब्दशब्दाभिधेय इति प्रश्नः॥ **प्रतिभासमानेषु**। शब्दजातिव्यक्त्यादिषु॥ नन्वेवं गुणक्रिययोश्शब्दत्वाशङ्कानुपपन्ना नहि ते अपि गौरितिशब्दजन्यबोधे भासेते इति चेन्न। गुणगुणिनोः क्रियाक्रियावतोश्चाभेदात्। शब्दार्थयोश्च तत्त्वात् तदभिन्नाभिन्नस्येति न्यायेन तच्छङ्कोपपत्तेः। यथा परमकारणाभिन्नकार्य्यकारणकस्य परमकारणेनाप्यभेदः। यद्वा गुणसमूहो द्रव्यमिति पक्षे तस्य भाव इति सूत्रस्थभाष्यसम्मते समूहस्य गोशब्दवाच्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या॥ **अथ गौरिति विज्ञान इति** सामान्योक्त्या तदाकारप्रत्ययवादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानमत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा। विशेषजिज्ञासायास्सामान्यज्ञानपूर्वकत्वादित्यन्ये। निरूपितं चैतन्मञ्जूषायाम्॥ **यत्तदिति** समुदायो यच्छब्दार्थे वर्त्तते। तस्यैव पुनस्तच्छब्देन स [4]इत्येतेन परामर्शः। यद्वा प्रसिद्धौ॥ ननु यदित्यस्य नपुंसकत्वेन तच्छब्देऽपि नपुंसकलिङ्गमेवोचितमत आह **उद्दिश्यमानेति**। सिद्धवत्कीर्त्तनमुद्देशः। प्रतिपाद्यतया विधेयतया वा कीर्त्तनं प्रतिनिर्द्देशः।

---

१ मञ्जूषायां निरूपितम्॥ख॥ २ हर्य्यादिसंमततया॥क॥

३ "अत एव जात्यादिव्यक्त्योरिव" इति नास्ति॥ख॥ ४ इत्यनेन॥क॥ख॥

यथा "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादौ स्त्रीलिङ्गनिर्देशः॥ **तल्लिङ्गमिति** तयोर्लिङ्गमित्यर्थः॥

भाष्योक्तहेतुमुपपादयति **भिन्नेन्द्रियेति**। सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः॥ [1]**यदि च द्रव्येति** यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः। तथाहि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम्। तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः। क्रियागुणौ जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः। वैशेषिकसिद्धगुणानामपि [2]संयोगविभागादीनामपि[3] क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम्। यत्तर्हि शुक्ल इत्यादौ गुणस्य शब्दत्वशङ्कापरे वाक्ये इति शब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसंख्यादिरूपगुणसंग्रह इति न न्यूनता। ननु शब्दस्यापि गुणत्वाद्गुणो नाम स इत्युत्तरमसंगतम्। तस्य द्रव्यत्वे द्रव्यं नाम तदित्युत्तरासंगतिरिति चेन्न। उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात्। श्रोत्राग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह **अनेनैवेति**॥ [4]**गोशब्दार्थैश्चैषां सम्भवादिति**। अभेदसम्भवात्तेन तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः। यद्वा गोशब्दार्थे गुणसमूहे समूहितयैषां सम्भवादित्यर्थः। [5]शरीरव्यापारो रोमाञ्चादिः॥ **एकत्वमिति**। अनेकसमवेतत्वस्या-

१ एतत् प्रतीकादेव नागेशभट्टीयकैयटपुस्तके "च" शब्दघटितः पाठ आसीदित्यनुमितं भवति॥ २ संख्यासंयोग॥ क॥ ख॥
३ अयम् "अपि" शब्दः पुस्तकत्रयेऽप्यस्ति॥ ४ "गो" इति नास्ति॥ ख॥ ५ शारीरव्यापारः॥ क॥ ख॥

पुपलक्षणम् ॥ नित्यत्वेन संयोगनिरासः । एकत्वेन प्रत्यभिज्ञा प्रत्यक्षरूपं प्रमाणं दर्शितम् ॥ भूतशब्दप्रयोगानुपपत्तिं परिहरति सत्तारूपमिति । एवं हि इष्टवदाव [1]इत्याद्यापत्तेः । सामान्यश्रुति-सर्वसामान्यविषयत्वेन प्रवृत्तायाः सङ्कोचे कारणाभावाच्च । उपमा-कत्वस्य प्रकृतेऽनुपयोगात्तद्व्याख्याहारे गौरवाच्च नेदं युक्तं किन्तु स्वरूपवाची सः वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य प्रमाणभूतस्य स्वयं करिष्यमाणव्याख्यानरीत्याप्यापि व्याख्यानसम्भवात् । नित्यभूत इत्यपास्यस्यान्यशब्दप्रयोगः [2]सादृश्येन इति सादृश्यप्रतीतिर्नतथा सादृश्यवाचकत्वे मानमस्तीति दिक् ।

भाष्ये आकृतिर्जातिसंख्यानं [3]"ब्रवीति[4]" । आक्रियते व्यवच्छिद्यते व्याश्रयोऽनयेति व्युत्पत्तेरिति भावः । शङ्कापरभाष्ये सामान्यभूतमित्यस्य तद्व्यञ्जकञ्चेत्यप्यर्थो[5] बोध्यः । जातिमात्रपरत्वे "जात्याकृतिव्यक्तयः पदार्थः" इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात् प्रत्यक्षादौ तद्भानाच्च तस्य शब्दत्वाशङ्का तत्समाधानाभावे न्यूनता स्यात् । सिद्धे शब्दार्थेति वार्त्तिकव्याख्याने भाष्ये तस्यापि पदार्थत्वं कैयटो वक्ष्यति । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायस्तु यत्र स्वाभिन्नद्वारकस्वरूपानुगमस्तद्विषयः । यथा परम-

---

१ इत्याद्यापत्तेः ॥ क ॥ ख ॥

२ सादृश्यपर इति ॥ क ॥

३ संख्यानं च । ब्रवीतीति नास्ति ॥ क ॥ ख पुस्तके संख्यानं ब्रवीति इति नास्ति ॥

४ अयं पाठः "वालेयटाइन" मुद्रापितभाष्यपुस्तकेऽस्ति । वस्तुतो "ब्रवीति" इत्यनुमितमेव ॥

५ तद्व्यञ्जकं चेत्यर्थः ॥ क ॥

कारणकार्योपादानके परमकारणादेः । अत एव सुखदुःखयोर्नैक्यं नापि कुण्डलकटकयोस्तत्कुण्डलारम्भकसुवर्णावयवानुगमस्य कटकेऽभावात् । एवं गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेऽपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न तेषां शब्दत्वाशङ्केति भावः ॥ **पृच्छतीति** । प्रश्नविषयविशेषान्तराभावात्सामान्यरूपेण पृच्छतीत्यर्थः ॥ **भाष्ये उच्चारितेनेति** । शारीरमारुताभिहतकण्ठादिस्थानैरवयवद्वाराभिव्यक्तेन येनेत्यर्थः । अत्र [1]विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते ॥ **संप्रत्ययो** ज्ञानम् ॥ ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया येनेत्येकवचनमयुक्तम्[2] । न च वनमितिवत्समूहाभिप्रायं तत् [3]समूहस्यास्थिरस्य निरूपयितुमशक्यत्वादत आह **वैयाकरणा इति** ॥ वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं समुदायस्य वा नाद्य इत्याह **वर्णानां प्रत्येकमिति** ॥ द्वितीयमनूद्य दूषयति **आनर्थक्ये तु प्रत्येकमिति** । प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयं तत्तु न युक्तमिति शेषः ॥ यतस्तत्र नयद्वयम्[4] उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति तत्राद्यं दूषयति **उत्पत्तिपक्ष इति** । उत्पत्त्यभावादित्यस्य समुदायाभावादित्यनेनान्वयः ॥ द्वितीयं दूषयति. **अभिव्यक्तीति** । उत्पन्नाभिव्यक्तेर्ध्वंसत्वादित्यर्थः ॥ ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसह[5]कृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां [6]वाचकत्वमस्त्वत आह **एकस्मृतीति** । ननु तस्य नित्यत्वे सर्वदार्थप्रतीति-

---

१ विशेषाणाम् ॥ क ॥ विषयान्तरैः ॥ ख ॥　　२ एकवचनमप्युक्तम् ॥ क ॥

३ समूहस्य स्थिरस्य ॥ क ॥　　४ तत्र पक्षद्वयम् ॥ क ॥ तत्र नद्वयम् ॥ ख ॥

५ सहकृतां सर्ववर्णानुभवहेतुक – ॥ क ॥　　६ वाचकत्वमत आह ॥ क ॥

प्रसङ्गोऽत आह **नादेति**। नादो वर्णः॥ ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गोऽन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तादोषाभिस्तारस्तवापीत्यत आह **विस्तरेणेति**। इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदेकत्वे च प्रमाणम् अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात्। मम तु यथा पटे नानारङ्गकद्रव्यान्वितनानावर्णोपरागः क्रमेण तथैकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागस्य च स्थिरस्तस्य च मनसाग्रहणमिति न दोषः। तत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम्। एवं च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारणेन वाचकस्यैकत्वं सूचितम्। भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम्॥ नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्ययुक्तमत आह **प्रकाशितेनेति**। अभिव्यञ्जकैरिति शेषः॥ **भाष्येऽथवाप्रतीतपदार्थक इति**। लोके [1]व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः। तस्यार्थबोधकताया विचारितरमणीयस्यैव लोके सिद्धा तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम्। तदाह **अन्यच्चेति**। संयद्दादौ तपरसूत्रे भाष्ये चेत्यर्थः। ध्वनिपदेनात्र वैखरी। स्फोटपदेनाभिव्यक्तकत्वादिको[2] मध्यमावस्थ आन्तरश्शब्द उच्यते। **कथमस्येति**॥

---

१ व्यवहर्तृपदार्थबोधकत्वेन॥ख॥ २ अभिव्यक्तत्वादिकः॥क॥

पूर्वमिमश्च वर्तमानार्थकत्वादित्यर्थः ॥ भाष्ये कानि पुनः शब्दानुशासनस्येति । शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह किं सन्ध्येति । शब्दज्ञानद्वाराध्ययनस्य तज्ज्ञानप्राप्तप्रत्यवायपरिहारः फलम् उत तद्व्यतिरिक्तमपि किंचिदिति प्रश्नाशय इत्यर्थः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोऽपि तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति नवेत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानम् । नपुंसकमनपुंसकेनेत्येकशेषः । तच्चैकवद्भावस्य वैकल्पिकत्वात्पक्षे बहुवचनमुत्तरे एकवचनं बोध्यम् ॥ पुरुषार्थो धर्मो मोक्षश्च ॥ ननु शिष्टाचारसम्बन्ध एव मतान्वेदरक्षाहेतुः किं व्याकरणेनेत्यत आह लोक इति ॥ भ्राम्येदिति । भ्रमेण पाठान्तरं कल्पयेदित्यर्थः । [1]नवाचार्यवचनाद्भ्रमनिवृत्तिः अंशशस्तथा तेष्वविश्वासात् ॥ वेदार्थावगमद्वारापि व्याकरणं पुरुषार्थसाधनमित्याह वेदार्थश्चेति । एवं च वेदार्थज्ञानपूर्वकं शुद्धतत्तज्ज्योतिष्टोमादिविहितकर्मानुष्ठानेन स्वर्गस्य उपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षस्य पुरुषार्थौ व्याकरणाध्ययनस्य फलमिति भावः ॥ विकार इति । लोपस्तु न विकार इति पृथग्गणितः । भावरूप एवादेशोऽत्र विकारः ॥ हृग्रहोर्भ इति । इदञ्च गृभ्णामीत्याद्यर्थमावश्यकम् । एतेनोद्ग्राभनिग्राभौ चेत्यनेन[2] भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य इति परास्तम् । अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात् ॥ निपूर्वाद्ग्रहेर्घञ्विधायकाभावादाह उद्ग्राभनिग्राभौ चेति ॥ भाष्ये खल्वपीति नि-

---

१. नवाचार्यवचनात् ॥ क ॥ २ इत्यनेनैव ॥ ख ॥

पातसमुदायो नियमार्थः । ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः ॥ ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुम्प्रकृतिशब्दार्थमाह इहेति । यस्मिन्नाग्नेयादौ यागान्तरेण सौर्यादिना । प्रकृतिविकृत्यवगमस्तु द्विदेवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः ॥ अन्यत्र पठितमन्त्राणाङ्कथमन्यत्रगमनमत आह प्रकृतिवदिति । यथा सोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीतितदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते इतिकर्त्तव्यतायाम्भावनायास्साकाङ्क्षत्वादेतन्मूलकमेव प्रकृतिवदितीति मीमांसकसरणिः ॥ पदार्थान्तर्गतास्तु मन्त्राः तत्र अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसम्बन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमित्याह तत्राग्नेरिति ॥ मन्त्र ऊह्यत इति । यद्यप्यूहे न मन्त्रत्वन्तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणस्साङ्गत्वेति बोध्यम् । सोऽयमप्रकृत्यूहः [1]अन्येऽप्यूह्याः ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् ॥ भाष्ये लिङ्गपदञ्च प्रकृत्यादेरुपलक्षणम् ॥ [2]यथायथमिति । [3]अर्थप्रकाशनसामर्थ्यानतिक्रमणेनेत्यर्थः ॥ ननु वक्ष्यमाणागमस्य न व्याकरणफलत्वमत आह प्रवर्त्तक इति ॥ नित्यकर्मतामिति । एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम् । नित्यत्वञ्चाध्येयशेषपदार्थविशेषणीभूताध्य-

---

१ एवम् ॥ ख ॥ २ यथार्थमिति ॥ ख ॥ ३ अर्थप्रकाशनम् ॥ ख ॥

यनज्ञानयोर्बोध्यम् । अत्र ब्राह्मणेनेत्युक्तेरन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति कश्चित् ॥ **निष्कारण इति** । कारणशब्दः फलपरः ॥ ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपफलमस्त्येवेत्यत आह **इष्टमिति** ॥ अध्ययनादिमिष्टकारणानपेक्षत्वं विषय आरोप्य निष्कारणो वेद इति प्रयोगः ॥ आगमपदेन श्रुतिः श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते । यद्वा तेन प्रोक्तमिति सूत्रोक्तभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽपि अनादित्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । धर्मत्वञ्च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः ॥ षडङ्गः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाङ्गसहितो वेदः स्वशाखारूपः । अध्येय इत्यतः प्रेरणाविषयाध्ययनकर्मेति बोधः । यद्यपि तेन प्रोक्तमिति सूत्रे भाष्ये वक्ष्यमाणरीत्या वेदत्वं शब्दतदर्थोभयनिष्ठं तथापि ज्ञेय इत्यस्य सम्यगर्थबोधपर्य्यवसाय्यध्ययनङ्कार्यमित्यर्थे तात्पर्यम् अत एव समानमीहमानानामधीयानानाञ्च केचिदर्थैर्युज्यन्ते केचिन्नेति वक्ष्यति भाष्यकृत् । अध्ययनतथाज्ञानयोश्च समुच्चयः । अनेनातादृशस्याधर्मत्वं सूचयति श्रुत्या मिलितस्यैव धर्मत्वबोधनात् । तथा च व्यासः । "वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः । कुर्वन् स्वर्गमवाप्नोति नरकन्तु विपर्यये" इति । जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् । ज्ञाधातोश्च ज्ञानानुकूलो मनः प्रणिधानविषयेन्द्रियसंयोगसम्पादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् एतेन ज्ञानस्याविधेयत्वादिदश्चिन्त्यमित्यपास्तम् ॥ ननु गुणानाम्परस्परसम्बन्धाभा-

वात् षडङ्गेषु प्रधानमित्यनुपपन्नमत आह **पद्वेति**। एवञ्च वेदार्थ-ज्ञाने व्याकरणप्रधानङ्कारणमिति भावः॥ **भाष्ये प्रधाने कृतो यत्न इति**। प्रधानविषये निर्वृत्त इत्यर्थः। अन्यथा यत्नविषय-कृतेरसम्भवादसङ्गतिः स्पष्टैव॥ [1]भाष्ये च फलवानित्यत्र फलपदेन वाक्यार्थावगमो विवक्षितः। एतच्छास्त्रञ्च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम्। एवञ्च व्याकरणानध्ययनप्रयु-क्तस्य वेदार्थाज्ञानप्रयुक्तस्य च [2]प्रत्यवायस्य परिहारकतयास्य नित्य-त्वमिति बोध्यम्॥ अवश्यमित्यनेन विवक्षितं दर्शयति **अध्याप-नमिति**। लाघवञ्च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वा-ख्यानस्य विवक्षितम्॥ नन्वसन्देहस्सन्देहाभावः स च नात्यन्ताभा-वस्तस्य नित्यत्वात्। न च ध्वंसः तत्तद्विषयकव्याकरणज्ञानवतस्सन्दे-हस्यैवाभावेन तदसम्भवात्। यस्य त्वधीतव्याकरणस्यापि क्वचित्स-न्देहः स तद्विषयकवैयाकरणत्वाभाववानेव। वेदनार्थे हि तत्र प्रत्ययोऽत आह **प्रागभाव इति**। तत्परिपालनञ्च शास्त्राध्यय-नफलं न तु स्वरूपं तस्याजन्यत्वात् तत्पालनञ्च प्रतियोगिजनकका-रणविध्वंसनं प्रागभावस्य प्रतियोगिजन्य[3]नाश्यत्वादिति बोध्यम्॥ **भाष्ये याज्ञिकाः पठन्तीति**। यज्ञकाण्डभवा वैदिकाः शब्दा याज्ञिकास्ते पठन्तीत्यर्थः। ऋषिः पठति शृणोत ग्रावाण इति-वत्प्रयोगः। तत्र ऋषिर्वेदः। सम्सूत्रे भाष्ये एष प्रयोगः॥ **ताम् अनड्वाहीम्**॥ कस्तर्हि निश्चयस्तत्राह [4]**पूर्वपदस्येति**॥ नन्वत्रे-

---

१ भाष्ये च इति तु नास्ति॥ क॥ ख॥  २ "प्रयुक्तस्य च प्रत्यवायस्य" इति नास्ति॥ ख॥  ३ अन्यनाश्यत्वात्॥ क॥  ४ पूर्वपदेति॥ ख॥

च्छत्वादीनाम् मङ्गलाद्यङ्गनामनुग्रहो न्याय्य इति प्रथमतोऽभिधान-युँक्तमत आह **मुख्यानीति** । प्रधानत्वादेव तेषां प्रथमतोऽभि-धानमिति भावः । तेषां प्रधानत्वञ्च पदपदार्थज्ञानाधीनत्वेनान्तर-ङ्गत्वात् । वक्ष्यमाणानाञ्च बहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधवि-षयत्वादानुषङ्गिकत्वम्बोध्यम् ॥ ननु भूय इत्येकवचनमनुपपन्नं प्रयो-जनानीत्यनेन सामानाधिकरण्यादत आह **पुनरिति** ॥ **इमा-नि चेति** । चस्समुच्चये ॥ **भाष्ये प्रयोजनानीति** । प्रवर्त्त-कानि फलानि चेत्यर्थः । तत्र वक्ष्यमाणवाक्यानि प्रवर्त्तकानि तद्बो-ध्यानि फलानीति विवेकः ॥ ननु रक्षादिभिः [1]सहैवैतानि कुतो न पठितानीत्यत आह **आनुषङ्गिकत्वादिति** । एषामानुषङ्गि-कत्वं तेषां प्रधानत्वम्बोधयितुन्तथोक्तिरिति भावः ॥ ननु पराबभूवु-स्तस्मादुब्राह्मणेनेति श्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः परा-भूता माऽभूमेत्यध्येयमिति वक्तुमुचितमत आह **निन्दार्थवादेनेति** । द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादितिन्यायेन यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यादावपापश्लोक-श्रवणस्य प्राशस्त्यमात्रपरत्ववदस्य निन्दामात्रपरत्वादिति भावः । प्रकरणाच्च [3]क्रत्वर्थोऽयन्निषेधः ॥ **केचिदाहुरिति** । अत्राहुश्चिवी-वन्तु सर्वः सुतस्याद्ध्यमनिच्छता विभाषा कर्त्तव्य इति ॥ **यदेति** । सर्वस्य द्वे इत्यत्र पदग्रहणस्य वार्त्तिककृतोक्तत्वादिति भावः ॥ ननु

---

१ सहैतानि ॥ ख ॥ २ भाषणफलत्वावगतेः ॥ ख ॥

३ यद्यप्युपलब्ध पुस्तकेषु "क्रत्वङ्गोऽयमि"त्यस्ति तथाप्यङ्गशब्दस्य नित्यनपुं-सकत्वात् मञ्जूषाद्यावर्धाङ्कृतेश्च "क्रत्वर्थोऽयमि"ति पाठः स्थापितः ॥

नेदं हितं किन्त्वैच्छिकः पुनः प्रयोगोऽत आह सत्यश्चेति। न म्लेच्छितवै इत्येतन्म्लेच्छभाषा[1]विषयमिति भ्रमनिवृत्त्यर्थं तद्विवरण-मपभाषितवै इति॥ तवै इति प्रसिद्धौ। अपशब्दत्वं व्याकरणानुगतशब्दभेदेष्वंशेन एव प्रसिद्धमिति भावः। ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा स कथमपशब्दोऽत आह घञिति। निन्दावचनाद् म्लेच्छतेरिति भावः। निन्दा च शास्त्र-बोधितविपरीतोच्चारणेन पापसाधनत्वात्। एवञ्च म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक्॥ अथर्वनामत्वात्तयोऽप्राप्तेराह स्वरेणेति आद्यादित्वादिति च॥ तमित्यस्य यच्छब्दापेक्षितत्वादाह यदर्थेति। मिथ्याप्रयुक्त इत्यस्य विवरणन्ततोऽर्थान्तरमिति। [2]न केवलन्तदर्थमेव नाहेत्येतावत् किन्तु प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह वागेवेति। यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्प-त्तिरेवन्तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः। तत्र दृष्टान्तमाह यथेति इन्द्रेणेति। हेतौ तृतीया फलमपीह हेतुः॥ मन्त्र इति।। न चोहितस्य कथं मन्त्रत्वमिति वाच्यम् मन्त्रश-ब्दस्य बोधकपरत्वात्। अत एव मन्त्रोहीनः स्वरत इति प्रसिद्ध-मपि शिक्षापाठं विहाय भाष्ये दुष्टश्शब्द इति पठितं तत्रत्यमन्त्र-शब्दस्य शब्दमात्रपरतेति सूचयितुम्॥ शत्रुशब्दस्यामित्रपर्य्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह तथेन्द्रस्येति। शदेर्णन्ता-दौणादिकः क्रुन् प्रज्ञादिगणे निपातनाद्ध्रस्वत्वम्। शमेस्तु तत्त्वम्॥

---

१ म्लेच्छभाषणाविषयम्॥ ख॥  २ न केवलं तमर्थं नाहेति॥ क॥ ख॥

[1]सम्बोधनविभक्त्यभावाचाह [2]इन्द्रशत्रुत्वस्येति। नन्वत्र यज्ञकर्मणीत्येकश्रुतौ प्राप्तायाम्पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम्। न च तथैवास्तु शतपथब्राह्मणतद्भाष्यविरोधात् तत्रह्याद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमन्यत्रैकश्रुत्यवादेऽत आह उह्यमानस्य चेति। तदुक्तमनाम्नातेष्वमन्त्रत्वमिति न चाप्यामन्त्रत्वे लौकिकशब्देन क्रियमाणस्य कर्मणः कथम्फलजनकत्वमिति वाच्यम्। सूर्यायत्वेत्यादेर्लौकिकघटितस्य ऊहविधायकशास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः॥ नन्वधीतमविज्ञातमिति विरुद्धमत आह अविदितेति। शुष्कैध इति समासलौवैधशब्देनादन्तपुल्लिङ्गेन वा निर्वाह्यम्। निरुक्ते तु यद्गृहीतमविज्ञातमिति पठ्यते तत्र गृहीतं शब्दतः अविज्ञातमर्थत इति बोध्यम्॥ भाष्ये तस्मादनर्थकमिति। अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनानौचित्येन निष्प्रयोजनमाध्येयमिति निषेधकल्पनादिति भावः। अतो [3]निषिद्धमध्ययनं माभूदिति व्याकरणमध्येयमिति तात्पर्य्यम्॥ एकः पूर्वपरयोरित्यत्र भाष्ये पठितैकशब्द इत्यादिश्रुतिमूलकमाह भाष्ये यस्त्विति। अभ्युदयहेतुत्वम् अदृष्टद्वारा पुरुषार्थसाधनत्वम्॥ कुशलोऽधीतव्याकरणः। लक्षणस्मरणपूर्वकं यः प्रयुङ्क्ते इति फलति॥ विशेष इति। अर्थविशेष इत्यर्थः। तदाह स एवेति। साधर्म्यात्। साधर्म्यमूलकादभेदारोपात्॥ भाष्ये यथावत्। अन्यूनतादिदोषरहितम्।

---

१ सम्बोधनविभक्त्यभावमाह॥क॥ २ शत्रुत्वस्येति॥ख॥

३ निषिद्धा॥क॥ निषिद्धमाभूदिति व्याकरणम्॥ख॥

साधो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वन्तद्वेत्तीति वाग्योगवित्॥ अशक्त्वादिति। एकच अथाग्निदोषयोस्तकारेण समुच्चयप्रतिपादनार्थेत्यपि बोध्यम्॥ दोषदर्शनादिति। शास्त्रस्याधर्महेतुत्वं दोष इत्यर्थः॥ वादिप्रतिवादिपूर्वपक्षोत्तरपरतया व्याख्यानेऽसामञ्जस्यमत्वाह प्रष्टैवेति॥ भाष्ये कुत एतदिति। वाग्योगविदो दोषः कुत इत्यर्थः॥ ननु साधुज्ञानस्य [1]धर्मजनकता यथा शास्त्रोक्ता न तथाऽसाधुज्ञानस्याधर्मजनकता शास्त्रोक्तेत्यत आह यथेति। एवञ्चापशब्दज्ञानमधर्मसाधनन्धर्महेतुशब्दज्ञानविरोधित्वात्। यद्यद्विरोधि तत्तद्विरोधिफलकं यथा सैन्धिकद्रव्यसेवेत्यनुमानप्रमाणमिति भावः। एवञ्च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्नस्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्यम्॥ नन्वस्त्वधर्मोऽपि तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह भाष्येऽथवेति॥ अङ्गभूयस्त्वादिति। अङ्गानाम्धर्मजनकानाम्भूयस्त्वादित्यर्थः। एवञ्च यज्ञादेः पापजनकत्वेऽप्यधिकधर्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीति भावः॥ अल्पीयांसः शब्दा इति। एवञ्च स्वकृतिप्रक्षिप्तक्षीरवदनुपादेयत्वाद्विज्ञानमिति भावः॥ नन्वेवं सामर्थ्यादवाग्योगविदेव दुष्यतीत्यत्र कस्मात्तत आह भाष्येऽथयोऽवाग्योगविदिति॥ अत्यन्तमित्यर्थेऽत्यन्तायेत्यव्ययम्॥ पुरुषाणामिति। मनुष्याणामित्यर्थः। तिरश्चामत्यन्तायोग्यत्वादस्त्वज्ञानं शरणं मनुष्याणान्तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयमतोऽवा-

[1] यथा धर्मजनकता॥ क॥ ख॥

ग्योगविदो महाननर्थ इति भावः। तच नात्यन्तायेत्यनेन शास्त्रा-ज्ञानस्यैव शरणान्दोषद्वयप्रसङ्गात् किन्तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापास्पदे प्रयोजकमिति ध्वनितम्। भाष्ये यो ह्यजानन्निति। निषेधशास्त्रमजानन्ब्राह्मणत्वादिज्ञानपूर्वकन्तद्वधादिकुर्य्यात् सोऽपि पतित एवेत्यर्थः॥ प्रकरणादिति। सन्निधेरित्यर्थः। नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्मस्स्यादत आह वाग्योगेति। एव-ञ्चापशब्दप्रयोग एवाधर्महेतुर्न ज्ञानमात्रमिति [1]न दोष इति भावः॥ भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः॥

भाष्ये किञ्चात इति। अतः शास्त्रात्किं विवक्षितमित्यर्थः। उदुम्बरं ताम्रम्॥ दुष्टत्वमिति। इदमुपलक्षणम् [2]अन्यथा-प्यदुष्टत्वस्य॥ ननु कर्त्तरिक्तान्तप्रमत्तशब्दस्य गीतशब्देन समासो-ऽनुपपन्नः तच भवत इत्यनेन साकाङ्क्षत्वादत आह प्रमादेनेति। भावे क्तान्त इति भावः। विप्रतिपन्नत्वेन वेदविषयविप्रतिपत्त्याश्रय-त्वेन तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य तथोक्तिरिति स न प्रमाणमिति भावः॥ भाष्ये यस्त्वप्रमादेन गीतो यस्य कस्यापि [3]तत्प्रमाणमितिप्रतिनिर्द्दिश्यलिङ्गम्॥ ननु कथञ्ज्ञातमयमप्रमत्तगीत इत्यत आह श्रुतिरनुग्राहिकेति॥ भाष्येऽविद्वांस इति। अत्र योग्यत्वाद्व्याकरणकर्म बोध्यम्। प्रत्यभिवादेऽ[4]भिवादानन्तरप्रयोज्याशीर्वादवचने नाम्नोऽभिवादक-

१ "न दोष इति" इति नास्ति॥ ख॥  २ अन्यथादुष्टत्वस्य॥ ख॥

३ "तत्प्रमाणमिति प्रतिनिर्द्दिश्यलिङ्गम्" इति पुस्तकत्रयेऽप्यस्ति। शुद्धन्त एवतु उचितः। उद्देश्यप्रतिनिर्द्देश्ययोरिति शेखरे दर्शनात्॥

४ अभिवादानन्तरप्रयोज्ये वचने॥ क॥ ख॥

नाश्चेः [1]ह्रुतिङन्तं ये न जानन्ति तेषु काममविशङ्कं विप्रोष्य प्रवासादेत्य यदा कामं विध्यनुसारमन्तरैवेत्यर्थः॥ अयमहमित्यनुकरणस्यानितिपरत्वेऽपि ङ्योगाभावाद्गतिलाभावेन वदेदित्यस्य तिङन्तत्वेन च समासाभाव इत्याहुः॥

अत्र कश्चिदयमहमिति वदेत् अनुकरणस्यानितिपरमिति गतित्वात्समास इति पाठो दृश्यते सोऽपपाठः॥ [2]भाष्ये स्त्रीवदिति। तदुच्चारणेन[3] ग्रास्त्राज्ञानिलक्षतापमानप्रयुक्तदुःखभाजो माभूमेति भावः॥ ननु प्रकृतौ प्रयाजमन्त्रास्सविभक्तिका एव पठ्यन्ते तत्किमनेन वचनेनेत्यत आह प्रयाजेति। ऊह्यमाना याऽग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः॥ नन्वग्निशब्दप्रकृतिकेत्ययुक्तम् अपूर्वविभक्तिमात्रविधाने न केवलः प्रत्यय इति निषेधात्। यत्किञ्चित्प्रातिपदिकप्रकृतिकास्सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोतीति चेन्न लमग्ने प्रयाजानुयाजानाम्पुरस्तात्त्वस्यादिति मन्त्रवर्णनाग्निशब्दप्रकृतिका एव ता इत्याशयात् तत्राग्नेर्देवताया एकत्वादेकवचनमेव विभक्तयस्त प्रथमाद्वितीयातृतीयाषष्ठीसप्तम्य एवेति श्रौतसम्प्रदायः॥

व्यञ्जनसहित इति। यथा ये यजामह इति पञ्चाक्षरमिति वर्णश्चाहुः पूर्वसूत्र इति भाष्याद्वर्णमात्रमित्यन्ये॥

सकृत्प्रयुक्तात्लिङ्गीनशब्दस्योभयपरत्वे युक्तिमाह विद्वानिति। वेदार्थज्ञ इत्यर्थः॥ चत्वारीति। चक्रन्तः॥ शब्दस्येति।

---

१ ह्रुतं कर्तुम्॥ ख॥ २ "भाष्ये" इति नास्ति॥ ख॥

३ सूचित इत्यधिकम्॥ क॥ ख॥

शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः। वृषभाकारश्शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति महान्देवः अन्तर्यामिरूपः शब्दो मर्त्याँ आविवेश स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम्। महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत्॥ भाष्ये पदजातानि। परापश्यन्तीमध्यमावैखरीरूपाणि। अत एवाग्रे निपाताश्चेतिचकारः सङ्गच्छते॥ नामाख्यातेति। नामशब्देन सुबन्तम्। नमत्याख्यातार्थम्प्रति विशेषणीभवतीति व्युत्पत्तेः। आख्यातं तिङन्तम्। उपसर्गनिपातयोः पृथगुपादानङ्गोबलीवर्दन्यायेन॥ व्यङ्ग्य आन्तरः॥ व्यञ्जकः वैखरीरूपः॥ तिङ्विभक्तीनां षट्त्वादाह सुप इति॥ सहशेषेणेति। शेषः षष्ठ्यर्थः तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि सङ्ग्रह इति भावः॥ भाष्ये उरसीत्यादि। "हकारम्पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् उरस्यन्तं विजानीयात्"। मूर्द्धन्या ऋटुरषा इत्युक्तः। मूर्द्धैव शिरः कण्ठ इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते॥ ननु वर्षति मूत्रेण भूमिं सिञ्चतीति वृषभ इत्युच्यते, तत्कथं शब्द एवमित्यत आह कामानामिति। मेघ उदकमिवोक्तचतुःशृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकप्रयोगेण कामानान्दानादित्यर्थः। द्विशृङ्गद्विपाद्द्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः॥ किं रोरवीति तत्राह भाष्ये महान्देव इत्यादि। महान्परब्रह्मस्वरूपो देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः। तदावेशफलमाह महता देवेनेति॥ साम्यं सायुज्यम्। तदुक्तं हरिणा। अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।

**प्राहुर्महान्तं वृषभं येन सायुज्यमिष्यते ॥** आह च "चत्वारि शृङ्गा त्रयो अस्य पादा" इत्यादि ऋड्मन्त्रः। इह द्वौ शब्दात्मानौ कार्यो नित्यश्च तत्राद्यस्सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योगविद् शास्त्रजशब्दज्ञानपूर्वकप्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीनत्यन्तं संसृज्यते इति तदर्थं तद्व्याख्यातारः ॥ **एतावन्त्येवेति।** वाक्परिमितानीति षष्ठीतत्पुरुषः। पदजातानि परापश्यन्तीमध्यमावैखर्य्यः। नामादीनि च नामादिमध्ये च एकैकं चतुष्पादम् ॥ **भाष्ये मनस ईषिणः।** चित्तशुद्धिक्रमेण वशीकर्त्तारो विषयान्तरेभ्यो व्यावृत्त्याहिंसका वा ते च वैयाकरणा अन्येषां तद्ज्ञाने हेतुमाह **गुहेति।** एकैकस्य नामादिरूपस्य चतुर्थं भागम् एकैकस्य चतुरंशत्वात् परादीनां वा त्रयोऽंशा मध्यमान्ताः। गुहा अज्ञानं हृदयादिरूपा च वैयाकरणास्तु शास्त्रबलेन तद्बलप्रयोगेन च गुहान्धकारं [1]विदार्य सर्वं जानातीति भावः ॥ **नं निमिषन्तीति।** ज्ञानसामान्यविषयलाभाव उच्यतें ॥ **भाष्ये यन्मनुष्येषु वर्तते [2] इति।** ज्ञानविषयतया तद्वाचस्तुर्थमित्यन्वयः। तस्मात्सकलपदज्ञानाय मनीषित्वाय वाध्येयं व्याकरणमिति शेषः॥ हरिरप्याह **वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्। अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥** तत्र श्रोत्रविषया वैखरी मध्यमा हृदयदेशस्था पदप्रत्ययानुपपत्त्या व्यवहारकारणम् पश्यन्ती तु लोकव्यवहारातीता योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति परायां तु

---

१ विहाय सर्वं जानाति ॥ ख ॥ २ "इति" इति नास्ति ॥ ख ॥

मेति चव्या इत्युक्तम् । "स्वरूपज्योतिरेवान्तः परावागनपायिनी । तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तत" इत्युक्तेः । अनेकतीर्थभेदाया नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः । आह खल्वपि "चत्वारि वाक्परिमितानी"ति चक्षन्त इति तद्व्याख्यातारः ॥ **उतत्व इति** । उतशब्दोऽप्यर्थे बहूनामपि समानदृष्टोदरपाणिपादानां[1]मध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि सन् न पश्यति अर्थानभिज्ञत्वात् । अर्थपरिज्ञानफला हि वागित्यभिप्रायः । एवमेकः शृण्वन्नपि न शृणोत्येनां वाचं य एवन्त्वर्थं सम्यगवबुध्यते तेनैव हि सा सम्यक् श्रुता भवति ॥ एवमर्द्धेनाविद्वांसंनिन्दित्वार्द्धान्तरेण विद्वांसं स्तौति । **उतो त्वस्मै** । अप्येकस्मै कस्मैचिद्वैयाकरणाय [2]तन्वं शरीरं [3]विवृणोति प्रकाशयति सम्यग्ज्ञानं हि प्रकाशनमर्थस्य अर्थो हि वाचश्शरीरम् । अथोपमायुक्तयोत्तमया वाचान्त्यपादेन तमेव स्तौति यथा जाया विवृतसर्वाङ्गावयवाभूत्वोशती कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानम् । कस्मिन् काले यदा सुवासा निर्णिक्तवासा नीरजस्का ऋतुकालेषु तदा ह्यतितमां स्त्री पुरुषं प्रार्थयते । यथा तत्पुरुषस्तां यथावत्पश्यति शृणोति च तद्वचनार्थं नान्यदा घनपटप्रावृतशरीराम् एवं स एवैनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विश्लिष्टार्थमस्याः पश्यति शृणोति चेत्यर्थः । अयमर्थो निरुक्ततद्भाष्ययोस्स्पष्टः ॥ **भाष्ये वाग्विदे** । वैयाकरणाय ॥ **भाष्ये सक्तु-**

१ "अध्ययनम्" इति पुस्तकत्रयेऽप्यस्ति ॥ २ तत्त्वम् ॥ ख ॥
३ विसखे इत्यधिकम् ॥ ख ॥

**मिवेति**। यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणकज्ञानेन वाचमकृतायुक्षत असाधुभ्यो विविक्तां कृतवन्तः ते तत्करणेन शुद्धचित्ता अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः समानख्यातयः समानज्ञानाः तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः। यत एषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अधि अधिकं निहिता स्थिता भवतीति ऋगर्थः। **सचतेर्दुर्धाव इति**। यतस्सचतेरतो दुःशोध्यार्थप्रतिपादको भवतीत्यर्थः।[*] तितउशब्द इत एव भाष्यान्नपुंसकः। "चालनी तितउः पुमानि"तिकोशात्पुंल्लिङ्गोऽपि॥ **विस्तारेति**। तनोतेर्डउः सन्वच्चेति व्युत्पत्तेरिति भावः॥ **तुन्नेति**। तुदधातोः कर्मणि डउः सन्वच्चेति भावः। ध्यानं ज्ञातार्थभावनम्। मनसेति व्यापारपरं तदाह **प्रज्ञानेनेति॥ भाष्ये क्वेति**। किन्त्वद्यत्र सायुज्यानि प्राप्नुवन्तीति प्रश्नः॥ **उत्तरयति य एष इति**। दुर्गमार्गप्राप्यत्वात् दुर्गमार्गत्वोपचारः। दुर्गत्वमेवाह **एकेति॥ ज्ञानेनैवेति**। निर्विकल्पकज्ञानेनैवेत्यर्थः। अत एव दुर्गत्वम्। "नान्यः पन्था" इति श्रुतेरिति भावः॥ **भाष्ये वाग्विषय इति**[१]**च्छेदः**। अत एव श्रवणोपपत्तिः। वाग्वेदरूपात्र॥

१ छेद इति नास्ति॥ ख॥ वस्तुतः "छेदः" इति पाठ उत्तरग्रन्थस्य श्रावणप्रत्यक्षोपपत्तिपरत्वभ्रान्तिमता केनचित् संनिवेशितोऽनुचित एव॥ उत्तरग्रन्थस्य तु "अतएव" वाग्विषयत्वादेव। "श्रवणोपपत्तिः"। "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति श्रुत्युक्तस्य श्रवणस्योपपत्तिरित्यर्थः। "यतो वाचो निवर्त्तन्ते" इति वागविषयत्वोक्तिस्तु फलव्याप्यत्वनिवृत्त्यभिप्रायिकेति तात्पर्यम्। तदुक्तं पञ्चदश्यां "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्" इति॥

**वेदान्तेष्विति**। सत्यञ्ज्ञानमित्यादिषु। **परमार्थसंविल्लक्षणा** परमार्थब्रह्ममात्रविषयज्ञानविषयाखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः। सर्वोऽपि वेदस्तेषाम् ब्रह्मपरः। "वेदैश्च सर्वैरहमेव वेद्य" इत्युक्तेरिति भावः। अयम्भावः ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक्कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र य एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह समानख्यातयस्त्यक्तभेदभावनाः सख्यानि सायुज्यानि प्राप्नुवते यत एषां वाचि वेदाख्ये ब्रह्मणि भद्रा लक्ष्मीः सर्वभासकब्रह्मरूपा सा अधि अधिकन्निहिता भवति एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूपवैखरीरूपरूषितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्ग्रहात् एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायान्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानामिति। यत्तु पदपदार्थवाक्यार्थमर्यादया सत्यमित्यादितस्तेषान्तद्बोधात्सातेषां वाचि निहितेति तन्न "यतो वाचो निवर्त्तन्ते अप्राप्यमनसा सहे"ति श्रुत्या ब्रह्मणस्तन्मर्यादया शब्दाबोध्यत्वोक्तेः। तत्र हि अप्राप्येत्यस्य सम्बन्धज्ञानेऽविषयीभूयासम्बन्ध्य चेत्यर्थः। आद्यं शब्देऽन्त्यम्मनसि शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य "दृश्यते त्वग्र्ययाबुद्ध्ये"ति श्रुत्यन्तरात्। न तु पदपदार्थमर्यादयेति बोध्यम्॥ **लक्षणादित्यस्य** व्याख्या **भासनादिति परिदृढा** अज्ञाननिवर्त्तनेन प्रभ्वी एते च मन्त्राः सर्वानुक्रमेऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्यका अपीति बोध्यम्॥ **चत्वारीत्यादि**

त्वक् चतुष्टयं व्याकरणस्य मोक्षजनकत्वम्प्रतिपादयति ॥ **भवार्थ इति।** प्रायश्चित्तसाधनत्वेन तद्बलम् ॥

**पञ्चमीतियोगविभागादिति।** सुप्सुपेति तु युक्तम् ॥ ननु दशम्यामुत्तरस्येति प्रयोजनस्वरूपगणने भाष्ये उक्तम्। गृह्येऽपि तथैव पद्यते अतो दशम्युत्तरकालमित्ययुक्तमत आह **तैरपीति ॥ शिक्षायामिति।** ते च दश:। अन्तरन्तस्था यस्येत्यर्थः ॥ **त्रिपुरुषानूकम्।** त्रिपुरुषशब्दे द्विगुः मूलविभुजादित्वात्कः ॥ **भाष्येऽनरीति।** अमनुष्येऽरिभिन्ने इतिवार्थः ॥ **सत्यदेव इति।** [1]वरुणे यथा सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दस्तथान्येष्वपीत्यर्थः। यस्येति पञ्चमीस्थाने षष्ठी यस्मात्ते काकुदन्तालु प्राप्य भिन्नवस्त्वप्रसमुद्ररूपाः सप्त विभक्तयोऽनुचरन्ति प्रकाशन्ते इत्यर्थः ॥ **अनेकार्थत्वादिति।** वदेरधिकरणे घञर्थे [2]इति कः [3]शकन्ध्वादित्वात्पररूपम् पृषोदरादित्वादेकस्योकारस्य लोपः। तुदेर्वाधिकरणे कः पृषोदरादित्वाल्लोपः ॥ **सूर्मिं।** शोभनामयः प्रतिमाम्। **सुषिराम्** ऊषसुषीति रप्रत्ययेन सच्छिद्राम्अविशाऽग्निर्यथा तत्रत्यं मलम्भस्मीकृत्य प्रतिमां शुद्धाङ्करोति एवन्तालुदेशे प्रकाशम्प्राप्य [4]विभक्त्यन्ताश्शब्दाश्शारीरम्पापमपाकुर्वन्तीत्यर्थः। अनेन स्वर्गप्राप्तिः फलमित्युक्तम् ॥ **एवन्तर्हीति।** वेदातिरिक्तविषय एव प्रयोजनान्याख्यानमतु वेदविषय इत्येवं रूपं विषयविभागम्। तृतीयस्य प्रश्न

---

१ डक्टर वालेयटाइन मुद्रितपुस्तके "वरुणाः" इति प्रथमान्तपाठो दृश्यते परन्तु स आपातपतित इति मन्ये "अन्येष्वपि" इति उपमेये सप्तमी दर्शनात् ॥ २ "इति" इति नास्ति ॥ ख ॥

३ शकन्ध्वादित्वात्पररूपम् ॥ क ॥ ४ विभक्त्य इत्यधिकम् ॥ क ॥ ख ॥

इत्यन्ये॥ किञ्चित्पदार्थमाह **वेदमपीति**। शेषपूरणमन्यत् किन्त-त्किञ्चिदित्याकाङ्क्षायाम्भाष्ये **ओमित्युक्तेति**। पठन्तीत्यनन्तरमे-तेभ्योऽपीतिशेषः। एवञ्च वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयो-जनङ्किम्मिति नान्वाख्यायते इति प्रश्नः। वेदाध्ययनवद्व्याकरणाध्य-यनमपि प्रयोजनमन्तरैव करिष्यन्तीति प्रयोजनविचारो व्यर्थ इति तात्पर्यम्॥ नन्वोमित्यधिकमित्याह **अभ्युपगम्येति**। विनैव प्रयोजनज्ञानमिति शेषः॥ भाष्ये उत्तरमाह **पुराकल्प इति**। युगान्तरे इत्यर्थः॥ **संस्कार** उपनयनम्॥ **करणम्** आभ्यन्तर-प्रयत्नः॥ **अनुप्रदानन्ना**दादिर्वाह्यप्रयत्नः। तेनाधीतव्याकरण-शिष्येभ्य इत्यर्थः। ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जा-नन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनम्पृ-च्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम्॥ **न तथेति**। किन्तु विपरीतमित्यर्थः॥ भाष्ये आचार्यपदेन शास्त्रा-ध्यापको भाष्यकृदेव विवक्षितः॥ **इदं शास्त्रमिति**। प्रयोजना-न्वाख्यानमित्यर्थः॥ **भाष्ये उक्तश्शब्द इति**। 'लौकिकानाञ्चे-त्यनेन विषयभूतश्शब्द उक्त इत्यर्थः॥ **स्वरूपमपीति**। अथ गौरित्यादिना अयमुपसंहारो ग्रन्थस्य विषयप्रयोजननिरूपणमेता-वता कृतमिति बोधयितुम् तेनैव सम्बन्धाधिकारिणावुक्ताविति [1]पृथङ्नोक्तौ॥ किं यत्तद्भ्योऽन्यच्च इतराभावादाह **अन्यतरान्येति**। तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोऽनुवादः अपशब्दोपदेशस्तु प्रयोग-प्रतिषेधार्थः॥ पञ्चपञ्चनखा इत्यस्य नियमत्वन्दर्शयति। **अर्थित्वा-**

---

१ तौ इत्यधिकम्॥ क॥ ख॥

दिति। नियम्यमानम् पुनः शब्देन बोध्यमानमित्यर्थः। ननु परिसङ्ख्यात्वात्कथन्नियमत्वेन व्यवहारोऽस्ति च नियमपरिसङ्ख्ययोर्भेदः पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः। अन्यनिवृत्तिफला च परिसङ्ख्येति चेन्न नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वारा-ऽऽर्थान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्योक्तेः॥ विधिरिति। अपूर्व-विधिरित्यर्थः। येतु पञ्चपदस्य तदतिरिक्ते लक्षणा भक्ष्यपदस्य-चाभक्ष्ये चेति वदन्ति तेषाम्पदद्वये लक्षणागौरवम् अस्यैव नियम-त्वेन [१]भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यत इति भाष्यविरोधश्च नि-यमपदस्य तद्बोधके लक्षणायां चैव दोषः। अक्षराक्षारस्यञ्च निय-म्यमानभक्षणं सामर्थ्यादन्येभ्यो निवर्त्तत इति कैयटासङ्गतिश्च दृष्टा-न्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च अन्यनिवृत्तिफला परिसङ्ख्येति अभियुक्तोक्तिविरोधश्च सिद्धस्य पुनर्विधानात्मापकप्रमाणस्य तदि-तराविषयत्वरूपसङ्कोचकल्पनन्तेनान्येषाम्भक्षणाभावः तद्भक्षणे प्राय-श्चित्तञ्च सिद्ध्यति। एवं समभिव्याहारे सोऽपि स्फुटमस्यार्थस्यैव द्योतको-ऽन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलित-मर्थमादाय नेयम्। भक्ष्यनियम इति भक्ष्यानुमतिरूप उप-देश इत्यर्थः। भाष्ये प्रतिपत्तावित्यस्योपायभूत इति शेषः॥ अनभ्युपाय इति। तत्त्वज्ञाशक्यत्वेन कृत्स्नाभिमतानभ्युपायत्वात्॥ तत्रार्थवादमाह बृहस्पतिरिति॥ ननु शब्दानामिति पुनरुक्त-मत आह योगरूढ इति॥ अर्थपौनरुक्त्यमाशङ्क्य निराकरोति तत्रेति॥ ननु यावदेवाध्येष्यते तावदेवाभ्युपयुक्तं स्यादत आह

---

[१] भक्ष्यनियमत्वेन॥ क॥

भाष्ये **चतुर्भिरिति** ॥ उक्तमेव तदाशयमाह **एकदेशेत्यादि** । विद्योपयोगाधारभूतानाङ्कालानां विद्याप्रत्ययाधारत्वात्तस्य च करणत्वविवक्षा बोध्या चतुर्षु कालेषु विद्योपयुज्यते इति फलितोऽर्थः । तत्राद्ययोर्विद्यार्थ्ययम्बुद्धिमानित्यादरपूर्वकमन्नवस्त्रादिलाभरूपोपयोगः । तृतीये प्रतिष्ठा सच्छिष्यलाभद्वारार्थप्राप्तिः सत्कारविशेषश्च । चतुर्थे यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः कर्मसाङ्गता दक्षिणालाभः प्रतिष्ठाचेत्युपयोगः तादृशस्योपयोगस्सर्वाध्ययन एव ॥ **भाष्ये पर्युपयुक्तमिति** । समाप्तमित्यर्थः । पर्यवसन्नमिति पाठान्तरम् । न चेष्टापत्तिः विद्योच्छेदापत्तेः । कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च । ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह **सामान्यविशेषाविति** । लक्षणं शास्त्रमित्यर्थः ॥ **भाष्ये कथञ्जातीयक इति** । केन प्रकारेणेत्यर्थः । एतेनैवञ्जातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम् ॥ **आकृतिपक्ष इति** । तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ विप्रतिषेधे परमिति विध्यर्थन्तु नियमार्थमिति सकृद्गताविति न सिध्यति व्यक्तौ तु [1]तद्व्यक्तिविषययोरपि[2] शास्त्रयोरचारितार्थ्यात्पर्यायेणोभयप्राप्तौ नियमार्थन्तदिति पुनः प्रसङ्गेत्यादि न सिद्ध्यतीत्यर्थः । [3]इदञ्च विप्रतिषेधसूत्रे[4]निरूपयिष्यते ॥ **तस्याम्प्रतीता-**

---

१ तत्तद्व्यक्ति ॥ क ॥ २ "विषययोरपि" इति नास्ति ॥ ख ॥

३ "इदञ्च विप्रतिषेधसूत्रे निरूपयिष्यते" इति नास्ति ॥ ख ॥

४ दूषयिष्यते ॥ क ॥

**यामिति।** शब्दशक्यत्वेन गृहीतायामित्यर्थः। एवमभिदधती-त्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः। तद्भावेशास्तत्समवायात्॥ **प्रतीयत इति।** अविनाभावाच्छब्दजन्यबोधविषयो भवतीत्यर्थः। प्रत्ययो ज्ञानम्॥ **उपलक्षणभावेनेति।** शक्यतावच्छेदकत्वे-नेत्यर्थः। तत्र तु न शक्तिरिति मञ्जूषायाम्प्रतिपादितम्॥ **भाष्ये जात्याख्यायामिति।** व्यक्तौ पदार्थे सम्पन्ना व्रीहय इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थन्तत्स्यादिति भावः॥ **सरूपाणामिति।** आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदु-क्तिसम्भवो व्यक्तिपक्ष एवेतिभावः। नचाकृतिपक्षेऽपि अक्षाः पादा इत्याद्यर्थं स आवश्यक इति वाच्यम् तावतीषु काञ्चिदेकाञ्जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वम् [१]परम्परयाच व्यक्तिप्रत्यय इति सरूपसूत्रे कैयटेनैव वक्ष्यमाणत्वात्। जातौ न जातिरिति परेषा-न्दर्शनमस्माकमिति च तत्रोक्तम्॥ **विप्रतिपत्त्येति।** शब्दा-नान्नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः। **केचित्** मीमां-सकाः॥ **वर्णात्मकमिति।** पदवाक्ये च वर्णसमूहरूपे एवेति-तदाशयः। अत्र मते एकस्यटपदमित्याद्यनुपपत्तेराह **अन्ये।** वैयाकरणाः॥ **अपरे।** त एव मुख्याः पदे वर्णानामिव वाक्ये पदानाङ्कल्पितत्वात्तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्द-त्वमिति तद्भावः॥

**अन्येत्विति।** वैशेषिकादयः॥ **ध्वनिरिति।** स च वर्णा-वर्णात्मकत्वेन द्विविधः एवञ्च कण्ठादिवच्छास्त्रमपि तस्य कारण-

---

१ परम्परया च॥ क॥

मित्याशयः ॥ **सङ्ग्रहो** व्याडिकृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्र-सिद्धिः ॥ **भाष्ये उभयथापीति**। एवञ्च निष्फलोऽयं विचार इतिभावः। साधुत्वज्ञानायोभयथापि शास्त्रमावश्यकमिति तात्पर्यम्॥

अथ पाणिनिसूत्रव्याख्यानभूतं वार्त्तिकमवतारयति **कथम्पुन-रिति**। अतएवात्रैव पाणिनिनामग्रहणम् इतः पूर्वन्तु [1]अवा-र्त्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इतिबोध्यम् ॥ **शब्दार्थसम्बन्धानामिति**। [2]शब्दाश्चार्थाश्च स-म्बन्धाश्चेति द्वन्द्वः। एवञ्च किमपूर्वशब्दनिष्पादनद्वारार्थविशेषसम्बन्ध-निष्पादकत्वं शास्त्रस्य किं वा सिद्धशब्दार्थसम्बन्धबोधकत्वमिति प्रश्नार्थ इतितात्पर्य्यम्। **सिद्धे शब्दार्थसम्बन्ध** इति वार्त्तिके समा-हारद्वन्द्वात्सप्तमी सम्बन्धस्य प्रत्यासत्त्या शब्दार्थयोरेव त्रयाणामात्य-न्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम् ॥ **व्यक्ति-स्फोटेति**। सा पदवाक्यरूपा नित्यैवेति तद्भावः। एतच्चोप-पादितम्प्राक् ॥ **कार्य्यशब्दिकानामिति**। 'कार्य्यशाब्दिकाना-मितित्वपपाठः। उत्तरपदवृद्धेर्दुर्लभत्वात् ॥ **असत्योपाधीति**। जा-तिरूपेत्यर्थः। जातिर्हि तन्मते आविद्यको धर्मविशेषः। यदा सर्व-वान्धर्माणाम्ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशे-ष्यत्ववत्सर्वत्राधिष्ठानभूतम्ब्रह्मैव विशेष्यम् विशेष्यमेव च द्रव्यमिति-भावः ॥ शब्दार्थयोर्नित्यत्वपक्षे तत्सम्बन्धस्य नित्यत्वे ऽप्यनित्यत्वपक्षे कथं सम्बन्धस्य नित्यत्वमत आह **सम्बन्धस्येति**। प्रवाहनित्यतया

---

१ पूर्वन्तु वार्त्तिक ॥ ख ॥ २ शब्दाश्चार्थश्च ॥ ख ॥

तयोरिव तस्यापि नित्यत्वमितिभावः। शब्दार्थयोस्सम्बन्धश्च शक्तिरूपस्तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम्॥ **भाष्ये सिद्धशब्दस्य कः पदार्थ इति।** अत्र पदार्थशब्दो रूढः सिद्धशब्दसम्बन्धी कः पदार्थ इत्यर्थः॥ **कूटस्थेष्विति।** कूटमयोघनस्तद्वत्तिष्ठन्ति ये तेषु संसर्गिनाशेऽपि स्वयमनष्टेष्वित्यर्थः। नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह [1]**अविचालिष्विति।** भाष्ये [2]द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम् आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम् एवञ्च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमितिभावः॥

ग्रन्थान्तरानालोचनेऽपि नियामकमाह **भाष्ये अथवेति।** एतेन तत्समानतन्त्रत्वाद्व्याडेरेकपदार्थवादोऽपि तव स्यादित्यपास्तम्॥ नन्वेकपदान्यपीत्युक्ताऽश्वञ्च इत्यस्य पदद्वयात्मकस्यो[3]दाहरणमसङ्गतमत आह **एव शब्देति॥** नियामकप्रत्यायकसामर्थ्यन्दर्शयति। **इहापीति॥** कार्य्यवाचिन एव ग्रहणाभावे मूलमाह **कार्य्याणामिति॥ प्राक्प्रध्वंसयोरिति पाठः॥**

**भाष्येऽप एवेति। गम्यत इति** वाक्ये इव समासेऽपि सामर्थ्यात्तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः॥ **अथवेति।** मनुष्यवृक्षाद्यपेक्षयाकाशादीनामप्यत्यन्तसिद्धत्वमितिभावः॥ **प्रतीयमानस्येति।** एतदणुदित्सूत्रे उपपादयिष्यते॥ **एवन्तर्हीति।** एवमेव घटपदकलशपर्याय इत्यादिप्रयोगाः। अन्यथा पर्यायवाचीति

---

१ अविचारिष्विति॥ ख॥ २ द्यावापृथिव्यादिकमपि॥ ख॥

३ उदाहरणत्वम्॥ क॥

प्रयोज्यं स्यात् ॥ विनापि प्रत्ययम्पूर्वोत्तरपदयोर्लोप इति लोपविधायकन्तर्हि किमर्थमत आह **लोपस्त्विति** । वर्णानाम् दे इत्यादीनाम् । तत्रापि क्वचित्पूर्वपदस्यैव क्वचिदुत्तरपदस्यैव क्वचिदुभयोरिति लोकव्यवहारेण निर्णयम् एवं वर्णानां [1]प्रत्ययभावोऽपि [2]तेनैव निर्णय इति तत्त्वम् ॥ **निष्पन्नत्वेति** । विद्यमानकालसम्बन्धो निष्पन्नत्वम् ॥ ननु निर्युक्तिकं व्याख्यानमयुक्तं विपरीतस्यापि सम्भवादत आह **न्यायादेति** । वृद्धव्यवहारादेव पदार्थसम्बन्धानामित्यलं सङ्ग्रहादौ स्थितमिति व्याख्यानतस्सिद्धशब्देन तदेवोपात्तमित्यर्थः ॥ **सिद्धिर्मङ्गलमिति** । तस्या मङ्गलत्वञ्च कार्ये कारणत्वोपचारादिति बोध्यम् । तत्प्रयोजनमस्येति प्राग्वतीयष्ठञ् ॥ तत्र मङ्गलानुष्ठानप्रयोजनमाह **भाष्ये मङ्गलादीनीत्यादिना** ॥ ग्रन्थे [3]तन्निबन्धनस्य फलमाह **अध्येतारश्चेत्यादिना** । आनुषङ्गिकमङ्गलसम्पत्त्येत्यर्थः ॥ [4]**अध्ययननिर्वृत्तिः** तत्समाप्तिः ॥ **सिद्धिः** सिद्धिविषयोऽर्थः । मङ्गलार्थमित्यनेनैत [5]एव वार्त्तिकप्रवृत्तिस्सूचिता असन्दिग्धो नित्यशब्दः किन्न प्रयुक्त इत्युक्तन्तत्रापि सन्देहमाह भाष्ये **अयङ्खल्विति** । आभीक्ष्ण्येन बाहुल्येन अभीक्ष्णमितिपाठेऽप्येवमेवार्थः ॥ **प्रयुज्यन्त इति** । माचाच्छब्दे आ-

---

१ प्रत्ययभावा अपि ॥ ख ॥ २ अत एव ॥ क ॥ तत एव निर्णया इति ॥ ख ॥ ३ तन्निबोधनस्य ॥ क ॥ ग्रन्थे निबन्धनफलमाह ॥ ख ॥

४ अध्ययननिर्वृत्तिः तत्समाप्तिः । सिद्धिः सिद्धिविषयोऽर्थः । मङ्गलार्थमित्यनेनैत एव वार्त्तिकप्रवृत्तिः ॥ ख ॥ ५ इत्येव ॥ क ॥

भीक्ष्ण्यासम्भवात्प्रयोगद्वारा तद्भाष्यम् एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोऽव्यन्तरसम्भवेन तत्रापि सन्देह एवेति भावः। नित्ये शब्दार्थसम्बन्धे इत्यस्य शब्दार्थसम्बन्धे ज्ञाते सति नित्यप्रयोगविषये शब्दे शास्त्रप्रवृत्तमित्यर्थस्स्यादितितात्पर्य्यम् ॥

नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथङ्केवलस्य प्रयोगोऽत आह **विनापिचेति**। नन्वेवमर्थग्रहणं व्यर्थमत आह **द्रव्यपक्षे इति** ॥ योग्यताबोधजनकत्वयोग्यता तादात्म्यम्। तदुक्तम्भाष्ये **नित्योह्यर्थवतामिति**। शब्दानामित्यर्थः। ननु तादात्म्यस्य सम्बन्धत्वे कथन्तस्य नित्यत्वमितिचेन्न नष्टभाविवस्तुनोऽपि शब्देन बोधाद्वौद्धार्थेन तस्य तादात्म्यन्नित्यमित्याशयात् शब्दवृत्तिधर्मस्यैवार्थे[१]वृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च॥ **शब्दस्य च नित्यत्वादिति**। आकाशवत्तन्निष्ठशब्दोऽपि नित्यः। व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः॥ ननु घटादिद्रव्यस्य कथन्नित्यतेत्यत आह **असत्येति**। स च कम्बुग्रीवादिमदाकारादिरूपः तद्व्यङ्ग्यजातिरूपो वा। भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदप्याविद्यकत्वेन व्यञ्जकानित्यत्वेनचानित्यमित्याह **जातेरपीति**। अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति गौतमेनाप्युक्तं "जात्याकृतिव्यक्तयः पदार्थ" इति ॥ **भाष्ये खदिराङ्गारसवर्णे कुण्डले भवत** इति प्रयोगादत्यन्ते विकृतेः कर्त्तृत्वं बोध्यम्। आकृतिपदेन जातिरित्यभिप्रायेण

---

१ शब्दवृत्तिधर्मस्यैवार्थे ॥ ख ॥

**भाष्ये आकृतावपि पदार्थे इति** ॥ क्वचिदुपरतेतिकृत्वा न सर्वत्रोपरतेत्यन्वयः ॥ ननु परमोनाशस्तेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह **अनभीति** ॥ ननु परमार्थदृष्ट्या सर्वमनित्यमत आह **अद्वैतेनेति** ॥ **नित्यत्वमिति** । सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालन्तस्या अपि ध्रुवादित्वेन नित्यत्वमितिभावः ॥ अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालमध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह **भाष्येऽथवेति** । नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं **कूटस्थमिति** । रूपान्तरापत्तिर्विचालिः । यथा पयसो दध्यादिरूपता। अनेन परिणामाऽनित्यता परास्ता । उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ। **अवृद्धीत्य**नेन तृतीयो वृद्धिलक्षणः । **अनुपजनेति**चतुर्थः परिणामः । **अनपायेति** पञ्चमोऽपचयः । एतद्रूपविकाररहितमितितदर्थः ॥ **अव्ययेति** षष्ठो विनाशः । इदञ्च ब्रह्मविषयंनित्यत्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयञ्च ॥ अयमेव न नित्यशब्दार्थः प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह **भाष्ये** [1]**यस्मिँस्तत्त्वमिति** ।[2] यस्मिन्विहतेऽपि तत्त्वं तद्धर्मः[3] प्रवाहनित्यताचानेनोक्ता तन्नाशेऽपि तद्धर्मो न नश्यति आश्रयप्रवाहाविच्छेदादितिभावः ॥ **यन्नित्यमिति** । व्यक्तिजात्याकृतीनाम्मध्ये यन्नित्यमित्यर्थः ॥ ननु

---

१ तदपीतीत्यधिकम् ॥ क ॥ ख ॥ २ यस्मिन् इत्यारभ्य इति भाव इत्यन्तं नास्ति ॥ ख ॥ ३ यस्मिन्विहतेऽपि तत्त्वं तद्धर्म इति नास्ति ॥ क ॥

शशशृङ्गादिपदार्थानाङ्कथमित्यलन्तेषां स्वरूपस्यैवाभावादत आह बुद्धिप्रतिभास इति। बाह्यः पदार्थो न शाब्दबोधे विषयः किन्तु बौद्धः स च प्रवाहनित्य इति भावः। एतच्च मञ्जूषायां विस्तरेण निरूपितम्॥ शब्दादीनान्नित्यत्वमिति। .व्याकरणानिष्पाद्यत्वमित्यर्थः॥ तावत्येवेति। वैयाकरणकुलमगत्वैवेत्यर्थः॥ ननु सकृदन्वितस्य लोकत इत्यस्य पुनरर्थप्रयुक्ते इत्यनेनान्वयः कथम्। वार्त्तिकेचैकवाक्यतयैवान्वयः प्रतीयतेऽत आह अत्रेति॥ अनाश्रित्येति। न्यूनतापरिहारायेत्यर्थः॥ लोकत इत्यस्य च लोकव्यवहारत इत्यर्थः॥ भाष्येऽर्थप्रयुक्त इति। अर्थज्ञानप्रयोजनेन कृत इत्यर्थः। परस्य विशिष्टार्थबोधोभवत्वितिशब्दः प्रयुज्यते। प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादितिभावः। एवम्प्राप्ते शब्दप्रयोगेशास्त्रेणाऽयम्प्रकृतिरयम्प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनका न गाव्यादय इति नियमः क्रियते इति तात्पर्यम्॥ विधानादिति। तादर्थ्यस्य षष्ठ्यर्थत्वबोधनायत्वेवम्प्रयोग इतिभावः॥ चतुर्थीति। योगविभागो न भाष्यारूढः सुप्सुपेति समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम्॥ द्वितीयपक्षात्तृतीये विशेषं दर्शयति। लिङादीति। प्रभाकराङ्गीकृतमतेनेदम्। तन्मते हि लिङादीनामपूर्वरूपकार्यं वाच्यम्। तदेवच स्वस्मिन् पुरुषम्प्रयुञ्जानन्नियोग इत्युच्यते स एव धर्मस्तेन प्रयुज्यते आक्षिप्यत इति कर्मल्युडन्तः प्रयोजनशब्दः सचासाधुनिवृत्तिरूपो नियमः धर्मप्रयोजन इति षष्ठीसमासः। एवञ्च द्वितीये धर्मफलको नियम इत्यर्थः। तृतीये धर्मप्रयोज्य

इत्यर्थ इति भेदः। केचित्तु धर्माय नियम इत्यनेन प्रत्यवायपरिहार[1]धर्मायायं नियमः। असाधुप्रयोगेऽधर्मोत्पत्तेः। धर्मार्थो नियम इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः। नानृतं वदेदिति क्रत्वङ्गवाक्येन[2] क्रतुवैगुण्यबोधनात् धर्मप्रयोजनो नियम इत्यनेनैकश्शब्द इति श्रुतेर्नियमाद्दृष्टम्पुरुषार्थकरं सूचितमित्याहुः॥ नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह भाष्ये **यथेति**॥ ननु लोकवेदयोरित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह **प्रियतद्धिता इति**॥ नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह **नायमिति**॥ **ते[3]लोकवेदेति**। अवयवे समुदायशब्दप्रयोगदर्शनादितिभावः॥ **आधाराधेयकल्पनयात्विति**। लोकरूपसमुदायतदवयवयोरित्यादिः॥

**नाचावयवावयविविभाग इति**। तत्र भव इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः॥ **कृतान्तेषु**। कृतान्तः सिद्धान्तः तत्प्रतिपादकवाक्येष्वित्यर्थः॥ **भक्ष्यञ्च नामे**-त्यस्य तद्भवति यदिति शेषः॥ **शक्यं क्षुदिति** सामानाधिकरण्यकथं भिन्नलिङ्गत्वादत आह **शक्तेरिति॥ तदा क्षुधमिति**। ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य स्वादुमिणमुलित्यत्र वक्ष्यमाणत्वेन कथमेतदितिचेन्न प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात्। व-

१ प्रत्यवायपरिहाररूपधर्मायायं नियमः। इति समीचीनः पाठः॥

२ क्रतुवैगुण्यस्य ॥ क ॥ ख॥

३ वेदलोकेति ॥ ख॥

स्तुत इदमयुक्तमेवेति खादुमीत्यत्र निरूपयिष्यामः॥ **खेद इति।** एवञ्च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुट-भक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिशब्दप्रयो-गेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात्। अर्थादपशब्दानामधर्मजनकत्वं बोध्यते। एकविधेस्तदितरनिषेध-फलकत्वात्। यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमितिभावः। दृ-ष्टान्ततांशेन वक्ष्यमाणवैदिकानान्तु सर्वांशेनेतिबोध्यम्॥ **व्रतय-तीति।** अभ्यवहार्य्यत्वेनोपादत्ते इत्यर्थः॥ **भाष्ये उच्छ्रित्यानु-च्छ्रित्य[1]वेति।** सन्तक्ष्यासन्तक्ष्य[2]वेत्यर्थः। निखन्यानिखन्य वेत्यर्थ[3]इत्यन्ये॥ ननु अपभ्रंशा न वाचकाः वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेश्शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् तदनुसारेणैव चाप-भ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः समानायामित्यनुपपन्नमिति शङ्कते **यद्यपीति॥ तथापीति।** एवञ्च वाचकत्वाभावेऽप्यर्थ-प्रत्यायकत्वाविशेषेण समानायामित्युक्तम्॥ **निरूढिमागता इति।** ते च शक्तिभ्रमेण बोधका इति भावः। शक्तिभ्रमस्त्वेत्थम्। केनचिद्गावीतिप्रयुक्ते[4] गौरितिसाधुशब्दस्मरणात्प्रयोक्तुर्बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति। वस्तुतो विनिगमनाविरहाद्भाषाशब्देष्वपि शक्तिरेवे-

---

१ चेति॥ ख॥ २ चेत्यर्थः॥ ख॥ ३ चेत्यर्थ इत्यन्ये॥ ख॥
४ गावीति युक्ते॥ ख॥

त्याह **अन्येत्विति** । साधुत्वञ्चैतन्मते शब्दगतधर्मसाधनतावच्छेदकं वैजात्यमेव यद्यपि [1]साधुनैव भाषेतेति न श्रूयते तथापि फल-निर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते तत्र के साधव इति[2] व्याकरणेन प्रतिपादनात्तद्द्वारा शास्त्रेण धर्मनियमो विधीयते इति बोध्यम् ॥ **भाष्ये शब्देनैवेति** । साधुनैवेत्यर्थः ॥ **एवं क्रिय-माणमिति** । शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः ॥

**अस्त्यप्रयुक्त** इत्यादेः प्रकृतोपयोगमाह **प्रयोगमूलत्वा-दिति** । लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मः प्रयुक्तासाधुष्वधर्म इत्यर्थकेनेदं सूचितम् । एवञ्चाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमा-नादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमितिभावः । वार्त्तिकोक्तनि-यमानुपपत्तिश्चेत्यपि बोध्यम् ॥ **भाष्ये किमत इति** । अप्रयुक्त-सत्त्वं वास्माकमनिष्टं साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थः । उत्तरम् । **प्रयोगादिति** । तथाचाप्रयोगादसाधुत्वानुमानमितिभावः । विप्र-तिषिद्धमुपपादयति । **यथेति** । एवञ्च सत्त्वे प्रयोग आवश्यक एव अप्रयोगेच सत्त्वमेव न स्यादितिभावः ॥ ननु लक्षणवशेन सत्त्वं केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये **प्रयुञ्जान एवेति** ॥ ननु मया प्रयुक्तश्चेत्किम् तत्र सोपहासमाह **कश्चेदा-नीमिति** । स्वयमेव प्रयोगङ्कृत्वा सन्तिचाप्रयुक्ता इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यस्स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वाव-

---

१ साधूनेव ॥ क ॥ ख ॥

२ आकाङ्क्षायाम् एते एव साधव इति ॥ क ॥ ख ॥

गमेऽप्रयुक्तत्वोक्तिर्विरुद्धेतिभावः। ननु लोकान्तर्भूतस्य मत्वहं लोक इतिवचो विरुद्धमत आह यथेति। अर्थबोधाय शब्दानप्रयुञ्जानो ऽपि मम लोकत्वेनाभिमत इत्यर्थः। भाष्येऽर्थे शब्दप्रयोगादिति। अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः। तदाशयमाह अर्थस-द्भाव इति॥ भाष्ये प्रयोगान्यत्वादिति। प्रयुज्यत इति प्रयोगः शब्दः सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः। सर्वनाम्नः पर-निपातः पूर्वनिपातप्रकरणानित्यत्वात्॥ पदान्तरसहित इति। पदान्तरं क्व यूयमिति। तत्र क्वेत्यनेन साधनपारोक्ष्यं निष्ठया भूतत्वकर्तृत्वञ्च। यूयमित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा बहुत्वञ्च। वसेः साचाद्गत्यर्थाकर्मकेत्यत्र निर्देशान्तरतेर्गत्यर्थत्वात्कर्त्तरि क्तः। नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं [1]लिङन्तसमानार्थत्वमितिचेन्न। विषयताविशेषानादरेण त-थोक्तेः। नत्वाख्याते क्रियाविशेष्यकबोधे पश्यति भवति अपाक्षी-द्भवतीति भूवादिसूत्रस्थभाष्यप्रयोग[2]विरोधः। अतीतानागतपाक-कर्तृकसत्ताया 'वर्त्तमानत्वासङ्गतेरितिवाच्यम्। वर्त्तमानसामीप्ये तत्र लटस्मृत्त्वात्। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्यादौ यत्क-र्तृको यागस्तत्कर्तृकं तरणमितिबोधः। अत एव ह्रस्वो नपुंसक इतिसूत्रे रमते ब्राह्मणकुलमिति क्रियाप्रधानमितिभाष्ये उक्तम्॥

नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याप्रामाण्यं स्यादत आह

---

१ तिङन्तसमानार्थत्वम्॥ क॥

२ भाष्यविरोधः॥ ख॥

**सम्प्रतीति**। पाणिनेर्व्याकरणप्रणयनकाल इत्यर्थः। पूर्वप्रयोगसत्त्वाच्च व्याकरणप्रणयनादेवानुमीयते इतिभावः। इदमपि यत्र भाष्यवार्त्तिककाराभ्यामप्रयुक्तत्वमोक्तं तदभिप्रायकमनुमानं बोध्यम्॥

[१]**वार्षशतिकानीति**। वर्षशब्दो दिवसपरः यथाश्रुत एव वा॥

[२]**आहरति**। सामग्र्यभावादिति भावः॥

ननु सत्त्राणां बहुयजमानकानामृषिभिर्वशिष्ठादिभिस्सम्प्रदीयमानत्वाभावादृषिसम्प्रदाय इत्ययुक्तमत आह **वेदेति**। भाष्ये कृत्वेत्यनन्तरमधीयत इति शेषः। याज्ञिकाश्च कल्पसूत्रेणान्वाचचत इत्यर्थः। अत्र सत्राणाङ्कर्मत्वम्। अनुपलब्ध्याचाप्रयुक्तत्वं शङ्कते भाष्ये **नचैवेति**। इतरलोकापेक्षया वसुमत्यां शब्दवाहुल्यात्तस्याः पृथग्ग्रहणम्। अनेनान्धपातालपर्य्यन्तसङ्ग्रहः। त्रयो लोकाः स्वस्तेनोपरितनसकलसङ्ग्रहः। रहस्यमुपनिषद् मन्वादिस्मृतयो वा। वेदनिगूढार्थप्रकाशकत्वात्। एवञ्च देशान्तरशब्दश्शास्त्रान्तरवेदान्तरोपलक्षक इतिबोध्यम्॥

भाष्ये **हम्मतिरित्यत्र रंहतिरित्यत्रच** गतिकर्मेत्यनुकर्षः॥ [३]**दातिर्लवनार्थ इति**। क्तिन्नन्तं क्तिजन्तं वा लवनेऽर्थे दातिशब्दमाच्याः प्रयुञ्जते। तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः॥ वार्त्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोश्श्रवणात्तत्र इत्याह **एकश्शब्द इति**। तत्र यदेकस्मादपूर्वन्तदेतरत्तदर्थमितिन्यायाद्द्वयोस्साम्येन फलसम्बन्धाभावाद्विकल्पायोगेनैकस्य प्राधान्यम-

---

१ भाष्ये वार्षशतिकानीति॥ २ भाष्ये आहरतीत्यपि॥
३ भाष्ये दातिर्लवनार्थे इति॥

परस्याङ्गत्वङ्कस्थम्। तत्र प्रथमं वा नियम्येतेतिन्यायाश्रयेणाह तत्र **किमिति** ॥

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गश्चात्मविज्ञानादन्यत्रेत्यवधार्य्यताम् ॥

इति न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात्प्रयोगाङ्गतया दृष्टार्थत्वाच्च प्रयोगस्य फलप्रतिसन्निहितत्वाच्चाह **आहोस्विदिति** ॥ **यथा श्लेष्मण इति**। तथा धर्मजनकज्ञानविपरीतत्वात्तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ॥ **प्रयोगे इति**। एवञ्च प्रयोगादेवाधर्मवद्धर्मोऽपीतिज्ञानाद्धर्म इति वेदविरुद्धमितिभावः ॥

**भाष्ये फलाद्व्यतिरेच्य इति**। फलवद्वृत्त्यभावप्रतियोगी न कार्य इत्यर्थः ॥ [1]**प्रयत्नवैयर्थ्यमिति**। व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः ॥ [2]**साधीय इति** क्रियाविशेषणम् ॥ शास्त्रसंस्कारवताम्प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा[3] बहुतराभ्युदयफलत्वमित्यर्थः। **भाष्ये तत्र फलव्यतिरेक इति**। कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादितिभावः॥ [4]**शास्त्रपूर्वके इति**। व्याकरणाध्ययनपूर्वके इत्यर्थः। तच्च वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति प्रामाणिकाः॥

**वेदशब्द इति**। बोधक इत्यर्थः। प्रमाणमित्यर्थो वा ॥

---

१ नागेशभट्टीयकैयटपुस्तके एवमस्तीत्यनुमीयते ॥

२ भाष्ये साधीय इति ॥ ३ बहुपूर्वद्वाराभ्युदययुक्तत्वमित्यर्थः ॥ ख ॥

४ भाष्ये शास्त्रपूर्वके इति ॥

**तस्य यथेति**। तस्य यथा य उ **चैनमेवं वेदेति** ग्रन्थेन वेदतो ज्ञात्वानुष्ठानम्फलायोक्तम्। तथास्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकश्शब्द इत्यादिनोक्तमित्यर्थः[1]॥ **भाष्ये प्रमाणमिति**। प्रामाणिकमित्यर्थ.॥ [2]**शब्दस्य शब्दज्ञाने इति**। एकश्शब्दस्स्यग्ज्ञात इत्यादिः। हेलयो हेलय इत्यादितु अपशब्दप्रयोगेऽधर्ममाह न तु ज्ञान इति भावः। यद्यपि तत्र प्रयुक्त इत्यप्युक्तन्तथाप्यवैयाकरणस्य सम्यक् प्रयोगादपि धर्माभावेन ज्ञानमेव तद्धेतुः प्रयोगस्तु तस्य द्वारमिति भावः॥

**भाष्ये अभ्युपाय एवेति**। अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवापशब्दज्ञानस्य न पृथक् फलतेतिभावः॥ **अपशब्दज्ञानम**पशब्दत्वेन तज्ज्ञानम्। एवं **शब्दज्ञाने** इत्यपि। अपशब्दज्ञानत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानम्भवति॥ **यो हीति** भाष्यस्य य एवापशब्दान् जानाति असावेव शब्दान् जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेतिभावः॥ तदाह **अपशब्दज्ञाननान्तरीयकत्वादिति**। बहुव्रीहिः। न हि वह्न्यानयननान्तरीयकम् पात्रानयनन्ततः पृथक् फलम्भवति॥

तुष्यतु दुर्ज्जन इतिन्यायेनापशब्दज्ञानस्य विपरीतत्वमाक्षेपाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह **अथवा कूपेति**। मृद् आर्द्रा पांसुश्शुष्का। यत्कर्मनान्तरीयककर्मजन्यो यो विपरीत-

---

१ इतिभावः॥ ख॥ २ भाष्ये शब्दस्य शब्दज्ञाने इति॥

त्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात् तन्नाशानुमानमिति बोध्यम्॥ **उत्कृष्टधर्मेति।** धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् अधर्मस्य तु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याल्पत्वेन तत्फलधर्मनाश्यत्वम्। यागीयहिंसाया[1]न हिंस्यादिति वचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः॥ **भाष्येऽन्यथानियम इति।** यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म्म इति तत्रैव तयोः प्रयोगनियमः। तदतिरिक्तस्थलेतु सुशब्दापशब्दयोः प्रयोगेऽनियमः। योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसङ्कल्पोहादिविषय एव[2] श्रुतौ हेलयो हेलयो नमस्ध्वमित्यूह एव। [3]**विदितवेदितव्या** इत्यनेन श्रवणमननिदिध्यासनसम्पदुक्ता। [4]**अधिगतयाथातथ्या** इत्यनेन साक्षात्कार उक्तः। याथातथ्यं स्वार्थेष्यञ्। वेदितव्यस्य यद् यथा तथा स्वरूपं सत्यं स्वरूपं शुद्धसच्चिदानन्दरूपन्तदधिगतम्प्रत्यक्षेण प्राप्तं यैरित्यर्थः। यज्ञे पुनरित्यनेन तत्त्वज्ञानिनामपि कर्माधिकारं सूचयति। [5]**प्रयुञ्जते इति।** वर्त्तमानसमीपे भूते लट्। एवञ्चापभाषन्त इत्यपि। अत एव तन्नामानो बभूवुरित्यर्थः॥ व्याकरणपदार्थविचारस्य सङ्गतिन्दर्शयितुमाह **उक्तमिदमिति।** आदिना तस्मादध्येयं व्याकरणमित्यादिपुनः पुनरुक्तिर्ग्रह्यते॥

---

१ यागीयहिंसा न हिंस्यात्॥ ख॥ २ श्रुतौ हेलयो नमस्ध्वम्॥ क॥

३ विदितवेदितव्या इति भाष्यम्॥

४ अधिगतयाथातथ्या इति भाष्यम्॥ ५ प्रयुञ्जते इति भाष्यम्॥

ननु सूत्रसमुदायस्य व्याकरणत्वेऽदं सूत्रमित्युपपद्यतेऽत आह द्वाभ्यामिति। सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयप्रयोगः स न सिद्ध्येदित्यर्थः॥ ननु किमुच्यते [1]षष्ठ्यर्थोऽनुपपन्न इति। पर्य्यायतया सह प्रयोगोऽपि न स्यादत आह सामान्यविशेषेति। सूत्रं सामान्यं व्याकरणं विशेषः। सूत्रशब्देनाष्टाध्याय्येव। तदेकदेशेतु योगव्यवहार एव योगे योगे उपतिष्ठते इत्यादौ॥ यदात्विति। सूत्राणिचाप्यधीयान इति भाष्ये वक्ष्यमाणत्वादितिभावः। वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात् षष्ठ्यर्थानुपपत्तिरेवेतितत्त्वम्॥ [2]समुदायस्यातिरिक्तत्वेऽपि दोषमाह भाष्ये शब्दाप्रतिपत्तिरिति। व्याकरणाच्छब्दान्प्रतिपद्यामहे इति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः। यतः केवलसूत्रेभ्यश्शब्दप्रतिपत्तिर्न दृश्यते। व्याकरणस्य [3]शब्दप्रतिपत्तिहेतुत्वञ्च लोकसिद्धम्। व्याकरणाच्छब्दान्प्रतिपद्यामहे इति व्यवहारात्। सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्त्तमाना तच्छ्राप्यां व्याकरणशब्दवाच्यतां व्यावर्त्तयतीतिभावः॥ तदाह न हीति॥ भाष्ये चर्चापदानि चर्च्यमानानि विभज्यमानानीत्यर्थः॥ शब्द इति। लक्ष्यमित्यर्थः। अत्र पक्षे षष्ठ्यर्थ उपपद्यते शब्दाप्रतिपत्तिहेतुता तु तदवस्था॥

---

१ षष्ठ्यर्थोऽनुपपन्न इति भाष्यम्॥ २ सूत्रशब्देनाष्टाध्याय्येव तदेकदेशेतु योगव्यवहारासिद्धिः॥ ख॥ समुदायस्येत्यारभ्य सिद्धिरित्यन्तं नास्ति॥ ख॥ ३ शब्दप्रतिपत्तित्वञ्च॥ क॥

**वाक्याध्याहार इति**। वाक्यघटकपदानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाध्याहारः कल्पनमित्यर्थः। यद्वा. वाक्याध्याहार इत्यनेन वार्त्तिककृद्वाक्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता॥ ननु राजभोजना इतिवत्कर्मल्युटि न शेषोऽत आह **करणे इति**। कर्मणि स तु क्वाचित्क इतिभावः॥ **लक्षणप्रपञ्चाभ्यामिति**। यथा कर्मधारयप्रकरणे अलुक्प्रकरणेच। विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूत्रकत्वाद्दोषाय इहतु व्युत्पादनार्थत्वान्न दोषकृदितिभावः। पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनम्प्रपञ्चार्थमिति युज्यते। अत्रतु विपरीतमिति न तत्साम्यमित्यन्ये॥

**प्रतीयन्त इति**। एवञ्च विपरीतव्यावृत्तिः सदृशसङ्ग्रहश्च व्याकृतिरितिभावः। एतेन शब्दाप्रतिपत्तिरप्यत्र पक्षे उद्धृता व्यावर्त्यव्यावर्त्तकरूपलक्ष्यलक्षणस्यातिप्रसक्तत्वात्पृच्छति भाष्ये **किम्पुनरिति।** **जनपदान्तरेति** भावप्रधानो निर्देशः॥ **यद्देति**। मात्रा परिच्छिन्नोंऽशः। औषधसंस्कृते तत्र समुदाये घृतादिशब्दस्य रूढिरितिभावः॥ **अशुक्लोऽप्यवयवे इति**। प्रयोग इत्यनेनान्वेति॥ **आरोपादिति**। समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुः। तत्र समुदाये शुक्लत्वारोपे हेतुरवयवान्तरस्य शौक्ल्यादिति। वनैकदेशे पुष्पिते पुष्पितं वनमितिवदेकदेशेऽपि शुक्ले शुक्लः पट इतिव्यवहार इति बोध्यम्॥ **शब्दार्थभेदादिति**। अनेकावस्थायुक्तं शिरो राहुशब्दार्थः। यत्किञ्चिदेकावस्थायुक्तं शिरश्शब्दार्थः। तादृशराहुशब्दार्थस्य तादृशशिरः पदार्थोऽवयव इति

वच्छ्यर्थोपपत्तिरितिभावः । सूत्रशब्देन तु **समुदायरूपतेति ।** अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्थायं समुदाय इत्यर्थः । ईदृशे स्थले विकल्पात्मकज्ञाने वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये॥ **भाष्येऽविजानत इति ।** मन्दबुद्धेरित्यर्थः ॥ [१]**सूचत एवेति ।** एतन्मूलकमेव पठ्यते **सूत्रेष्वेव हितत्सर्वं यद्वृत्तौ यच्च वार्त्तिके इति ॥** ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसम्भवान्माहेश्वरो वर्णसमाम्नायः किमर्थ इति पृच्छति भाष्ये **किमर्थ इति ।** पाणिनये महादेवकृत इत्यर्थः ॥ ननु साधुत्वान्वाख्यानमफलमत आह **नहीति ।** उत्तरं **वृत्तिसमवायार्थ** इति । वृत्तिः शास्त्रप्रवृत्तिस्तदुपयोगिसमवायो वर्णगतः क्रमविशेषः स बोध्यत्वेनार्थः प्रयोजनं यस्य तथोक्तः । सति ह्यक्षरसमाम्नायेऽजादिसञ्ज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरिग्यण इत्यादौ यथासङ्ख्यप्रवृत्तिश्चेतिभावः । अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव मङ्गलार्थमपहतशास्त्रीयसाधुत्वादितो वृद्धिशब्दं पठतीति वक्ष्यति । अन्यकर्तृकत्वञ्च सूचितम् । पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश इत्युक्ते उपदेशे गुरुकर्तृताया स्वरसतः प्रतीतेः सिद्धोच्चारणेऽपि मन्त्रोपदेश इत्यादावुपदेशव्यवहारात् । अनुबन्धकरणार्थ इत्यत्र करणपदेनेतरस्य

---

१ सूत्र एवेति ॥ ख ॥

सिद्धत्वसूचनात्। तत्करणश्चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः॥ **भाष्ये किमिदमिति।** कोऽयं समास इति प्रश्नः। धर्मनियमवदिति षष्ठीसमासः। पञ्चत्रयभेदमुपपादयति[1]। आद्यतात्पर्यन्तूक्तं लाघवेन शास्त्रप्रवृत्त्यर्थ इति॥ ननु नेदमाद्योच्चारणमस्थानादित्वात् तत्कथमुपदेशत्वव्यवहारोऽत आह भाष्ये **उच्चारणमिति।** ढक्कानिनादेनाभिव्यक्तिरित्यर्थः॥ फलान्तरमाह [2]**अनुबन्धकरणार्थश्चेति।** अनुबन्धबोधनार्थ इत्यर्थः। येनाकारस्य विवृतगुणत्वसङ्ग्रहः। उपलक्षणत्वेन वा। अनुबन्धत्वञ्च समुदायान्त्यत्वे सति नान्यथेति तात्पर्यम्॥ ननु प्रत्याहारशब्देन सूत्रस्वेतादर्थ्यमनुबन्धानामनुपपन्नमत आह **प्रत्याहारशब्देनेति।** अधिकरणव्युत्पत्त्या अर्श आद्यचा वेतिभावः॥ **भाष्ये वृत्त्यर्थ इति।** लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः। एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता॥ [3]**भोत्स्यामह इति।** अन्तर्भावितण्यर्थो बोधयिष्यामह इत्यर्थः। एवं विज्ञातुमित्यस्य ज्ञापयितुमित्यर्थः॥ **सति ह्युपदेश इति।** एवञ्च व्याकरणाध्येतॄणामक्षरसमाम्नायेनैवावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थमाष्टका पाठनीयेतिभावः॥

**एकश्रुत्येति।** त्रैस्वर्य्येण पाठेतु द्वयोरेव कर्त्तव्यतां वदेदित्यर्थः। तेषां लोकतः सिद्धौतु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरितिभावः। त्रैस्वर्येण पाठेऽप्यन्यतमपाठेऽन्यस्य

---

१ शास्त्रेति इत्यधिकम्॥ क॥ ख॥ २ अनुबन्धकरणार्थश्चेति भाष्यम्॥
३ भोत्स्यामह इति भाष्यम्॥

कर्त्तव्यत्वाभिप्रायेण सवर्णग्रहणमित्यन्ये। आकृत्युपदेशे किमित्यकारादिह्रस्वव्यक्तिविशेषोपादानम्। तदुपादाने व्युत्पत्त्यन्तरग्रहणानापत्तिश्चेत्यत आह उपात्त इति। नान्तरीयकत्वश्च तं विना जातेरुच्चारयितुमशक्यत्वात्॥

संवृतादीनामिति। भाष्ये तादृशदोषसहितानामाकृतिपक्षत्वात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः। तदाह एकारादीनां संवृतत्वमिति॥ अवलिप्त इति। संश्लिष्टः सन्दिग्ध इति यावत्॥ ह्रस्व इवेति। तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः॥ निष्ठुर इति। त्वरित इत्यन्ये॥ गौहानीति। स्वरदोषजात इत्यर्थः॥ भाष्ये गर्गादिबिदादिपाठादिति। संवृतादिदोषरहितानामेव तत्र पाठादितिभावः॥ साधुत्वमिति। निवृत्तकलादिदोषवत्त्वमित्यर्थः॥ गार्ग्य इत्यादीनामिति। तत्रत्यानाङ्कलादिदोषनिवृत्तिर्न स्यादित्यर्थः। तदाह ततश्चेति। परेतु समुदायानामेतत्प्रकृतिकप्रत्ययान्तसमुदायानां साधुत्वं यथा स्यादित्यर्थस्याठश्चरितार्थो न कलादिदोषनिवर्त्तयेदित्येव भाष्यार्थः। पाठश्चैव विशेष्यत इत्यग्रिमभाष्यस्वरसादित्याहुः॥

निदर्शनार्थत्वादिति। तत्रावर्णस्य अ अ इति कृत्वैव तद्वत्तदनन्तरमन्येषामपि करिष्यामीतिभावः। एतेनावर्णप्रतिपत्तेः कृतत्वादद्ध्यामीत्यनुपपन्नमित्यपास्तम्॥ भाष्ये सा तर्हि वक्तव्येति। तथाच प्रत्यापत्त्याश्रयणे गौरवमितिभावः॥ [1]लिङ्गार्थात्विति। अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्ये-

१ लिङ्गार्थात्विति भाष्यम्॥

त्यर्थः। नाकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः किन्तु सर्वानुबन्धोच्चारणाशास्त्रायकरणफलिकापीति न गौरवमिति भावः। तदेव विवृणोति [१]**तत्तर्हीत्या**दिना। धात्वादिगतकत्वादिलिङ्गमित्यर्थः॥ **अथवैतर्हीत्यस्य** तथापीत्यर्थः॥ [२]**अनेकमनुबन्धशतमिति**। एकैकस्यानुबन्धस्य शतश उच्चारणत्वादृशाश्चानेक उच्चारणीया इत्यर्थः॥

**यथेति**। एधश्चादयोऽनुदात्तङितः कत्वदोषयुक्ताः पाठ्याः। स्वरितञितश्च ञाताः। तत्र कत्वादात्मनेपदम्। ञातात्कर्त्रभिप्राये क्रियाफले इति सूत्रे कार्य्ये। एवं टकितौ कत्वञातौ पठित्वा ञन्तौ कत्वञाताविति पाठ्यम्। एवं ञितोऽर्द्धकदोषयुक्तान्पठित्वा अर्द्धकात् क्विरिति ञितश्च यत्वान्पठित्वा यत्वादयुच् इत्यादि बोध्यम्। एते च कत्वादयः प्रक्रियादशायामेव प्रयोगे तु शुद्ध एव शास्त्रान्ते प्रत्यापत्तिकरणात्। **आदिः कत्वैस्स्वे**तिपाठः॥ **भाष्येऽपाणिनीयमिति**। वर्णसमाम्नायसमर्थनाय प्रवृत्तस्यैकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे वृश्चिकभियेत्यादिन्याय आपततीतिभावः॥ नन्वपठितेषु दोषनिवृत्तिर्न स्यादत आह **यथाभूता इति**। गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव[३] ते सर्वत्र साधव इत्यनुमातुं शक्यत इतिभावः॥ **भाष्ये पाठस्यैवेति**। विशेष्यते तत्तत्प्रत्ययवैशिष्ट्येन बोध्यत इत्यर्थः॥ [४]**द्विष्टानीत्यस्य** द्वयोरर्थयोस्तिष्ठन्तीत्यर्थ इत्यत

---

१ तत्तर्हीतिभाष्यम्॥ २ अनेकमनुबन्धशतमिति भाष्यम्॥

३ एव साधवः॥ क॥ ४ द्विष्ठानीति भाष्यम्॥

आह **शब्दस्यापीति**। तत्र कः कीदृशो धावतीतिप्रश्ने श्वेत इत्युत्तरम्। श्वा इत इतिच्छेदेन क इत्यस्योत्तरम्। श्वेत इति च्छेदेन कीदृश इत्यस्योत्तरमिदम्। एवञ्चैषाञ्जनपदानाङ्गन्ता को वा समर्थ इति प्रश्न उत्तरम्। **अलमित्यादि**। अलम्बुषा देशविशेषाः। बुसानां पलालवर्णानां याता प्राप्तिमान् अलं समर्थ इतिचार्थः॥ पातेति क्वचित्पाठः। पा रक्षणे इत्यस्य रूपम्॥ **केवलानामिति**। एवञ्च कलादिदोषाणां न कुत्रापि प्रसक्तिरितिभावः॥ **भाष्ये यानि तत्संग्रहणानीति**। कार्यविधायकतानुवादानीत्यर्थः॥ [1]**उपदेश इति**। ङ्याप्प्रातिपदिकादित्यादावनुवादरूपेण ग्रहणमित्यर्थः॥ तेनोद्देशस्य प्रातिपदिकानाञ्चोपदेश इत्यादेच इतिसूत्रस्थभाष्यविरोध इत्यपास्तम्॥ नन्वेवमतिप्रसङ्गस्स्यादत आह **शिष्टेति**। एवं संवृतादीनाम्प्रतिषेध इत्यस्मिन्प्रत्याख्याते दृष्टबुद्ध्यर्थ इत्यपि प्रत्याख्यातप्रायमेवेत्यलम्॥

**इति शिवभट्टसुतसतीगर्भसम्भवनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमस्य प्रथमपादे प्रथमाह्निकम्॥**

---

१ उपदेश इति भाष्यम्॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो नमः ।



**अइउण्** ।१॥ ननु चतुर्द्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्काह **सर्वेति** । **विशेषेण** । [1]तद्रूपेण । प्रत्येकं वर्णेभ्यो विभक्तिमाशंक्याह **स्वरूपेणेति** । शब्दजन्यज्ञानविषयो हि-शब्दस्यार्थः । एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः ॥ अनु-कार्यमर्थ इति तु स्पष्टमेव । एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षित-त्वादर्थवत्सूत्रेऽग्रहणादित्यर्थः । स्वरूपस्य श्रोत्रग्रहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या । अनुकार्यं च सादृश्येनोपस्था-पयतीति न तत्रापि वृत्तिः । वृत्त्यार्थबोधकत्वं चार्थवत्त्वमर्थवत्सूत्रे निविष्टमितिभावः । अनुकरणत्वभङ्गान्नविभक्तिरिति तत्त्वम् । सौ-त्रत्वाद्वा । कारप्रत्ययोऽपि बाहुलकात् ॥ **स्वरसन्धिस्त्विति** । सौत्रत्वात्संहिताया अविवक्षणाद्वेतिभावः । अजादिसंज्ञानामनिष्पा-दादिति तु चिन्त्यम् । [2]वर्णोपदेश इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां यणादीनां सुध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छे-दकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा **तुल्यास्य-प्रयत्नमित्यादौ** सवर्णदीर्घादि न स्यात् । अत्र सूत्रे तत्रेति[2] पाठे-

---

१ तत्तद्रूपेण ॥ क ॥ २ तत्रेति पाठेऽप्ययमेवार्थः ॥ क ॥

ऽप्येवमेवार्थः। वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्रप्रवृत्तेः साव-र्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह **प्रदेशे-ष्विति। अकः सवर्णे** इत्यादौ। तत्राप्यकारः संवृत एवेतिभावः॥

ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह **विवृतस्य गुणस्येति**। भाष्ये कर्त्तव्य इत्यस्य प्रतिज्ञेय इत्यर्थः। एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम्। भाष्ये **किं प्रयोजनमि** त्यत्र उद्दिश्येत्यध्याहारः। कर्त्तव्य इत्यनुषङ्गश्च॥ नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह **येन शास्त्रेणेति**। नन्वाकृतिभेदात्कथं तत्पक्षेऽप्यकारेणाऽऽकारग्रहणमत आह **आकारस्यापीति**। केवलकण्ठ्यत्वे सति स्वरत्वमत्वजाति-व्यञ्जकमिति दीर्घप्लुतयोरपि सेतिभावः। प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेऽन्वयो न जायतेऽत आह **अत्र चेति**। उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह **प्रयोगाभावादिति**। निमित्ता-दिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने स्यादेवविभक्तिरत आह **प्रायग्रहणादिति। विभाषा गुणे इति**। निमित्तेत्यादिवार्त्तिके सर्वासामित्येतन्न पंचमी तृतीयाविधायकं किन्तु हेताविति वि-भाषागुणेति[1] सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेतिभावः॥ **विवारयतीति**। सहाभ्यन्तरप्रयत्नः॥ **दोषापत्तिरिति**। दण्डाढकमित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः॥ ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेवग्रहणमत उक्तं **व्यक्तिपक्षे इति**। ननु कालस्य

---

१ गुणेति द्वयोः॥ क॥

व्यापकत्वाद्ग्राह्यत्वेन समाधानमयुक्तं किंच कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्राप्तिरत आह **प्रयत्नाभेति**। ग्राह्यत्वं व्युत्पादयति **प्रसिद्धेति**। प्रसिद्धपरिमाणं यद्दस्वन्तरगतम्परिच्छेदकक्रियान्तरं परिच्छेद्यक्रियापेक्षयान्यत् तदपेक्षणादित्यर्थः। एवं च वाह्यपरिच्छेदकक्रियापेक्षया वाह्यत्वोक्तिरितिभावः॥ क्रियैव कालो नातिरिक्त इति मते इदम्। अतिरिक्तः क्षणसमूहः काल इतिमते परिहरति। **अथवेति**। अयम्भावः। नाभिप्रदेशावच्छिन्न[1]यत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम्। वायोरल्पत्वाधिक्यानि च[2] ह्रस्वत्वदीर्घत्वादिरूपकालव्यञ्जकानीति॥ ननु ह्रस्वदीर्घयोः कालभेदादतो भिस[3] इत्यादौ दीर्घाग्रहणवद्विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्याद् ऐस्भावविधायके ग्रहणानापत्तिरत आह **द्रुतादीति**॥ उपदिश्यमानस्येत्यत्रवार्त्तिककृतः कर्तृत्वे[4] पक्षयोर्भेदो न स्यादत आह **किं सूत्रकारेणेति**। सूत्रकारो महेश्वरः। वेदपुरुषो वा। येनाक्षरसमाम्नायमित्याद्युक्तेरिति[?]ह्यादित्याकूतः॥ ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसंगतोऽत आह **दुरवधारत्वादिति**। विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः। **अन्यथा**। संवृतत्वे। स्वरूपप्रत्यये हि पुनः संवृतवि-

---

१ प्रयत्नेन ॥ क ॥

२ ह्रस्वदीर्घत्वादि ॥ क ॥

३ भिस ऐस् इत्यादौ ॥ क ॥

४ कर्तृत्वेन पक्षयोः ॥ क ॥

धानं युक्तं स्यादिति भावः ॥ **प्रयोग एवेति**। अतिखट्व इत्यादि प्रयोगे ह्रस्वेनान्तरतम्यादिवृतोऽकारः प्राप्तः संवृत एव भवत्वित्यर्थमप्र-त्यापत्तिवच इति [१]भावः। **नन्विति**। अचश्चेत्युक्तेरच एव ह्रस्व-त्वेन भाव्यमितिभावः। गोस्त्रियोरित्यचैतद्वारणार्थमेवोपस्थितिः स्या-दिति तात्पर्यम् ॥ **उदीचामात इति**। न चापोऽन्यतरस्यामिति सूत्रे चरितार्थमिदम्। न चात्राच्परिभाषोपतिष्ठते फलाभावादिति वाच्यम्। शास्त्रस्याल्पविषयतापत्तेः। गोशब्दसाहचर्येण स्त्र्यंशेऽप्यचश्चे-त्यस्याप्रवृत्तेश्च। तदंशे हि फलाभावान्न प्रवर्त्तत इति दिक्॥ नन्वा-द्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वादत आह **विवृतोपदेश इत्यचेति**। **आहो-पुरुषिकेत्यच**वुञः प्रागमयूरव्यंसकादित्वात्समासः॥ **अहो इति**। अहमित्यर्थे। तत्र प्रयोजनान्वाख्यानमित्येव न्याय्यः प्रत्यापत्तेः। अकर्त्तृके आशापादनाभावाच्चेत्याङ्कः। प्रत्यापत्त्या अइउणित्यत्रैव प्रक्रियादशायां सर्वत्राकारोविवृतः प्रतिज्ञात' इत्यजानन् शङ्कते भाष्ये **तस्य विवृतोपदेशादिति**। तस्येत्यस्य वर्णसमाम्नायस्थस्ये-त्यर्थः ॥ **संवृतस्येति**। धात्वादिस्थस्येत्यर्थः ॥ ननु अइउणित्यादौ कस्यानुकरणमित्यच विनिगमकाभावादाह **स्वरूपपदेति**। स्वरू-पपदार्थकत्वं यथा तथोक्तं भाष्ये **विवारभेदादिति**। प्रयत्नभेदादि-त्यर्थः। ग्राहकस्य विवृतत्वाद् ग्राह्यस्य संवृतत्वादिति भावः॥ **प्रत्याहारे इति**। संग्राहके शास्त्र इत्यर्थः॥ **वक्तव्यमिति**। एवं च प्रयत्नभेदेनासवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण

---

१ प्रतिपत्तिवचनमिति भावः॥ ख ॥

ग्रहणं ज्ञाप्यत इत्यर्थः॥ **यद्यप्येकोऽपीति।** प्रत्युच्चारणं वर्णान्यत्वात्। आक्षरसमाम्नायिकस्य प्रयोगेऽभावादिति भावः। आदिरन्त्येनेत्यस्य चान्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्याद्यर्थः। तत्र ककारादिचिह्नेनागादिशब्दस्य तत्सदृशत्वादिष्ट एव। . सादृश्यस्य व्यक्तिभेदे सति[१] सर्वधर्मसाम्यप्रयुक्तं ग्राह्यं तस्य च प्रयोगस्थेऽभावेऽप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्यम्। केचित्तु देवदत्त अजस्तीत्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति तदर्थं भाष्ये **द्वयोरि**त्युक्तमित्याहुः। भाष्ये **युगपत्समवस्थानमि**त्यस्य प्रयोगे इत्यादिः॥ [२]**एवमर्थ इति।** वृत्तावेवं शब्दः प्रकारवति वर्तते इति बहुव्रीहिः। **प्रातिपदिकानीति।** धातुप्रत्यययोरप्युपलक्षणं बोध्यम्। सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः॥ **तद्गुरु भवति तस्मादिति।** यतः सर्वोच्चारणं गुरु अतो धात्वादिस्थ इति वाच्यमित्यर्थः॥ ननु धातूनां बहुधा पाठाद् धात्वादीत्ययुक्तमत आह **अग्रहणेति**॥ प्रातिपदिकेत्युपलक्षणम्। **धात्वादिस्थस्यापीति।** पठितधात्वादिस्थस्यापीत्यर्थः। एतेनाग्रहणधात्वादीत्येव वक्तुमुचितमित्यपास्तम्। **संवृतस्यैवेति।** एवं धात्वादिस्थस्य विवृतवत्कार्यं लभत इत्यतिदेशोऽयमिति भावः॥ **अन्यथेति।** गुणोच्चारणाद्दीर्घोच्चारणे यत्नाधिक्यमिति भावः॥ ननु संवृतयोस्तयोरभावेऽपि संवृतस्य विवृतौ न स्यातामेव। आन्तरतम्याभावात्। न चैकोयणिव एच इगिवानन्तरतमावपि भविष्यतः

---

१ सर्वधर्मसाम्ययुक्तम्॥ क॥ २ एवञ्च॥ क॥

सामर्थ्येन तत्र तथाङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थत्वादकः सवर्णइत्यादेर्विषये तथा कल्पने मानाभावादत आह **असत्यपीति** ॥ **सावर्ण्ये इति**। आन्तरतम्ये इत्यर्थः। एवञ्चातो **दीर्घ इति**। अतो **रोरित्यचाप्लुतादित्यतो** विशेषणञ्च सामान्यापेक्षं ज्ञापकमिति भावः। संवृतदीर्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह भाष्ये **स्थानी प्रकल्पयेदित्यादि** ॥ तद्वद्विवृतौ दीर्घप्लुतावपि कुतो न सन्तावित्यत आह **अशक्यत्वादिति**। केचित्तु शिष्टसम्मतत्वात् ते सन्तः। इमौ तु न तथेति भाव इत्याहुः ॥ **सन्ति हि यण इति**। भाष्ये यण इति बाहुल्याभिप्रायेण रेफस्यानुनासिकत्वाभावादिति बोध्यम्। नन्वीकारोकारयोः कथं संवृतत्वमत आह **ध्वृतः संवृता इति**। [1]इउच्वृत इत्यर्थः। क्वचित्तु ध्वत इति पाठः। इकारोकाराऽकारा इत्यर्थः ॥ एवञ्चाद्यप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थिते प्रकृते भाष्ये **तत्रानुवृत्तीति**। एतद्विशेषणोपादानस्य फलमाह **अकः सवर्णे इति** ॥ **अनण्त्वादिति**। अक्षरसमाम्नायेऽपठितत्वादाकारस्यैवानण्त्वमित्यर्थः। प्रत्युच्चारणं[2] भेदेऽपि अक इत्यादौ ककारेण चिह्नेनैतदनुकरणत्वानुमानमिति भावः ॥ **तदनुगत इति**। साक्षात्तच्छ्[3]संस्कारकबोधजनक इत्यर्थः ॥ ननूदात्तादिविरुद्धधर्माध्यासाद्भेदः स्यादत आह **उदात्तादीति** ॥ **प्रतिबिम्बप्रतिभासभेदवदिति**।

---

१ इउ ॥ इ ॥ २ प्रत्युच्चारणं वर्णभेदेऽपि ॥ क ॥ ३ संस्कारबोधजनकः ॥ क ॥

[1]भिन्नभिन्नाकार प्रतिबिम्बप्रतिभासवदित्यर्थः॥ **इकारादीनामपीति**। सर्वध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात्। तत्तद्रूपाभिव्यक्तिकृतस्य [2]परस्परं भेदव्यवहारोऽपीति भावः॥ भाष्येऽ**नुबन्धसङ्कर** इत्यस्यानुबन्धकार्यसङ्कर इत्यर्थः॥ **ङीबादिति**। टिड्ढेत्यादिना। आदिना णित्वप्रयुक्तयुक्। पर्यायेण कित्त्वणित्त्वप्रयुक्तकार्ययोरप्यविरोध इति भावः॥ भाष्येऽ**नुपपत्तिरिति**। [3]इष्टव्यवस्थाया इति भावः। अव्याप्त्यतिव्याप्त्योः प्रसङ्गादिति तात्पर्यम्॥ **प्रतिषेधादिति**। चावेकाच इति प्राप्तस्येत्यर्थः॥ **ठंस्त्विति**। **नौद्व्यचष्ठन्निति** विहितः॥ **करणत्वेनेति**। अधिकरणस्य करणत्वविवक्षयेत्यर्थः॥ **सामान्यरूपतयेति**। विषयत्वरूपेणेत्यर्थः॥ **भाष्यकारस्त्विति**। एकविषये नानालिङ्गकरणादर्शनादिविषयभेदेन तदित्यत्र तात्पर्यम्। गुणा उदात्तादय इति भ्रमं व्यावर्त्तयति **गुणा अनुबन्धा इति**। तेषां गुणत्वमुपपादयति **कार्यायेति**। व्याप्रियते ,विषयत्वेन गच्छतीत्यर्थः॥ **एककर्तृकत्वादिति**। स्यादित्यनेनेत्संज्ञारूपैककर्तृकत्वादित्यर्थः॥ नानेति स्थिते कथमन्यथा व्याख्यानमत आह **नानाशब्दमिति**॥ **नियमादिति**। ज्ञापकत्वे हि विध्यर्थत्वमिति भावः। अत्र वाक्यत्रयेऽपि तु शब्दः पूर्वपक्षव्यावृत्तौ॥ **यथा लोके इति**। [4]अश्वाश्रया गूढचरादिरितिशेषः। एवञ्च लोकव्यवहारदृष्टान्तेनैवासङ्करः सिद्ध इत्यर्थः॥ **यच**। देशे काले वा॥ **तद्गुण एवेति**।

---

१ भिन्नाकारप्रतिबिम्बप्रतिभासवत्॥ क॥ २ परस्परभेदव्यवहारः॥क॥
३ इव्यवस्थाया इति भावः॥ क॥ ४ प्रश्वाश्रया गूढचारादिरिति शेषः॥ क इ॥

भाष्येऽपि **तस्मिंश्चेति** सावधारणं व्याख्येयमिति भावः॥ **यथा विकृति यागे इति**। तत्र हि प्राप्तस्यामिधेन्यनुवादेन सप्तदशत्वं विहितम्। तच्च त्रिः प्रथमामित्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेति भावः॥ **त्रिरावृत्त्येति**। आवृत्तिः पुनरुच्चारणम्। तज्जन्यसंख्यया [1]द्वादशत्ववदत्रानेकाच्त्वमिति भावः॥ भाष्ये **आवृत्तेः संख्यानात्**। गणनादित्यर्थः॥ [2]**भवेदावृत्तितः कार्यं परिहृतमिति**। आवृत्त्याकार्यं सिद्धमिति कृत्वा दूषणं परिहृतं [3]भवेदित्यन्वयः॥ **लिङ्गादिति**। अनेन लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यते इति भावः॥ **मुख्यमिति**। आवृत्तिकृतद्व्यच्त्वेन स्वगतैकाच्त्वस्य बाधायोग इति भावः॥ ननु स्वस्य प्रतिग्रहीतृत्वासम्भवादेकन्यूनता नच पुनर्दानं दत्तस्यान्यस्वत्वाक्रान्ततया पुनर्दानासम्भवादत आह **वित्तेनेति**॥ ननु षष्ठीसमासे सहस्रसंख्याया विशेष्यत्वात्कथं दानेन सम्बन्धः। कथं वा सम्पन्ना इति बहुवचनान्तेन सामानाधिकरण्यमत आह [4]**ऋषयः सहस्रम् इति**। अत एव सर्वे ते इत्यनेन सामानाधिकरण्यम्। परनिपातो भाष्यप्रामाण्यात्। एकैकश इत्यत्र उभयोरपि द्योतकत्वेन द्योतक[5]समुच्चयस्य च बहुशो दृष्टत्वेन द्विर्वचनशसोर्यौगपद्यम्। [6]यथाजातीयको गार्ग्यायणीत्यादौ तत्र च यथाध्ययनसत्त्वे समुच्चित्य [7]द्योतकता अभावे गार्गीति ङीपैव

---

१ सप्तदशत्ववत् ॥ क ॥    २ भाष्ये – ॥    ३ भवेदित्यर्थः ॥ क ॥
४ सहस्रं ऋषयः ॥ ङ ॥    ५ समुच्चयस्य बहुशः ॥ क ॥
६ यथायथा ॥ वा ॥    ७ समुच्चितद्योतकता ॥ क ॥

तथा प्रकृतेऽपि शतो वैकल्पिकत्वात्पक्षे एकैकमित्यपि । द्व्यादिशब्दविषये तु न [१]समुच्चित्यद्योतकता । अनभिधानात् । एकशब्दे तु समुच्चित्य प्रत्येकञ्च द्योतकता । अभिधानस्वभावात् । यत्र तद्धितेनानुक्ता वीप्सा तत्र द्विर्वचनं भवत्येव यथैकैकशो देहीति । [२]भाष्यस्याप्ययमाशयः । यत्र तद्धितमात्रेण लोके वीप्सानभिधानं तत्र द्विर्वचनमपि । यत्र माषश इत्यादौ तावतैव वीप्साभिधानं तत्र न कदापि तयोः समुच्चय इति दिक् ॥ **सामर्थ्यलक्षण इति** । सामर्थ्यकृतो गुणभूतैर्वपिभिः सम्बन्ध इत्यर्थः ॥ **सर्वे ते** इत्यत्र तच्छब्देन गुणभूतस्यापि परामर्शोऽत्र पक्षे बोध्यः । अत एव दत्तेति [३]समानकर्तृकत्वम् ॥ **सहस्रदक्षिणा इति** । सहस्रदक्षिणा गोरूपा येषां दातृणान्ते इत्यर्थः । तेन गोसहस्रदानफला एव ते नत्वेकगोदानमात्रफला इति व्यवहारो यथा स्मृतौ तथा प्रकृतेऽपीति भावः ॥ **भुजेर्ब्राह्मणैरिति** । [४]सङ्ख्याया भोक्तृत्वानुपपत्तेर्गुणभूतब्राह्मणैरेव भुजेः सम्बन्ध इति भावः ॥ **भाष्येऽनेकाच्त्वमिति** । तन्मात्रमित्यर्थः । **एकस्यैवेति** । व्यापकस्येत्यपि बोध्यम् । अकारस्येत्युपलक्षणमित्युक्तम् । भाष्ये **उच्चारणं नामेत्युत्तरमत** इति शेषः ॥ **आन्यभाव्यमि**त्यस्यान्यत्वमित्यर्थो नेत्याह **अन्यस्येति** ॥ **अथवेति** । भावशब्दः कर्तृसाधन इति भावः । एवञ्च प्रतिप्रयोगमकारस्यान्यत्वमित्यर्थः ॥ **यथेति** । एवञ्चाय इत्याद्यकारो दण्डेत्यकाराद्भिन्नः । दण्ड अयमित्यादौ कालव्यवधानात् ।

---

१ समुच्चितद्योतकता ॥ क ॥ २ भाष्यस्यायमाशयः ॥ क ॥
३ समानकर्तृके क्तेति ॥ क ॥ इ ॥ ४ संख्यायां भोक्तृत्वानुपपत्तेः ॥ क ॥

दण्ड हस्तेति प्रयोगे हकारवत्। तथा दण्ड [1]इत्याद्यकारोऽन्याकाराक्षिप्तः। शब्दव्यवायात्। क्षतिरित्यादौ तकारव्यवहितेकारवत्। इत्यनुमानैर्भेदे सिद्धे उदात्तादिविरुद्धधर्मप्रत्ययोऽपि पारमार्थिक एवेत्याशयेन तद्भेदादपि भेदसिद्धिरित्यभिप्रेत्याह **उदात्तादीति** ॥ **नानात्वमकारस्येति**। युक्तमिति शेषः॥ ननु स एवोदात्तोऽकारः स एव देवदत्तेनानुदात्तः कृत इति प्रत्यभिज्ञा विरोधोऽत आह **प्रत्यभिज्ञानच्चेति**। विभुत्वं निराचष्टे भाष्ये **युगपच्च देशेति**। अर्कादिशब्दा एव देशपदेनोच्यंते॥ **देशपृथक्त्वेष्विति**। देशानां पृथक्त्वेषु भेदेषु सत्स्वित्यर्थः॥

एवं वर्णानामनेकत्वे परेण साधिते वर्णैकत्ववादी एकत्वं स्थापयितुं तद्दूषणोद्धारमाह भाष्ये **यदि पुनरिति**। तत्र शकुनिवदिति दृष्टान्तस्य तद्वत्परिच्छिन्नत्वे न तात्पर्यं तस्मिते तस्य विभुत्वादिति ध्वनयन्नाह **कालशब्दाभ्यामिति** ॥ **व्यक्तिस्फोटवादिन इति**। व्यक्तेर्नित्यत्वैकत्ववादिन एकैव शब्दव्यक्तिरिति वादिन इत्यर्थः। अनेनाद्यं दूषणं परिहृतम् द्वितीयं परिहरति **यथेति** ॥ **एवमिति**। अस्यानेकदेशेषु युगपदुपलम्भो व्यञ्जकवशादिति शेषः॥ पूर्वदृष्टस्य पश्चाद्दर्शनेऽपि अव्यवहितस्य व्यवधानेऽपि न भेद इत्येतन्मात्रेण दृष्टान्त इति भावः॥ नन्वेवं विभुत्वे नित्यत्वे च सर्वत्रदेशे सर्वदोपलम्भापत्तिरत आह **व्यञ्जकेत्यादि** ॥ **जातिस्फोटेति**। जातिरेवैका शब्दव्यक्त्यस्त्वनन्ता इति वादीत्यर्थः॥ भाष्ये **अनित्यत्वमेवं स्यादिति**। व्यक्तेरेकत्ववादी तस्या

---

[1] इत्यत्राद्याकारः॥ क॥

नित्यत्वं मन्यते इति भावः॥ ननु विभोरेकस्यापि व्यञ्जकवंशादनेकत्रोपलब्धौ कथमनित्यतेत्यत आह भवतेति॥ भाष्येऽपि नित्याश्च शब्दा इत्यस्य तवेत्यादिः॥ भाष्योक्तकूटस्थत्वाभावमुपपादयति रूपान्तरेति। तस्माद्भिन्ना एवानित्या एवाकारा इति पाठः। नित्या एवेति पाठस्त्वयुक्तः। अनन्तवर्णवादे तदनित्यत्वस्येष्टत्वादिति बोध्यम्। यद्यप्यनुदात्तत्वादीनां ध्वनिनिष्ठत्वाङ्गीकारान्नदोषस्तथापि स्फटिकस्येवास्यापि इतरसन्निधानेन तद्रूपपरिग्रहे संसर्गानित्यताविरोधिकूटस्थत्वाभाव इति भावः॥ पुनरप्येकत्वनित्यत्वे साधयति भाष्ये यदि पुनरित्यादिना। एकस्यैवाकारस्यानेकदेशेषु उपलब्धिरादित्यस्येव [1]भवतीति न तावच्छक्तिभेदः सिध्यति। अन्यथा आदित्यस्याप्यनेकत्वापत्तिरनित्यत्वापत्तिश्च [2]तद्देशसंसर्गेणाल्पप्रकाशत्वाधिकप्रकाशत्वादिगुणसंसर्गादिति भावः॥ विषम इति। आदित्यदृष्टान्तेनानेकदेशोपलभ्यमानाकारादिपक्षकैक्यसाधकः प्रत्यभिज्ञायमानत्वहेतुरनेकद्रष्टृकानेकदेशोपलब्धिविषयत्वरूपोपाधियुक्त इति न तेन भेदसाधकशब्दव्यवायहेतोः तत्प्रतिपक्षतायुक्तेति भावः। अकारं पुनरुपलभत इत्यस्यैको द्रष्टाऽनेकाधिकरणस्थमिति, शेषः। शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमयुक्तमित्याशयेनाह भाष्ये अकारमपि नोपलभत इति। अकारमप्यनेकाधिकरणस्थं नोपलभत इत्यर्थः॥ श्रोत्रोपलब्धिरिति। श्रोत्र एवोपलब्धिर्यस्येत्यर्थः। करणशक्तिमत्त्वेन समानाधिकरणबहुव्रीहिर्वा। एतद्विशेषणफलं दर्शयति श्रोत्रेति॥

---

[1] आदित्यस्येव सम्भवतीति॥ क॥    [2] तत्तद्देशसंसर्गेण॥ क॥

ननु दिश एव श्रोत्रत्वात्कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरत आह **आकाशेति**। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम्। चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वमावश्यकमिति भावः। दिशोऽनतिरिक्तमेव चाकाशमितितत्त्वम्॥ ननु तथाप्यतेजोंऽशगतघटादिरूपस्य तैजसचक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किन्न स्यादित्याशङ्क्य किमसम्बद्धं तद्ग्राहकं सम्बद्धं वानाद्य इत्याह **असम्बद्धेति**। अन्यथा रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणप्रसङ्गः। द्वितीयेऽपि किं श्रोत्रस्य विषयदेशगमनात्सम्बन्ध उतशब्दस्य श्रोत्रदेशगमनान्नोभयमपीत्याह **गमनाभावादिति**॥ **श्रोत्रस्य चेति**। चेन शब्दपरिग्रहः। उभयोरपि गमनाभावे हेतुर्निष्क्रियत्वम्। दूरदेशस्थशब्दाग्रहणं तु दूरत्वादेर्दोषस्य प्रतिबन्धकत्वाच्छ्रो[1]त्रदेशेऽनभिव्यक्तेः। [2]आकाशदेशत्वे च तदेव तस्यापि व्यापकत्वेन श्रोत्रदेशेऽभिव्यक्तस्य तेन ग्रह इति भावः॥ "आहङ्कारिकाणीन्द्रियाणी"ति" साङ्ख्यमतेऽपि इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वनियमादाकाशदेशत्वं श्रोत्रोपलब्ध्या शब्दस्य सिद्ध्यतीति बोध्यम्॥ श्रोत्रोपलब्धिरित्येव बुद्धिनिर्ग्राह्यत्वस्योक्तत्वात्पौनरुक्त्यमाशङ्क्याह **पूर्वपूर्वेति**। एवं [3]चाशु तिरोधीयमानानेकवर्णवत् घटकलशादिशब्दग्रहणसम्भवदर्शनाय तदुक्तमिति न पौनरुक्त्यम्। **प्राप्तपरिपाकेति**। तत्सहकृतेत्यर्थः। अन्त्यबुद्धिरन्त्यवर्णबुद्धिः। एवं च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृशसंस्कारविशि-

१ श्रोत्रदेशेनाभिव्यक्तेः॥ क॥ २ आकाशत्वे च॥
३ एवंचाशुति—।इ॥

त्वेन श्रोत्रेणान्त्यवर्णसम्बन्धेन वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूप-
पदादिप्रत्यक्षमिति भावः ॥ नन्वेवं सर्वदा शब्दोपलम्भः स्यादतो भाष्ये
**प्रयोगेणाभिज्वलित इति** ॥ तद्व्याचष्टे **प्रयुज्यते** इति ॥
**ध्वनिरिति** । वर्ण इत्यर्थः ॥ भाष्ये **एकश्च पुनराकाशमिति** ।
एवं चैकस्मिन्नाकाशफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रय-
स्यैकत्वात्तद्गतशब्दोऽप्येक एव तत्रैव च तस्योपलम्भ इति भिन्नदेशो-
पलम्भ एवासिद्ध इति भावः ॥ नन्वेकत्वेऽयं पूर्वोऽयं परोऽयं देवगृहे-
ऽयं राजगृह इति भेदप्रतिभासः कथमत आह **देशभेदेन-
त्विति** । औपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे बाधकः ।
एवं संसर्गानित्यतापि तस्येव नास्यापि बाधिका । तस्यापि नीलं-
नभ इत्यादिसंसर्गानित्यताप्रतीतेरित्याशयः । अत्र शब्द इत्येक-
वचनेन स्फोटस्यैकत्वमखण्डत्वञ्च ध्वनितम् ॥ ननु निरवयवस्य कथं
प्रदेशवत्त्वमत आह **यथेति** ॥ एवं चौपाधिकभेदेन भेदोद्-
वारः सर्वत्र भेद औपाधिक एव स एव च व्यवहारोपयोगीत्याशयः ।
श्रोत्रसम्बन्धस्तु प्रदेशान्तरोत्पन्नशब्दस्यापि वीचीतरङ्गन्यायेन कदम्ब-
मुकुलन्यायेन वा तन्त्रान्तरे व्युत्पादित एव ॥ तथापि पक्षेऽस्य
स्वावित्यादौ दोषो नेत्याह भाष्ये **आकृतिग्रहणादिति** ॥ तदाह
**अकारजातिरिति** ॥ **सर्वप्रदेशेष्विति** । प्रत्याहारेऽस्य स्वावि-
त्यादौ च । अकारव्यक्तीनामानन्त्यमाश्रित्य वार्त्तिककृता वर्णसमाम्नाय-
स्थस्य विवृतत्वेऽपि धात्वादिस्थस्यापि विवृतोपदेशो नोदितः । भाष्य-
कृता तु प्रयोगस्थानां प्रत्याहारस्थैर्ग्रहणाय तत्र जातिनिर्देश आव-
श्यके जातेर्विवृतत्वप्रतिज्ञानेनैव सर्वसिद्धेः स दोषो वारितः । अस्य

**ह्वा**वित्यादौ तु सत्यपि विवृतत्वेऽनण्त्वात्सवर्णग्रहणं न स्यादित्यपि जातिनिर्देशेनैव परिहृतम्। एवञ्चाणुदित्सूत्रेऽण्ग्रहणं न कार्यमित्याशयः ॥ **तस्याश्चेति** । स्वाश्रयव्यक्तिद्वारेत्यर्थः । तत्र प्रत्यापत्तिवाक्ये तपरनिर्देशात् षण्णामेकशेषनिर्देशाद्वा ह्रस्वस्यैव संवृतत्वं बोध्यम् ॥ ननु जातिनिर्देशेऽतिप्रसङ्ग इत्याह **अष्टन इति** ॥ **अन्यथा ह्रस्वमेवेति** । नच तन्निर्देशे ऽन्तरतमपरिभाषयादीर्घो न स्यादिति दीर्घविधानं दीर्घनिर्देशे तु तत्सामर्थ्यात्तस्यापि विधानं जातिग्रहणादन्यस्यापी[1]ति वाच्यम्। दीर्घनिर्देशसामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षया ह्रस्वानुपस्थितेरेवकल्पने लाघवमित्याशयात् ॥ ननु दीर्घोच्चारणसामर्थ्यान्माभूद्ध्रस्वः प्लुतस्तु स्यादत आह **प्लुतश्चेति** ॥ **विषये** दूराद्धूतादौ। अनेनापि प्लुतविधानेंऽशेऽनुवाददोषः स्यादितिभावः ॥ सर्वत्राकृतिर्निर्दिष्टेत्यत्र ज्ञापकमाह भाष्ये **तद्वच्चेति** ॥ सादृश्ये वतिभ्रमं व्यावर्त्तयति **स इति** ॥ **अथवा सत्यन्तमेतदिति**। [2]तद्वदित्यस्यास्य **च्वा**वित्यादिवदित्यर्थः॥ तदाह **तत्रन्यायेनेति**। तत्रास्य **च्वा**वित्यादौ। आकृतिग्रहणप्रयुक्तातिप्रसङ्गनिवारणार्थमेव हि तत्र तत्र तपरकरणम्। जातिपक्षेऽपि विवृतत्वप्रतिज्ञाऽकः **सवर्णे** इत्यादेर्दण्डाऽऽनतिरित्यादौ दीर्घार्थमावश्यिकैव। एवं प्रत्यापत्तिवचोप्यावश्यकमेव तुल्यन्यायात्। जातिग्रहणप्रयुक्तातिप्रसङ्गनिवारणाय तपरत्ववद्विधेये **त्यदादीनाम**

१ अन्यस्यापि च इति वाच्यम् ॥ क ॥

२ तदा तद्वत् ॥ क ॥ इ ॥

इत्यादौ तद्वारणाया[१]प्रत्यय इत्येतदिति बोधितम्। अत एवेऽण्ग्रहणप्रत्याख्यानेऽपि ऋऌवर्णयोः सावर्ण्येन समानजातित्वातिदेशान्नदोष इति भावः॥ **अवात्तामिति**। वसेर्लुङ् तस्य तां सिच् सः सीति तलं **वद्व्रजेति** वृद्धिः। **झलोझलीति** सलोपः॥ ननु वचनसामर्थ्यात् झल्सदृशेऽपि भविष्यतीत्यत आह **अभित्था इति**। भिदेर्लुङि सिचिरूपम्। आकृत्यनाश्रयणेप्याह भाष्ये **रूपसामान्यादिति**॥ तद्व्याचष्टे **व्यक्तीति**॥ **अभेदव्यवहार इति**। रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः। अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु गौर्घट इत्यादिव्यवहारवदिति भावः। एवं च व्यक्तिव्यतिरिक्तजातिस्वीकारोऽपि व्यर्थ एवेत्याशयेनाह **व्यक्तिव्यतिरिक्तन्त्विति॥ मा वेति**। अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरितिभावः। सादृश्यञ्चात्र समानध्वनिकृतम्॥

**ऋऌक्॥ २॥** भाष्ये [२]**अथ ऌकारेति**। यद्यप्येतच्चतुर्दशसूत्री विवृतौ नन्दीश्वरकृतकाशिकायामनेकेषाम् ऋषीणां नानाविधार्थजिज्ञासायां शिवेन सर्वजिज्ञासानिवृत्तये एषा ढक्कानिनादेन प्रकाशितेत्युक्तमितीदमनुपपन्नं तथापि पाणिन्युद्देश्यकं फलमस्ति न वेति एतत्तात्पर्यम्। अन्यवर्णचतुर्दशकन्तु पाणिन्युद्देशेनैवोपदिष्टमित्यपि तत्रैव स्पष्टम्॥ [३]**प्रयोगविषय इति** कर्मधारयः। प्रयोगादन्यत्रानभिव्यज्यमानतया प्रयोगो विषय इत्युक्तः॥ **अल्पेति**। यथा मुद्गादखित्यादेः॥ ननु [४]ऌकारेऽच् कार्यप्रवृत्तावपि ऌकारे

---

१ तद्वारणाय प्रत्यय इत्येतत्॥ क॥ २ अथ ऌकारेति॥ ड॥
३ भाष्ये॥ ४ ऌकारे कार्यप्रवृत्तावपि॥ क॥

कथं तत्कार्यादात्तत्वादीनां दर्शनमत आह तत्रेति॥ **स्थानेऽन्तरतम इतीति।** यद्यपि **कृपो रो लः** इत्यत्र रेफलकारयोः स्थान्यादेशभावस्तथापि तद्द्वारा ऋकारऌकारयोरपि स इति भावः॥ **अर्थगतमिति॥** शब्दातिरिक्तमर्थरूपमित्यर्थः। यद्वा व्यक्तिरेव वाच्यता तस्यां[1] प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्तिग्रहोपपत्तिः सविकल्पकोपपत्तिश्च तत इति भावः॥ **प्रयोक्त्रभिप्रायेणैवेति॥** शक्तिबोधकं प्रयोक्त्रधीनमिति भावः। अन्यथा शब्दार्थसम्बन्धस्यानित्यतापत्तिः। एवं च स्वेच्छयैकस्यां व्यक्तौ सङ्केत्यमानः शब्दो यदृच्छाशब्द इति बोध्यम्॥ ननु ऋकारस्याच्त्वे ऋऌवर्णयोः सावर्ण्यात् ऋकारेण ऌकारस्यापि[2] ग्रहणाद् कार्यसिद्धौ किं ऌकारोपदेशेनेत्यत आह[3] **ऌकारेति॥ उपदेशः कृत इति।** पाणिनये शिवेनेति शेषः। वस्तुतोऽत्र तस्यानुपदेशेऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः। सवर्णविधिद्वारकं फलमपि ऌलन्तय एवेति तत्रैव प्रयोजनोपन्यास इति बोध्यम्॥ ननु सत्त्वमसत्त्वं वा क्रियायोगमर्थगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दत्वे किं मानमत आह **अर्थवदिति।** चिन्त्यमिदं बकच्पूर्वं तस्य चारितार्थ्यात्। एतदर्थं तद्धितपदं तद्विशिष्टपरम्। अप्रत्यय इत्युक्तेश्च पचतकीत्यादौ न दोषः। प्रत्ययश्च तद्धितभिन्न एव। बकपटवस्तिष्ठ-

---

१ तस्यां च ॥ क ॥

२ ग्रहणाच् कार्यसिद्धौ ॥ क ॥

३ ऋकारेति ॥ क ॥

न्तीत्यादौ यं समुदायमिति न्यायेन न दोष इति कैयटाशयं मन्ये॥ ननु स्वतकस्यासाधुत्वात्कथं [1]शास्त्रविषयतेत्यत आह गाव्यादीनामिति॥ स्वतकेन स्वतकानिवृत्तौ हेतुरर्थाश्रयेणेति। स्वगतक्रियारूपार्थाश्रयेणेत्यर्थः। अर्थतः सजातीयस्यैव निवृत्तिः। एकप्रवृत्तिनिमित्तकत्वे सति अन्वाख्यातमनन्वाख्यातस्य निवर्त्तकमिति भावः। तद्ध्वनयन्नाह भाष्ये चतुष्टयीति। शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवतीत्यर्थः। तत्र यदृच्छाशब्दो नाम वक्त्रा स्वेच्छया सन्निवेशितः। स चानेकविधः। एकव्यक्तिसन्निवेशितो डित्थादिरेकस्तत्र न किञ्चिदतिरिक्तं प्रवृत्तिनिमित्तमानन्त्यव्यभिचारयोरभावात्। किन्तु शब्दस्यैवार्थस्य विषयताद्वयेन भानम्। तदुत्तरत्वादेः प्रकारत्वावच्छिन्नः स एवार्थः। यद्वा शब्दपराद्दाच्येऽर्थ एव त्वादिः। एवं क्वादिपदानां कादीनामेकत्वमते तेषु शक्तिः। ततो डित्थादिपदादिव शब्दार्थे एव त्वादिः। कुत्वमिति कुरिति च पर्यायौ। अनेकत्वमते तत्तत्त्वात्युपलक्षिते. सा। टिघुभादीनां तु तच्छब्दानामानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तं तदेव च तदुत्तरत्वाद्यर्थः। भत्वादिपदैर्भादिसंज्ञैवोच्यते। अतएव वृद्धिसूत्रे वक्ष्यति कुत्वं कस्मान्न भवति चोः कुः पदस्येति भत्वात्कथम्भसंज्ञेति। अनेन च भाष्येण कुकुत्वपदयो[2]र्भत्वभसंज्ञापदयोः पर्यायत्वं स्पष्टमेवोक्तम्। संज्ञा च पदमेव॥ ननु चतु-

---

१ शास्त्रीयविषयता॥ क॥

२ भत्वसंज्ञा॥ क॥

विधेय्वनुकरणशब्दाः कान्तर्भवतीत्यत आह **अशक्तिजेति** ॥ **यस्मादिति** ।. अनुक्रियमाणशब्दस्यशक्यो वक्तः प्रत्यभिज्ञातु जातिनिबन्धना रूपसादृश्यनिबन्धना वेतिभावः । एतेऽपि यदृच्छाशब्दाः स्वेच्छयैव वक्त्रा शब्दपरतया प्रयोगादित्यन्ये । सुत्यादिकञ्च **गुरोरनृत** इति सुतः। **अनचिचेति** द्वित्वम्। प्रपूर्वाल्लपेरन्तर्भावितण्यर्थात्कर्मणि क्ते **गतिरनन्तर** इति पूर्वपदप्रकृतिस्वरे वर्ज्यमानस्वरेण शिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितत्वम् ॥ **अनृत** इति निषेधस्तु न[2]ऋदिदृलृदिदिति पृथगनुबन्धकरणेन क्वचित् परस्पराग्रहणज्ञापनात् ॥ **न्याय्य इति** । संज्ञात्वेन कल्पयितुमिति शेषः। तत्र हेतुमाह **कृदन्तमिति** ॥ प्रकृतिप्रत्ययादिविभागेनान्वाख्यातत्वमेव न्याय्यत्वमित्याशयेन शङ्कते **सर्वशब्देति** । शिष्टप्रयुक्तत्वमपि न्याय्यत्वमिति परिहारः । न च तस्यैव प्रयोगे लृतकशब्दो बोधकोऽपि न स्यादिति वाच्यम् । बोधकत्वेऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात् । तद्ध्वनितं भाष्ये **साधुमन्यन्त** इति ग्रन्थेन ॥ [3]**ऋतक एवासाविति** । लृतकशब्दप्रतिपाद्य एवासौ न लृतकशब्दप्रतिपाद्य इत्यर्थः ॥ **इदानीन्त्विति** । भाष्ये **कल्पयितव्य** इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः । साधुऋतक एव नामत्वेन ज्ञातो न लृतकः । अशक्त्या तु तथोच्चारणमित्यपभ्रंशत्वान्न शास्त्र[4]-

---

१ अन्तःकरणशब्दः कान्तर्भवतीति ॥ क ॥

२ ऋदिति लृदिति ॥ क ॥

३ भाष्ये ।

४ शास्त्रीयविषयः ॥ क ॥

विषय इति भावः । **अशक्तिजत्वादिति** । जिह्वाऽपाटवजत्वादित्यर्थः । एवञ्चासाधुरेवेति भावः । ऌतकाद्वृफिड्डे वैषम्यं दर्शयति **ऋतकशब्द इति** ॥ **ऌतकशब्दस्येति** । अनन्वाख्यातस्येत्यादिः । फिडफिड्डयोरुणादिष्वदर्शनादाह **उणादय इति** । बाहुलकसिद्धावेतावित्यर्थः ॥ [1]**अर्त्तिप्रवृत्तिश्चैवेति** । तथाच फिडफिड्डयोः स एव प्रकृतिर्न तु ऌ इति धात्वन्तरं कल्प्यम् । संज्ञासु धातुरूपाणीति तु अनादिशिष्टप्रयोगसाधने उपायमात्रं न त्वाधुनिकक्रियमाणसंज्ञानुग्राहकमिति भावः ॥ एवं च देशभाषानुसारेण क्रियमाणं कूचीमञ्चीत्याद्यसाधु शास्त्राविषयस्येत्युक्तम् ॥ **अर्त्तेरिति** । यतस्तस्य लोके प्रवृत्तिर्लक्ष्यतेऽतः फिडादिप्रकृतित्वेनापि तस्यैव प्रवृत्तिरित्यर्थः । एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां कैश्चिच्छिष्टप्रयुक्तानामेव यत्र कुत्रचित् संज्ञात्वेन विनियोगो नान्येषामित्येव[2] । ऌतकऌफिड्डादीनां शास्त्रविषयत्वाभावान्न तदर्थं ऌकारोपदेश इत्युक्तम् । इदानीं न सन्त्येव यदृच्छाशब्दा इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे भाष्ये **चयीचेति** । चेनेदं ध्वनितम् ॥ नन्वेवं डित्थादीनां कान्तर्भावोऽत आह **अद्यत्वेऽपीति** । एवं च सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेति भावः । **प्रशंस्यरूपेति** । अत्यन्तप्रशंसायोग्येत्यर्थः ॥ एवं च येषां [3]क्रियागुणादिप्रवृत्तिनिमित्तकत्वं तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम् । यद्वा[4] पूर्वपूर्वगत-

---

१ भाष्ये । २ नान्येषामित्येवम् ॥ इ ॥ ख ॥

३ गुणक्रियादि ॥ क ॥ ४ पूर्वपूर्वडित्थादिगत ॥ क ॥ इ ॥

डित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव ¹डित्थादिभ्यो बोधः। आद्ये डित्थे तु तद्व्यक्तेरेव विषयतावच्छेदकेन भानमिति सैव प्रवृत्तिनिमित्तमपीति **तस्य भाव** इति सूत्रे भाष्ये उपपादयिष्यते॥ **अव्युत्पत्तौति**। संज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः॥ **आचार्येणेति**। शिवो वेदपुरुषो वाचाचार्यः। एवं च यदृच्छाशब्दसद्भावाश्रयेण प्रयोजने उक्ते तदनाश्रयणेन तत्प्रयोजननिराकरणमयुक्तमिति भावः। ऋतकशब्द ऋतकशब्दस्य साधुत्वाभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह भाष्ये **समानेचेति**। तत्रार्थशब्दः प्रवृत्तिनिमित्ताभिप्राय इत्याह **इहचेति**॥ तच्छब्दस्वरूपस्य व्यक्तिस्वरूपस्य वार्थे प्रवृत्तिनिमित्तत्वेनाध्यास इत्यर्थः॥ **विपर्यय इति**॥ क्रियाप्रवृत्तिनिमित्तमित्यर्थः। **भिन्नस्वरूपौ** भिन्नप्रवृत्तिनिमित्तौ। यदि तु ऋतकोऽपि शब्दप्रवृत्तिनिमित्तिकस्तदा भिन्न²रूपत्वादेव प्रवृत्तिनिमित्तविपर्ययः। व्यक्तेरेव प्रवृत्तिनिमित्तत्वमितिपक्षे ऋतकसङ्केतविषयव्यक्तेर्लृतकसङ्केतविषयव्यक्तिर्भिन्नैवेति तद्विपर्ययोऽस्त्येवेति बोध्यम्॥ भाष्ये समाधत्ते **पक्षान्तरैरपीति**॥ **जातिपक्षेत्विति**। यत्तु सचादिनानार्थानामेकशेषाय तत्पक्षेऽप्यावश्यकमिति तन्न जातिगतजातिस्वीकारेण परिहृतम्। पक्षान्तरैरपि परिहाराभवन्तीति वार्त्तिककृतैवमुक्तम्। वस्तुतश्चतुष्टयीपक्षेऽपि दोषपरिहारः सुकरः। यदुक्तमृतको न लृतकनिवर्त्तक इति माभूत्तस्य निवर्त्तकत्वं शिष्टप्रयोगाभावात्तुतन्निवृत्तिः। न्याय्यत्वमपि वार्त्तिके

१ डित्थादिशब्देभ्यो बोधः॥ क॥
२ भिन्नस्वरूपत्वादेव॥ क॥

शिष्टप्रयुक्तत्वमेवेत्य[१]भिसन्धाय भगवतानुक्तमपि स्वयं मन्दबुद्ध्यनुग्रहाय स्फुटमाह **अव्युत्पन्नेति । पारम्पर्यगताः ।** अनादयः। एवं च शिष्टाप्रयुक्तयदृच्छाशब्दा असाधुत्वेन शास्त्राविषया इति भाष्यतात्पर्यम् । यत्तु चतुष्टयीतिपक्षे लृतकादीनां टिघुभादिवच्छास्त्रविषयत्वमेवेत्यस्माद्भाष्याल्लभ्यत इति तन्न । पक्षभेदेनैकस्य शास्त्रविषयत्वतदविषयत्वाङ्गीकारे **न वेति** सूत्रस्थभाष्यविरोधात् । टिघुभादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेऽपि अन्येषां तद्विषयत्वे मानाभावाच्च । किञ्च साध्वसाधुवहिर्भूतानामपि शास्त्रविषयत्वे साध्वनुशासनेऽस्मिन् शास्त्रे इति तत्र तत्र भाष्योक्त्यसङ्गतिः । किञ्च शास्त्रविषयत्वमथ तद्ग्राह्यसाधुत्वाभाव इत्यशक्यमिति दिक् ॥ अनुकरणं शिष्टस्य वा अशिष्टाप्रतिषिद्धस्य वा भवति । तत्राद्यं साधु अन्त्यन्नदोषाय नाप्यभ्युदयायेति भाष्येऽन्वयः ॥ अर्थात् प्रतिषिद्धाऽनुकरणस्य दुष्टत्वं बोध्यम् ॥ ननु शिष्टानुकरणं नासाधु अशिष्टाप्रतिषिद्धस्य वा नासाधु । आद्यस्याभ्युदयजनकत्वात् । अन्त्यस्याभ्युदयाजनकत्वेऽपि दोषाजनकत्वात् । एवं च प्रकृते किमायातमत आह **अनुकार्य्यस्य दुष्टत्वादिति ।** अर्थलब्धं तदादाय प्रकृतोपयोग इत्यर्थः । अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति । [२]**यस्तु खल्विति ।** एवञ्चासाध्वनुकरणस्यासाधुत्वाच्छास्त्राविषयत्वात्तदर्थता लृकारोपदेशस्य न युज्यत इति भावः ॥ भाष्ये **यजेत वेति ।** यागोऽत्र स्मार्त्तो ग्राह्यः ॥ **सादृश्याभावादिति ।** [३]नचैकजातीये-

---

१ अभिधाय ॥ क ॥   २ भाष्ये ॥   ३ नवैक ॥ क ॥

ऽपि व्यक्तिभेदेन[1] साद्दश्यसम्भवः। सुरापानत्वादेरेव ताद्दशस्थले साद्दश्येन तदतिरिक्तसाद्दश्याभावादित्याशयात्। तदाह **नास्त्येति**॥ दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह **स्मार्त्तत्वादिति**॥ **अस्वस्थेनेति**। आस्तिकत्वे सत्यपीति भावः॥ **माल्यगुणकण्ठ इति**॥ मालायां साधूनि माल्यानि पुष्पाणि तैर्युक्तो गुणः सूत्रं कण्ठे यस्येत्यर्थः। **गड्वादि**त्वात्परनिपातः। **अकार्यं ह्रीति**। इह लोके भीरुणेत्यर्थः॥ भाष्ये प्रयोजनप्रत्याख्यानवादीशङ्कते **एवमिहापीति**॥ प्रयोजनवादीसमाधत्ते [2]**अयन्त्वन्य इति**। अर्थभेदेन साधुत्वे दृष्टान्त माह। **अस्येति**॥ [3]**अस्य ह्रीति**॥ एवं च [4]तदर्थं व्याकरणा[5]ननुगतत्वमपशब्दत्वमिति भावः॥ भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वम् लृकारोपदेशस्याह **अयं खल्वपीति**। यद्यप्यर्थशून्यवर्णानां न साधुत्वं तथापि वर्णात्कारविधानेन तेषां साधुत्वमिति भावः॥ [6]**भवेत्तदर्थेनेति**॥ तदर्थेन कॢपि[7]स्थलकारार्थेन लृकारस्यो[8]पदेशेन प्रयोजनं न भवति। एवं यद्यपि भवेत् तथापि तदनुकरणार्थं नार्थ इत्यर्थः॥ ननु कॢपि स्थस्यासिद्धत्वात् कथं तदनुकरणमत आह **प्रयोगस्येति**॥ **प्रयोगे** अनुकरणप्रयोगे। शास्त्रे तदीयकार्ये वाऽसिद्धत्वं पौर्वाप-

---

१ व्यक्तिभेदेनैव॥ क॥ २ भाष्ये॥

३ "अस्य ह्रीति" "हि" इति आदर्शपुस्तकत्रयस्थकैयटपुस्तके नास्ति॥ ४ तत्तदर्थे॥ क॥

५ व्याकरणानुगतत्व॥ सं॥ ६ भाष्ये॥

७ कॢपिस्थ लृकारार्थेन॥ क॥ ८ उपदेशे॥ क॥

र्थस्य तत्रैव सम्भवान्नैवं प्रकृते इति भावः ॥ **ऋकारद्वारेणेति** । ऌकार बुद्ध्येत्यर्थः ॥ भाष्ये **द्विः पचन्त्विति** । पचन्त्विति द्विराहेत्यन्वयः । असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह **एतच्चेति** ॥ **ह्यर्थेति** । एतदर्थमेव द्विवचनमित्यन्वर्थसंज्ञाकरणम् ॥ **नन्विति** । एवं च पाठाभावे मूलस्यैवाच्त्वाभावात्कथं तदनुकरणेऽच् कार्यमिति तदर्थं उपदेश आवश्यक इति भावः ॥ **अनुमीयन्त इति** । इदश्चिन्त्यम् । आनुमानिकवचनेन ऌतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्माद्गम्ऌ इत्यादिस्थ ऌकारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम् । एवञ्चाशक्तिजानुकरणेति वार्त्तिकेऽशक्तिजपदं [1]व्यर्थमिति कैयटतात्पर्यम् ॥ एवं साध्वनुकरणार्थत्वे ऌकारोपदेशस्य प्रकृतिवदित्याश्रयणेन खण्डिते तेनैवाशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी भाष्ये **यदि प्रकृतिवदिति** ॥ ननु माभूदपशब्दोपदेशः प्रकृतित्वं तु कथं नेत्यत आह **प्रकरणादिति** ॥ अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः ॥ उपलक्षणं भाष्यमित्याह **शास्त्रनिबन्धनं चेति** । नापि तदतिदेष्टुमित्यादि चिन्त्यम् । अब्रा[2]ह्मणे ब्राह्मणत्वाद्यतिदेशवत् सम्भवादिति कश्चित् । **तदेवमिति** । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थम् ऌकारोपदेश इत्यर्थः ॥

---

१ अनर्थकम् ॥ क ॥

२ ब्राह्मणे अब्राह्मणत्वाद्यतिदेशवत् ॥ क ॥

इदानीं श्रुताद्यर्थत्वं तस्य परिहरति भाष्ये **एकदेशेति** ॥ **रेफभागस्येति**। वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इतिपक्षे इत्यर्थः ॥ **प्रत्यभिज्ञानादिति**। एवं च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य स्थत्वमित्यर्थः ॥ व्याख्यानभाष्येऽ**नन्यवदित्य**स्यान्यवत्त्वेत्यर्थः। अन्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम्। सिद्धान्त्येकदेशी वतिं दृष्ट्वा स्थानिवत् सूत्रमनेनोपन्यस्तमित्याशयेन[1] आह **षष्ठीनिर्दिष्टस्येति**। तत्सम्बन्ध्येकदेशविकृतमादेशरूपमित्यर्थः॥ नन्वल्लोपोऽन इत्यत्रानपि षष्ठीनिर्दिष्ट एवेत्यत आह **राज्ञ इति**। येन विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थ इति भावः ॥ भाष्ये **प्लुतो न प्राप्नोतीति** द्विर्वचनादेरप्युपलक्षणम्। [2]**कस्तर्हि रेफ इति**। क्लप इति लवयवषष्ठीति भावः। [3]**क्लप ऋरिति** क्लपे रेफस्य लस्तदवयव ऋकारस्य च लकारघटित आदेश इत्यर्थः॥ स्थानिनिर्देश एव तादृशादेशकल्पक इति भावः॥ एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदश्लिष्टमित्यपास्तम्॥ ननु स्थानिवत्सूत्रे हि तथा प्रकृते च न तेनातिदेश उच्यते किन्तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्वमुच्यते। तत्र षष्ठीनिर्दिष्टस्येति वक्तुमेवाशक्यमित्याशयेनाह भाष्ये **अथवेति**। ननु क्लादेशेऽनत्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह **न च राजन्निति**॥ एकदेशपदेन षसम्बन्धिकतयोपस्थितावयविधर्म एव विकारविशिष्टे आ-

---

१ उपन्यस्तमत आह ॥ क॥ २ भाष्ये-॥ ३ भाष्ये॥

रोप्यते नत्ववयव एव लोकव्यवहारादिति भावः॥ भाष्ये **इह तर्हीति।** एकदेशविकृतन्यायेन स्त्वादिति भावः॥ [1]**रोऽस्यास्तीति** इदं चिन्त्यम्। अवयवादावेव मत्वर्थी नानन्तरादाविति **वर्त्तक** इत्यादौ रत्वस्योपपादयितुमशक्यत्वात् नित्ययोगपर्यन्तधावनमफलमिति॥ भाष्ये **स एष इति॥** श्रुत्याद्यर्थं विद्यमानत्वकारोपदेशोऽरवतो ह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः॥ कुत इत्यत आह **सैषेति।** यतः सैषा प्रत्याख्यानात्मिका उक्तिः। महतो वंशस्तम्बाल्लट्वानुकर्षाभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तम्। एवं त्वकारप्रत्याख्यानमिति गम्यते। तदाह **निष्प्रयोजनमिति।** सूत्रभेदपरिकल्पनं विना क्लृप्तशिखे श्रुतसाधनस्याशक्यत्वात् निष्प्रयोजनमित्यर्थः॥[2] **वंशस्तम्बादिति** ल्यब्लोपे पञ्चमी तमवलम्ब्येत्यर्थः। लट्वा पक्षिविशेषः फलविशेषो वा। तद्यथा बह्वायाससाध्यमल्पफलं न युक्तन्तथा त्वकारोपदेशप्रत्याख्यानमपीत्यर्थः॥

**ए ओङ्। ३॥ ऐ औच्॥ ४॥ विचार्यत इति।** कृत्वा चिन्तान्यायेनायं विचार इति बोध्यम्। इदं पदार्थमाह **तपरेति॥ असत्त्वभूतेति।** एवञ्चेदमापरामर्शोऽनुपपन्न इति भावः॥ **बुद्ध्या परामृष्टेति।** उपदेशपदार्थभूतेत्यर्थः॥ **कर्मभावमिति।** इदंपदवाच्यत्वे नेतिभावः॥ **यथेति।** इदं चिन्त्यम्। कर्त्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात्॥ पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितो-

---

१ इङ्गलण्डीयपुस्तके "रोऽस्य–" इत्यारभ्य "फलमिती" त्यन्तं नास्ति॥

२ भाष्ये॥

ऽत आह **कार्यें इति।** भेदाभावादुद्देश्य विधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति **यद्यपीत्यादि ॥ फलं चेदिति।** सम्प्रदाने घञितिभावः। फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये॥ **सन्धीयमानावयवत्वादिति।** अ इ उणिति श्रियमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः॥ भाष्ये **प्लुतिग्रहणं** त्रिमात्रपरम्। आदिना चतुर्मात्रग्रहणम्॥ **नन्वोमभ्यादाने** इत्यादौनाऽन्तरतमपरिभाषासंस्कृतेनैज् रूपप्लुतविधानादनच्त्वेपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह **तत्रैचामिति।** ताभ्यामपि तेषां यथाकथञ्चिदान्तरतम्यसत्त्वादिति भावः॥ भाष्येऽर्ध **एकार इति।** मात्रिकत्वेनार्धत्वम्। समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात्॥ भाष्ये **तेनाप्येतद्वक्तव्यमि**त्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते। सूत्रन्यासभेदेऽपि गुरुलाघवतो विशेषो नास्तीत्याह **सूत्रारम्भं प्रतीति ॥ विश्लिष्टेति ॥** उपलभ्यमानेत्यर्थः॥ **संश्लिष्टेति।** स्पष्टमनुपलभ्यमानेत्यर्थः॥ एवं चैङ् विषये नावर्णप्राप्तिः। अद्वैङोस्तु तपरनिर्देशेऽनच्त्वाद् ह्रस्वत्वमेव नेतिभावः। एङोः शुद्धतालव्यत्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम्। **संश्लिष्टावर्णाविति** कैयटस्याप्यत्रैव तात्पर्यमिति॥ भाष्ये **प्रत्याख्यायते एतदिति।** एतद् ऐज्विषयम् एच इति सूत्रम्। वर्त्तमानसामीप्ये लट्॥ **भूयसाचेति।** तद्द्वारकभूयः स्थानसाम्यादित्यर्थः॥ भाष्ये **इदमपीति।** एङ्विषयमपीत्यर्थः। **सस्थानत्वादिति।** इकारोकाराभ्यां समानस्थानत्वादित्यर्थः। तदाह **तालव्य इति।** तालव्य एवेत्यर्थः। इदञ्च मतमष्टमेऽपि भाष्ये स्पष्टम्। शब्दपरविप्रतिषेधेनोत्तरभाग-

सदृश इति विवरणोक्तन्तु चिन्त्यम्। अन्तरङ्गत्वेन पूर्वसदृशस्यैवापत्तेः। स्पष्टं चेदं नित्यः परयणादेश इत्यादिनाचः **परस्मिन्**नित्यत्र-भाष्ये। भाष्ये **तावेवेति** । लाघवादिति भावः॥ **ग्रहणमिति**। प्रदेशेष्विति शेषः ॥ नन्वेवं मात्रिकयोरेव गुणसंज्ञास्यादत आह **गुणेति** । एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति । **अका-रस्यार्धमिति**। [1]**सुजाते ए अश्वेति** अकारलेखस्तु प्रामादिकः। शास्त्रविशेषाध्यायिनां समवायः परिषत् पर्षद्वा तत्र भवा कृतिरि-त्यर्थः। तदेवमतपरवादिमतसाधारण्येनैच **इगिति** सूत्रस्य कर्त्तव्य-ताकर्त्तव्यते उपपाद्यतपरवादिमतेऽसाधारणं दूषणमाह भाष्ये **एकादेश इति** । एकः पूर्वपरयोर्दीर्घ इति सूत्रं कार्यमित्यर्थः ॥ **अन्यस्यासम्भवाद् इति** । अयं भावः। यथा **ख्याघ्वोरि**त्येत्यत्रा-तपरत्वे ख्याध्वोर्दीर्घस्य स्थाने घुमास्थेत्येव दीर्घकारे सिद्धे पुनर्वचनम-दीर्घार्थमित्यविशेषाद्धस्वप्लुतयोः प्रसङ्गे तदुक्तं **प्लुतस्य विषये इति**। एवं च दूराद्धूतादिविषयेऽप्यनेनैव प्लुते पक्षेऽनुवाद दोषस्तत्र । इहतु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवे-त्यनुवाददोषः सोढव्य एवेति वैषम्यमिति॥ [2]भाष्ये **यः स इति** । प्रसिद्ध्यर्थकम् ॥ **वा छन्दसीत्यत्रेति**। वा छन्दसीत्यस्या-नुवृत्त्यर्थमित्यर्थः॥ **पूर्वरूपार्थेति** । पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यर्थः॥ भाष्ये **पर इतीयतेति** । ह्रस्वत्वादिरूपमिति भावः। सिद्धान्ते रूपग्रहणं स्पष्टार्थमेव। अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात् ॥ [3]**अकारो-**

---

१ भाष्ये ॥ २ वस्तुतोऽस्य टित्वाभावादेतद्विषये प्लुताप्रवृत्तेश्चिन्त्यमेवेद-मिति ख्याध्वोरिति सूत्रे निरूपयिष्यामः॥ क॥ ३ भाष्ये॥

**नेति**। रपरत्वेऽपि द्विमात्रत्वरूपदीर्घत्वासम्भव एव ॥ [1]**विगृहीतस्येति**। दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपपन्नत्वादिति भावः॥ ननु गुणवृद्धिसंज्ञयोस्तपरत्वाभावात् पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह **तपरसंज्ञेति**। तपरशब्दनिर्दिष्टे संज्ञिनि गुणवृद्धिसंज्ञे प्रवर्त्तेते इत्यर्थः। एवं च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्त दोष इति भावः। भाष्ये **ननुचेति** ॥ एवंचैङैचौ न तपराविति भावः॥ [2]**नेत्याहेति**। स एव तपर इति नेत्याहेत्यर्थः॥ अर्थभेदेन शब्दभेदे **तन्त्रन्यायेति**। तद्भेदेऽपि शब्दैक्यपक्षे आह **एकस्यैव द्विशक्तित्वादिति** ॥ **एकशेषेति**! समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम्। सुखसुखार्थं इति पाठे मयूरव्यंसकादित्वात्समासः॥ नन्वेङैजिति संज्ञायास्तात्परत्वेऽपि संज्ञिनामेकारादीनां किमागतमिति चेन्न। तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैव संज्ञेत्यर्थान्न दोषः॥ **गुणानाञ्चेति**॥ अण्सु गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमितिभावः॥ ननु दित्वे दिव उदित्यत्र तत्कालग्रहणं न स्यादत आह **तपरसूत्रे चेति**॥ **इहेति**। तपरसूत्रे दकारानाश्रयणेनचेत्यपि बोध्यम्। **अकारस्थानिक इति**॥ तस्य चैतद् दृष्ट्याऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरितिभावः॥ अवयवग्रहणेना[3]वयवसदृशवर्णग्रहणेन ग्रहणं स्यान्न वेति भाष्यार्थः। तत्फलितमाह **तत्र केवलेति**॥ नन्वकारेण एङ-

---

१ भाष्ये॥ २ भाष्ये॥ ३ अवयवसदृशग्रहणं स्यात्॥क॥

वयवग्रहणसन्देहवद् अकारादीनामैजादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह **तत्र समुदायेति**। अत एव प्राटतीत्यादौ न पररूपम्। तत्र दृष्टान्तमाह **अवयवपरेचेति**। यथावयवपरे निर्देशे समुदायो न संज्ञाभाक्। एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः। तदुपपादयति **यथेति**॥

**अन्यचेति**। सर्वस्यावयवस्यान्यत्र पृथङ् निर्देशे समुदाय निर्देशः स्वपर एव। सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदाय निर्देशोऽनिर्दिष्टावयवपर इति विवेकः॥ नन्वैजादिसंज्ञानामवयवावृत्तित्वे कथमेचो निवर्त्तकेनायादिना तदवयवस्य निवृत्तिरत आह **तत्रासत्यामपीति**। तन्निवृत्तिं विना समुदायनिवृत्तेः कर्त्तुमशक्यत्वादितिभावः॥ **अवयवकार्यं** दीर्घः। **समुदायकार्यम्** अय्। **तत्र च साक्षादिति**। दीर्घे। अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः॥ साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः। नन्वयादिरनवकाशोऽत आह **अयादीनाऽमिति**॥

**नन्विति**।· ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः॥ परिहरति **येनेति**॥ **प्राधान्येनानिर्देशादिति**। अस्यैजादिसंज्ञाभावेऽपि स्वतन्त्राकारेणाग्रहणं स्यादिति शेषः॥ भाष्ये**ऽभ्यन्तरश्चेति**। तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः॥ तदाह [१]**तद्यथा वृक्ष इति**॥ तदुपपादयति **तिरोहितत्वादित्यादिना**॥

---

१ भाष्ये॥

[1]**समुदायकार्ये पारतन्त्र्यादिति।** समुदायसम्पाद्यनरूपे कार्ये पारतन्त्र्यादित्यर्थः॥ **स्वकार्यस्याप्रयोजकत्वादिति।** स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः॥ तत्प्रयोजकत्वाभावे हेतुः। **नरसिंहवदिति।** तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्य[2]त्वाद्यभाव इति भावः॥

**वचनादिति।** अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ इत्य-समाना इति पूर्वव्याकरणवचनादित्यर्थः॥ **समानकार्यम्।** अनुप-समानाचरकार्यमित्यर्थः। **सवर्णकार्यमिति** पाठे सवर्णदीर्घरूप-कार्यमित्यर्थः॥ भाष्ये **दीर्घाच्छे इति॥** दीर्घस्य छे तुगिति हि तदर्थः॥ ननु **ह्रस्वस्येत्यत्राच** इत्येवसिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुग्नेतिचेन्न। पदलाघवाभावादित्याशयात्। [3]**अस्तिह्येति।** तच्च दीर्घादित्यस्याभावे कुब्जच्छायेत्यादावपि विकल्पः स्यादिति भावः॥

**असिद्धवदिति।** चिणो लुङ् न्यायेनेति भावः। भाष्ये **उत्तरार्थमेतदिति।** "इह किंचित्तपो" इति न्यायस्तु ना-श्रितः। अत्र केवलाकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवादिति भावः॥ **सन्निपातेति।** न च दीर्घेणैव स निव-र्त्तितः। दीर्घेऽप्यत्वजाति सम्बन्धसत्त्वेन न तथा सन्निपातक्षतिः। लोपेतु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः॥ परेतु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति यत्वनिमित्त-

---

१ "वालेयटाइन" मुद्रापितकैयटपुस्तके "समुदायकार्ये च पारतन्त्र्यात्" इति चकारघटितः पाठोऽस्ति॥

२ अवयवसदृशग्रहणं स्यात्॥ क॥ ३ भाष्ये॥

सन्निपातस्य दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्तिस्तस्माद्व्याप्यात्व-जातियत्त्वादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम्। सन्निपातपरिभाषायास्तु स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यादृशः सन्निपातः स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्त-मित्यर्थः। मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षेऽस्य-कृसंज्ञा तन्निमित्तं स्यादिति क्त्वोजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसन्निपातस्य न लेशतोऽपि सत्तेति वदन्ति॥

प्रातर्ऋतं तद्[1] लृकार इत्यादौ रोरि तोर्लीति तु नापादितं तस्याभितोऽजभागसत्त्वेन तेन व्यवधानात्तदप्राप्तेः॥ अग्ने इन्द्रेत्यादौ सवर्णदीर्घव्यावृत्तये आह सामान्येनेति। गोश्चेचोऽसञ्ज्ञेति गोग्रहणं नौश्चचष्टन्निति नौग्रहणम्। वर्णावयवाश्रयकार्याभावस्येति। वर्णावयवेषु भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः। तेन मातृणामित्यादौ णत्वादिसिद्धिः। भेदेन प्रतिभासात् सामान्यापेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह भाष्ये अयन्त्विति॥ अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या एकत्वालम्बनज्ञानग्राह्यस्येति॥ समुदायस्य योऽवयव इति। वर्णसमुदायस्येत्यर्थः॥ व्यधिकरणे इति। सामानाधिकरण्येनान्वयेऽव्यपवृक्तस्येति व्यर्थं सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादितिभावः[2]॥ भाष्ये अवयवाश्रयः। अवयवसदृशस्तन्मात्रवर्णाश्रयः। उक्तेऽर्थे युक्तिमाह नहीति॥

---

१ तत् लृकारः॥ इ॥ २ अत्वाद्यभाव॥ क॥

ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वे न [1]काष्ठमप्यावाधीयत इति भाष्यमयुक्तमत आह **साहचर्यादिति** । तदाधेयत्वे नेति भावः ॥ **तत्र सप्तदशेति** । यद्यप्येकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति एकस्यापि तावत्त्वमस्ति तथाप्यव्यपवृक्तस्य[2] समुदायावयवत्वाद् नव्यपवृक्ताश्रयकार्यप्रसंग इति भावः ॥ न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किन्तु असम्भवनिबन्धनमित्याह भाष्ये **विषम इति** । आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न सम्भवतीति भावः । युक्त्यन्तरमाह [3]**असम्भवश्चेति** । तमुपपादयति **अर्धचतुर्हस्तेति** । अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिबहिर्भावनिषेधाच्चासंभव इति भावः ॥

**अव्यपवृक्तमिति** । अर्थाभावेऽव्ययीभावस्तदाह **व्यपवर्गस्येति** ॥ वस्तुतस्तत्पुरुष एवायम् । व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपास्त्वेत्यर्थः । नञाव्ययीभावस्याभावादित्यग्रे वक्ष्यते । भाष्ये **कामचार इति** । स्पर्शे कामचारस्तेन शौचाभाव इत्यर्थः ॥ एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह **ऐ औ इति** ॥ **अकारस्येति** । यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः । प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो विवृततरत्वादैचां विवृततमत्वादिति बोध्यम् ॥

---

१ "काष्ठमप्यावभ्याधीयते" इत्यपि पाठोऽस्ति ॥

२ तथाप्यव्यपवृक्तसमुदायावयवत्वात् ॥ इ ॥

३ भाष्ये ॥

नुडादीति। आनृजे इत्यत्र नुट्। आदिना चक्लृपे इत्यत्र लत्वं मातॄणामित्यादौ णत्वं चेति बोध्यम् ॥

सादृश्याच्चेति चस्त्वर्थे॥ समुदाये सन्ध्यक्षरादौ। सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेतिभावः। ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत्। अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति तदेवाह समुदायवाच इति॥ भ्रान्तिवशादिति। भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः॥ एवंच भ्रान्तिरेव ग्रहणपक्षबीजमिति भावः। अत एव गो नौ ग्रहणं चरितार्थम्। [1]विनामो णत्वम्। ननु विकरणविशेषनिर्देशेन आविकरणनिवृत्यर्थं सूत्रं स्यादत आह नत्वस्मातिरेवेति॥ तथाहि सति नाम्न इत्येव वदेदिति भावः॥ नियमज्ञापकस्य। नियमबोधकस्य॥ नन्वखण्डवर्णपक्षे ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह तत्र ऋकारेति। एवं च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम्॥

मात्रशब्दः सामान्याभिप्राय इत्याह जातीति। जातिश्चावयवानवयवसाधारणीत्याशयेनाह ततश्चेति। एवं विधाच रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न। स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः। वस्तुतः स्फोट एव श्रोत्रग्राह्यः। वायुनिष्ठा रत्वादिना च तस्याभिव्यक्तिः। एवं च साक्षाद्रत्ववतोऽभावे न कल्पत इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः। एवं च रेफावभासिनः स्फोटस्य प्रसङ्गे

---

[1] भाष्ये॥

लकारावभासः स्फोट इत्यर्थः। एवं च क्लृपावपि तत्प्रवृत्तिः सम्भवत्येव। तत्रापि रेफावभाससत्त्वात्। आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः। तदुक्तं [1]**श्रुतेरित्यादि**। यत्तु स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानं तन्न। तादृशजातौ मानाभावात्। नरसिंहदृष्टान्तानुपपत्तेश्च। सादृश्यात्तु प्रत्यभिज्ञेत्यादिश्लोकविरोधापत्तेश्च। किं चैवं सति ऋजातेरित्येव भगवान्वदेत्। किं च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिध्दा ग्रहणपक्षमुक्त्वाऽथवा न **गृह्यन्ते**[2] इति पक्षे तत्समाधानपरभाष्यासंगतेः। अत एवाष्टमे **रषाभ्यामिति** सूत्रे यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभाव एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति॥

**ऋकारेणेति**। ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते॥ **जात्यभिव्यक्तीति**। अत्वादिजातीत्यर्थः॥ एवं च न केनाप्यत्रा तद्ग्रहणमिति भावः। अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः। चो हेतौ। अतो न सिध्यतीत्यर्थः॥ नन्वाकारादिभिर्व्यवायेऽपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह **आकारादयोऽपीति**॥ **भक्तिस्त्विति**। असवर्णत्वादनुपदेशाच्चेति भावः। भाष्ये **नृनमनशब्दमिति**। संज्ञाभूतमित्यभिप्रायः। गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि णत्ववारणायाखण्डपदे

१ भाष्ये॥ २ न गृह्यत इति पक्षे॥ सं॥

इत्यर्थकसमानपदे इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सर्वस्थले असंज्ञायां णत्वप्राप्त्यभावादिति बोध्यम्। छन्दसृदित्यस्य तु नात्र प्राप्तिः। ईदृग्रे विषयेऽवग्रहाभावादित्याहुः। [१]बहिरङ्गा वृद्धिरिति। त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तत इति वार्तिकमतेनैतत्। भाष्यमते तु हृग्नोति शब्दपाठस्यैव ज्ञापकता बोध्या॥ [२]ऋतो नो ण इति। मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वात्सत्वम्। यद्वा प्रशास्तॄणामिति निर्देशात्सत्वम्। अत्र तपरत्वं मुखसुखार्थमेव। उत्तरत्राप्येवमेव फलाभावात्। ध्वनितं चेदं वृत्तौ॥

ननु गुर्वत्रयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह तन्त्रेति। स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः। गुर्वत्रयवटिस्यैव एव संभवति नान्यस्य आकारादेः। तदवयवस्य व्यपदेशकत्वाभावादिति भावः॥ अच्त्वाभावादिति। तन्मूलटित्वा-[३]भावाच्चेत्यपि बोध्यम्॥ संयोग इति। संयोग संज्ञाह इत्यर्थः॥ तस्यैकवर्णत्वमिति। एवं च संयोगसंज्ञा न स्यादिति भावः। संयोगे इति भाष्यं तु संयोगार्ह इत्यर्थपरमिति तात्पर्यम्॥ शिष्टसमाचारः। शिष्टव्यवहारः॥ भाष्ये मात्राकालोऽत्रेति बहुव्रीहिः संयोगोऽन्यपदार्थः। मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः। कुक्कुट इत्याद्युच्चारणं तु न उपदेशः। अनुपदिष्टत्वन्नाम अक्षरसमाम्नायेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वञ्च। अनुपदिष्टं सत् सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः। एवं चानुपदिष्टस्यासत्त्वात्

---

१ भाष्ये॥ २ भाष्ये। ३ तन्मूलत्वाभावात्॥ क॥

तत्प्रतिपत्तिरशक्येत्याह [1]**असच्चेति** ॥ क्वचित्त्वसच्चेत्यादिग्रन्थो न दृश्यते। अनेन ऌकारापाठे तस्यासत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम्। **यच्चैतदस्तीति** भाष्ये **हलोऽनन्तरा** इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः ॥

**सानुनासिकेति**। अणुदित्सूत्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥

**हयवरट्। ५**। नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं **पूर्वश्चेत्या**दिना भेदाश्रयणमत आह **पूर्वपरेति**। एतद्भाष्यादेकत्वं वर्णानामित्येव पक्षो भगवतः संमत इति ज्ञायते ॥ भाष्ये **यदि पुनरिति**। न चैवं परहकाराभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन हलन्त्यमित्यत्रान्योऽन्याश्रयपरिहारो वक्ष्यमाणो विरुद्धेतेति वाच्यम्। रन्त्यं हरिति न्यासेन लन्त्यं हल् इति न्यासेन वा तत्परिहारात्। लाघवाभावेऽप्येवं कर्तुं शक्यं न वेत्येव विचारतात्पर्यात्। यद्वा हरन्त्यमित्यस्यैवावृत्त्या हर्बोधकसूत्रसमुदायान्त्यमित्यर्थः। परेतु परहकाराभावेऽपि ल् इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिध्यर्थम्। [2]तदर्थे रान्तस्यापि शक्तिकल्पने गौरवात्। **हलन्त्यमित्यस्यावृत्त्या** हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमित्यप्यर्थ इत्यदोष इत्याहुः ॥

[3]**अङ्ग्रहणेष्विति**। अङ् गृह्यते येषु सूत्रेष्वित्यर्थः।

---

१ भाष्ये। २ तदर्थेऽप्यन्तस्यापि शक्तिकल्पने। इ॥ ३ भाष्ये॥

शश्छोटीत्यस्योदाहरणाऽदाने बीजमाह **हकारपरस्येति**॥ न च तत् शश्लिष्याहेत्युदाहरणसम्भवः। शास्त्रबोधितं शौचं च विहाय [1]हलामुच्चारणार्थांचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात्। अत्र च भाष्ये एतदुदाहरणाऽदानमेव मानम्। आतोऽटिदीर्घादटीत्युभयोरुदाहरणं [2]**मह्यां ह्रिस** इति। **अट्कुप्विति** सूत्रेऽपि ग्रहणफलमर्हणेति बोध्यम्॥ **अशत्वमपीति**। इदमिण्त्वस्याप्युपलक्षणम्। तेन लिलिहिढ्वे इत्यादौ **विभाषेट** इति ढत्वविकल्पसिद्धिरिति केचित्॥ भाष्ये **हशिचेति**। सिद्धान्तरीत्यानिर्देशः। इदानीं तु यशिचेति सूत्रम्। [3]**अहकाराणिस्युरिति**। अतस्तत्र हकारग्रहणं कर्त्तव्यमिति भावः॥

**अदाग्धामिति**। घत्वस्यासिद्धत्वादिति भावः॥ स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति भाष्ये [4]**यदि किञ्चिदिति**। [5]तद्व्याचष्टे **प्रयोजनार्थ इति**। शास्त्रीयप्रयोजनार्थः[6]॥ एवञ्चाद्यहकारस्याशिणोरपि,प्रयोजनं सूचितम्। अत एव मह्या ह्वसन्तीति **पुंयोगादिति**[7] सूत्रे भाष्यप्रयोगः संगच्छते। एतेन पूर्वहकारोपदेशप्रयोजनवार्त्तिके न्यूनता परिहृता। **कर्त्तव्य** इत्यस्य स्यादिति शेषः। **उपदेशो**ऽत्रोच्चारणमात्रम्। **अन्यत्रापि**। प्रत्याहारान्तरे सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्रास्य तात्पर्यम्॥

---

१ उच्चारणार्थांचं॥ इ॥   २ भाष्ये॥   ३ भाष्ये॥
४ भाष्ये कैयटे च "यदि च किञ्चिद्" इति पाठोऽस्ति॥
५ तदेतद्व्याचष्टे॥ क॥   ६ इत्यर्थः॥ क॥   ७ पा-४।१।४८॥

**दोषप्रयोजनेति**। अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम्॥ **णकारोऽस्येति**। स्थानेऽन्तरतमत्वादिति भावः॥ ननु रेफस्य सवर्णाभावात्कथमत्रानुनासिकोऽत आह **न स्यादेति**॥ ननु द्वित्वेऽपि [1]**रो रीति** [2]**हलो यमामिति** वा [3]लोपान्न दोषोऽत आह **द्विर्वचन इति**॥ भाष्ये **ऽव्व्युपधादिति**। अव् इति लुप्तपञ्चमीकम्। ननु पूर्वोपदेशे इग्यण इत्यादौ यथा संख्यनिर्वाहः कथमिति चेन्न। संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः॥

भाष्ये **रेफोष्मणामिति**। विजातीया[4] इति शेषः। तेन सजातीयेषु सत्स्वपि न दोषः॥ ननु माभूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाभावाद् अनुनासिकः स्यादेवेत्यत आह **अनुनासिकपरेति**॥ **न हि रेफस्येति**। न च रेफस्य णकारः स्थानेऽन्तरतमो भवत्येवेति वाच्यम्। [5]**स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमे स्पर्शे चिन्माञ्चमित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नासदृशे रेफे न प्रवर्त्तते इति भावात्॥ **नापीति**। यद्यपि अन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति स्थानेऽन्तरतम इत्यनेन नियमः। कुण्डं रथेनेत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम्। तथापि सम्भवदनु-

---

१ पा—८।३।१४॥ २ पा—८।४।६४॥
३ हलो यमामिति लोपान्न दोषः॥ इ। क॥
४ विजातीय इति शेषः॥ सम्॥ ५ पा—१।१।५०॥

स्वारान्तरतमकेऽङ्क्ति इत्यादौ चरितार्थः परसवर्णविधौ रेफे न प्रवर्त्तते इति भावः । इदं जातिपक्षे इति केचित् । वस्तुतो व्यक्ति-पक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्त्तत इति वक्तुं शक्यं तदध्वनी[1]कोयणचीत्यत्र कैयटः । द्रव्येऽपि पदार्थे उत्सर्गापवादभावः सन्दिग्धत्वाश्रयोऽस्त्येवेति । केचित्तु **स्थानेऽन्तर-तम** इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्यायुक्तेरसम्भ-वदुक्तिकत्वम् । किञ्चैवं सति उभयग्रहणं भाष्ये व्यर्थं स्यात् । तस्मा-दनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यं **रेफोष्मणामित्यस्य** चानुनासिकोऽनुस्वारान्तरतमस्य सवर्णो नास्तीत्यर्थः ॥ अत एव मह्मानित्यादौ सूत्ररीत्यास्थानप्रयत्नोभयान्तरतम ञकारसम्भवे-ऽपि नानुनासिकः । [2]**नाज्झलाविति** निषेधेन सवर्णत्वाभावादिति भाष्याशय इत्याहुः ॥

सन्ध्यक्षरत्वादप्रसक्तदीर्घत्वस्य हस्य ग्रहणमयुक्तमत आह **हकारव-दिति** ॥ ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवाद् अस्तु तत्र बाधः । प्रकृते तु लक्ष्यभेदेन [3]भिन्नवाक्यावगतिनिमित्तकार्य्यि-भावः किन्न स्यात् । यथावगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह **तत्रेति** । लक्ष्यभेदेन कार्यित्वनिमित्तत्व-सम्भवेऽपीत्यर्थः । सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः ॥

**शब्दो** वाक्यात्मा ॥ **अर्थस्तदर्थः** ॥ **सम्बन्धः** । प्रतिपाद्यप्रति-

---

१ पा-६ । १ । ७७ ॥ २ पा-१ । १ । १० ॥

३ भिन्नवाक्यावगतनिमित्तकार्यिभावः ॥ क ॥

पादकभावः॥ तेषां परिज्ञानम्। तद्यथा लोकव्यवहारादेव तथा तयोर्बाध्यबाधकभावः सम्भवेऽपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादिरूपादवगतमित्यर्थः। विशेषसन्निधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वञ्च तद्बीजम्। **परिज्ञानवदिति** पाठः। एवञ्च **अचो रहाभ्यामि**त्यत्र[1] सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह **प्रत्यक्षश्चेति**। अविलम्बितप्रतीतिकत्वं प्रत्यक्षत्वम्। विलम्बिततत्कत्वञ्चानुमेयत्वम्॥ **लक्ष्येति**। ज्ञापकात्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः॥ **क्वचिदपेक्षा नास्तीति**। बाध्यबाधकभावस्येति शेषः॥ **यथेति**। बाध्यबाधकभावाभावे दृष्टान्तोऽयन्न तु कार्यित्वनिमित्तत्वयोः[2] समावेश इति बोध्यम्॥

केचित्तु तक्रकौण्डिन्यन्यायोऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव। अस्ति च प्रकृते तत्। न ह्येतद्बोध्यनिमित्तत्वं सामान्यशत्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेरतो युक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः। न चैवमिको यणित्यादौ मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः॥

ननु कार्यार्थ इत्यत्र कार्यं साधुत्वं चेत्। [3]**खरवसानयोरि**त्यादिना सिद्धमत आह **विधानादिति**॥ **उपदिश्यन्त इति**

---

१ पा-८।४।४९॥ २ न तु कार्यित्वनिमित्तत्वयोः॥ इ॥
३ पा-८।३।१५॥

पाठे भाष्ये वर्त्तमानसामीप्ये लट् । उपदिष्टा इत्यर्थः ॥ **प्रवृत्तिनिमित्तेति** प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्तमर्थ इतिभावः । केन प्रवृत्तिनिमित्तेनायोगवाहशब्दवाच्यतैषामित्यर्थ[1] तात्पर्यम् । **नन्वनुपदिष्टाश्चेति** चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति तदयुक्तम् । अनुपदेशपदार्थस्यानुच्चारणस्य तत्राभावात् । प्रयोगेषूच्चारितत्वात् । न च प्रत्याहारसूत्रानुच्चारितत्वं [2]तथा यदयुक्ता इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह **अयुक्ता इत्यस्यैव हेतुकथनमिति** । प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः ॥ तद्व्याचष्टे **पाठाभावादिति** । ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन योऽवर्णस्तेषां ग्राहकस्तस्य पाठाभावादित्यप्यर्थः ॥

**एषां नास्तीति** । अतोऽयुक्ता इत्यर्थः । एवञ्चाक्षरसमाम्नायेऽयुक्ता सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता ॥ **न पठ्यत इति** । तच्च यत इत्यध्याहार्यमितिभावः ॥ भाष्ये **उरः केणोति** । उरः कायतीति सुबुत्पत्तेः पूर्वं समासेऽपि षोऽपदादाविति न सत्वम् । [3]**पाशकल्पककाम्येष्वेव** तत् प्रवृत्तेः ॥ ननु शरां जश्शो भवन्तीति लक्षणाभावात् शर्षुपाठस्य [4]जश्भावः प्रयोजनमत आह **शर्षु पाठे इति** ॥

---

१ वाच्यता तेषाम् ॥ क ॥ २ यथा यदयुक्ता ॥ ड ॥

३ वा – पा – ८ । ३ । ३८ ॥

४ शर्षुपाठस्य न जश्भावः प्रयोजनम् ॥ ड ॥

**यदीति**। पूर्वत्र द्विर्वचने इत्यन्वयः॥ ननु पूर्वं द्वित्वे जश्त्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याभ्यासे जश्त्वं असिद्धत्वा-भावात्। [1]**अभ्यासे चर्चेत्य**नेनत्वान्तरतम्यात् प्रकृतिचराश्चर एवेति उपध्मानीय एव स्यादिति चेच्चिन्त्यमेवैतत्। उपध्मानीय-श्रवणापादनेनापि भाष्यसामञ्जस्यात्। [2]अन्ये तु द्वित्वे कृतेऽपि द्वित्वाश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं[3] नेत्यपि पूर्वत्रासिद्धीयमित्यस्यार्थ इति परत्वात् जश्त्वे कृते एव [4]**हलादिः शेष** इत्याशयान्न दोषः॥ **द्विर्वचनं कथमिति**। वकाररहितस्येति शेषः॥ ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह **अथा-पीति**॥ न [5]चाभ्युक्ष इत्यादौ दकारोच्चारणं सार्थकम्। नैतद्भे रूपमिति भाष्योक्त्या दोषाभावात्। उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदाशयः। अकुत्वविषये निपातनमिति पक्षान्तरे त्वाद्यमेव समाधानम्॥

**अनुस्वारस्य शर्वादिति**। यद्यपीण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः सुहिन्सु इत्यादौ सम्भवति। तथापि तदनभि-धानमिति भावः॥ **पुंस्वित्यत्र** [6]संपुंकानामित्येतत्प्रवृत्तिपरविवरण-ग्रन्थस्तु चिन्त्य एव तस्य [7]समः सुटि पुमः[8] खय्यम्परे [9]कानाम्रेडिते इति सूत्रत्रयमात्रविषयत्वात्॥

---

१ पा-८।४।५४॥ २ अन्ये तु-॥इ॥क॥
३ कर्त्तव्ये सिद्धत्वं-॥इ॥ ४ पा-७।४।६०॥ ५ भाष्ये-॥
६ वा-पा-७।३।६॥ ७ पा-८।३।५॥
८ पा-८।३।६। ९ पा-८।३।१२॥

ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहारासंनिवेशात्कथं तन्नि-बन्धनकार्यप्रवृत्तिरत आह **प्रयोजनविशेषमिति** ॥ **अवि-शेषेणेति** भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थं इति भावः ॥ **यत्र यत्रेत्यादि** । यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयकसकल-प्रयोजनोद्देशेनेत्यर्थः ॥ **जश्त्वे कृते संयोगसंज्ञायामिति** । कार्यकालपक्षे इदम् ॥ भाष्ये **इदुदुपधस्येति** । विसर्गस्थान्त्वे ह्युपधात्वमिति भावः ॥

[१]**इदुदुपधस्य सकारस्येति** । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोऽपि निष्कृतमिति सिध्यति । अत एव वक्ष्यमाण-पक्षान्तरेणाविरोधः । [२]**निष्कृतमित्यादौ** सुबुत्पत्तेः पूर्वं समासे-ऽपि [३]**इणः ष** इति न । **पाशकल्पककाम्येष्वेव** तत्प्रवृत्तेः ॥ [४]**द्विर्वचनं प्रयोजनमिति** । विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याग्रहादुच्चारणस्य कर्त्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्रयो-जनकथनमिति सन्तोष्टव्यम् ॥

ननु **सोऽपदादाविति**[५] सत्वस्य स्थानिवत्वं **पूर्वत्रासिद्धीये** इति निषेधान्नेत्यत आह **पूर्वत्रेति** ॥ इमे इत्यनेन न हयवरट् सूत्रस्था एव गृह्यन्ते किं तु वर्णमात्रमित्याह **इदानीमिति** ॥ [६]**अर्थवन्त** इति साध्यम् । [७]**वर्णा** इति पक्षः । पक्षतावच्छेदक-मेव हेतुः । [८]**धातुप्रातिपदिकेत्यादि**स्तु दृष्टान्तः । **अनुत्पत्ति-ज्ञानम्** । अनुत्पत्त्युपायज्ञानम् ॥

---

१ भाष्ये ॥ २ भाष्ये ॥ ३ पा — ८ । ३ । ३९ ॥ ४ भाष्ये ॥
५ पा — ८ । ३ । ३८ ॥ ६ भाष्ये ॥ ७ भाष्ये । ८ भाष्ये ।

भाष्ये **धातव** इत्यादि। प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवं रूपवर्णस्फोटाश्रयेण। अयं च शास्त्रव्यवहारमात्रोपयोगी। एतद्वासनावशादेवलोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति धर्मे चैवम्विधज्ञानस्योपयोग इति बोध्यम्॥ हेत्वन्तरमाह [1]**वर्णव्यत्यये चेति**॥ ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आह **एकस्येति**॥ **तस्यैवान्वयेति**। ऊपशब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं प्रादिवत्। अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञापादनं करिष्यते॥

तृतीयहेतुमाह **वर्णानुपलब्धौ चेति**। [2]**अनर्थगतेरि**त्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह **अर्थान्तरेति**॥ प्रश्नमुपपादयति भाष्ये **न साधीय इति**। नञि काकुः॥ **परमतापेक्षयेति**। परेणानर्थगतेरित्युक्तत्वादिहार्थगतिरस्तीत्यभ्युपगम्य परमते कटाक्षेण अन्यस्यलोपार्थगत्यपेक्षया चातिशयेनार्थगतिरस्तीति विवक्षेतिभावः॥ तच्छब्दार्थमाह **वर्णस्येति**। परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः॥ अत एव पूर्वं भाष्ये चककारेण कश्चिदर्थो गम्यत इत्युक्तमित्याहुः॥

लाघवे न तु कर्मधारयमाह भाष्ये **सोऽर्थ इति**। **प्रकृतोऽर्थः** तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः॥ ननु दृष्टान्ते सप्तम्युपमानपूर्वेति वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन। किञ्च तच्छब्द उत्तरपदमपि न नञः समासाभावादत आह

---

[1] भाष्ये॥ [2] भाष्ये॥

गतार्थत्वादिति। तथा च तदद्यापि सफलेति भावः॥ चतुर्थहेतुमाह भाष्ये संघातार्थवत्त्वाच्चेति। एका सिकतेति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि॥ तदन्तर्गतत्वादिति। इदं चिन्त्यम्। [१]इत्थंभूतलक्षण इति सूत्रस्थग्रन्थविरोधात्॥ तत्र हि संज्ञाप्रवृत्त्युत्तरकालजातविभक्त्यसम्बध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम्। तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं समुदायनिमित्तकप्रातिपदिकत्वे सुब्लोप[२] इति वक्तुं युक्तम्। धनतीत्यादौ तु न तदापत्तिः। धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः। धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम्। वस्तुत इत्थम्भूतेति सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः। धकारे अशल्मादिपदार्थः। सुबन्तावयवसमुदायस्येति। सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः। इदमुपलक्षणभेदे सति यदर्थयोः संसर्गस्तद्द्वारकार्थवत्समुदायस्य।· तेन तिङन्तसमुदायस्य व्यावृत्तिः। प्रकृते न भेद इत्याह[३] येनैव चेति॥

तच्चैकमिति। संघातस्यैकत्वमिति भाष्यस्य संघातस्याप्येकत्वमर्थः। एवञ्च विभक्तिः समुदायादेवेति भावः॥ ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत्प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह[४] पदसंज्ञात्विति। यतस्तदर्थबोधनाय विभक्त्युत्पत्तिः तस्य संज्ञाप्रवर्त्तते न तेषामिति भावः। केचित्तु विभक्तिः प्रकृत्यर्थ-

१ अ २। पा ३। सू २१॥ २ सुब्लोपः॥ क॥
३ इत्यत आह॥ क॥ ४ प्राप्नोत्यत आह॥ क॥

गतप्रकृतिबोध्यसंख्याद्योतिका। संख्या च समुदायस्यैवार्थो न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः। एकत्वं संघातस्यार्थ इति भाष्यस्वरसात्। प्रकृत्यंशे वर्णव्यत्ययापाययोः संख्यान्तरानुपजननात्संख्या समुदायस्यैवार्थ इति तद्भावः॥ न चाव्ययेभ्य इवैकवचनं दुर्वारम्। संख्यारहितार्थप्रतिपादकेषु तथा स्वीकारेऽपि वस्तुतः संख्यावत्यर्थे संख्यानभिधायकस्वाद्युत्पत्तौ मानाभावात्। एवञ्चैषां प्रकृतित्वमेव नेति न केवला प्रकृतिरित्यस्यापि न विषयः। एतेन प्रत्येकं पदसंज्ञानुग्रहाय द्विर्वचनवैषम्यात्स्वादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याकूः॥

अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति। **अनर्थकास्त्विति**। सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धत्वं स्यादत आह **धात्वादीति**॥ विपक्षे बाधकमाह **अन्यथेति**। वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव संगतेरित्यपि बोध्यम्॥ **असमासाशङ्कयेति**। तथा च वीप्सा न प्रतीयेतेति भावः॥ **तेनैवेति**। वीप्सायां तस्य विधानादिति भावः॥ ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह **यदुक्तमिति**॥ एवञ्चार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनाद्वा[१] [२]अनर्थकतासाधकत्वमस्य। भाष्ये **अर्थदर्शनादित्यस्य** वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः॥

**नार्थव्यत्यय** इत्यस्य नार्थान्तरावगतिः किन्तु [३]तस्यैवावग-

---

१ प्रदर्शनद्वारा। ख। ड॥  २ अनर्थकसाधकत्वम्॥ क॥

३ तस्यैव गतिः॥ क॥

तिरित्यर्थः ॥ उभयस्य न्याय्यत्वं विषयभेदेनेत्याह **यथान्वयेति** । यथा एति इतः इत्यादौ न सर्वत्र कूपादावित्यर्थः ॥ **न कूपसूपेति** । वर्णानामर्थवत्त्वे ऊपशब्दस्य चिह्नस्यार्थान्वयः स्यात् । न च दृश्यते । ततः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च न तु व्यत्ययादिकृतमित्यर्थः ॥

ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत् तर्हि भग्नमेव वर्णानामर्थवत्त्वं तत्रैव पदे । ऊपयोरर्थाभावात् । किञ्च संख्यासमुदायस्यैवार्थ इत्यपि नियन्तुमशक्यम् । कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययापि कादिभिरन्वयव्यतिरेकसत्त्वात् । द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव । तस्मात्समुदायस्यैवार्थवत्त्वं तदेव ध्वनयन्नाह भाष्ये **इदं खल्वपीत्यादि** ॥ **दृष्टा हीति** । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेऽपीति भावः ॥

भाष्ये **अज्ग्रहणेष्विति** । प्रत्याहारे[1] अत्तरसमाम्नायेऽज्ग्रहणेषु अच् प्रत्याहारग्राहकेषु पठितानामनुबन्धानां प्रत्यासत्त्याऽज्ग्रहणं कुतो नेत्यर्थः ॥ तत्[1]फलितार्थमाह **य एते इति** ॥ **अस्तु** । तद्बोधकसूत्रेषु प्रागुक्तेषु ॥ **प्रत्याहारार्थाः** । तदुपकारकाः ॥ [2]**अज्ग्रहणेन** । अच्शब्देन । अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं मनसि निधायाज्ग्रहणेनेत्युक्तम् । न च हशादौ टग्रहणस्यापत्तिः । हल्पूच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीन[3]हलां हल्घटिते प्रत्या-

१ फलितमाह ॥ क ॥ २ उपलब्धभाष्यपुस्तके "अज्ग्रहणेषु" इत्यस्ति ॥
३ हलोहल्घटिते । क । ख ।

हारे ग्रहणाभावस्य वक्तुं शक्यत्वात् ॥ **प्राधान्येन**। प्रत्याहारेषु ग्रहणार्थत्वेन॥. **परार्थेति**। अजादिस्वरूपबोधनार्थत्वेन परार्थत्वम्। यथाऽकारादयः संज्ञिविशेषसमर्पणायोपात्ता न तथाऽणादयः इत्यर्थः ॥ [1]अप्रधानत्वमप्याचार्याचारेण साधयति भाष्ये **आचार्यस्येति**। आचार्यशब्देनानादिः [2]शब्दपुरुषः। एवञ्चान्यच संज्ञिविशेषसमर्पणायोपात्तत्वादितामसंज्ञित्वमेवेति भावः॥ **परत्वादित्या**द्यन्तरङ्गत्वोपलक्षणम्। एवञ्च पूर्वमनुबन्धलोपा**दादिरन्त्येनेति** संज्ञाविधानकालेऽसन्निधानादित्यन्वयः। एवञ्चानुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यतां बोधयतीति भावः ॥

भाष्ये **लोपः खल्वपि तावदिति**। सर्वतः प्रथममित्यर्थः। यत्तु एवमपि लणित्यकारस्य हल्षु ग्रहणापत्तेराचारादित्येव समाधिरत्र युक्त इति। तन्न। [3]**अतो ल्रान्तस्येति** सूत्रे लकारोच्चारणेन लण्सूत्रस्थस्यानुनासिकत्वाभावज्ञापनात्। एवञ्च तस्यानुबन्धत्वमेव न किन्तूच्चारणार्थत्वमेव। अत एव भाष्ये **अइउणि**त्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता। श्लोके च **अज्ग्रहणे**ष्वित्यत्रोक्तम्॥ [4]**उरण्रपरसूत्रे च लपरत्वस्योपसंख्यानमेव कार्य्यमिति तुल्यास्य**[5] सूत्रे वक्ष्यते॥ भाष्ये **तत्कालानामचां ग्रहणमच्** पदेन यथा स्यादिति योगविभागः कार्य इत्यन्वयः। **सिद्धेऽच्त्वे इति**। अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः ॥

---

१ अप्रधानम्॥ अप्रधानत्वस्य। ख॥ २ शब्दपुरुष एव॥ क॥
३ अ ७। पा २। सू २॥ ४ अ १। पा १। सू ५१॥
५ अ १। पा १। सू ९॥

ननु ककारद्वयस्य मात्रिकवर्णत्वं कथमेकस्यैव स्वरूग्गित्यत्रोप-देशादत आह **ककाराकृतेरिति॥ न च वर्णद्वयेनेति।** जातिरपि स्वपर्याप्त्यधिकरणव्यक्त्यैव [1]तद्वारैव च कार्यभागिति भावः॥ भाष्ये **एष एवार्थ इति। अपर आहे**त्यादिना वार्त्तिककृतोक्त इत्यर्थः॥ **ह्रस्वादीनामिति। ह्रस्वदीर्घप्लुत** इत्यतः प्राग्यावद् **ऊकालोऽजिति** तावदेवास्तु पृथक्सूत्रम्। फलं दर्शयति अज्निमित्तकार्याणि तत्कालेष्वचु कर्त्तुमर्हाणि यथास्यु-रित्यन्वयः॥

अणः सुष्ठूपदेशः अणसूपदेशः। अण्शब्दोच्चारणं [2]तदन्त-स्थानां बोधकम् अणुदित्यत्र किमर्थं क्रियते इत्यर्थो [3]भाष्यस्येत्यत आह **अजुदिदिति॥ अणसु** अण्मध्ये तेनात्र स्थाने किमर्थ उपदेश इति तु नार्थ इत्याह **इण्ग्रहणेनेति।** इह संय्यन्तेत्या-दिभाष्यं गुणा भेदका इति पक्षे। भेदकत्वपक्षे[4] इदमेवाण्ग्रहणं मानमिति भावः। यथास्थितसूत्रन्यासे॰ इदम्। जातिपक्षेणाण्-ग्रहणप्रत्याख्याने॰ तु न कश्चिद्विचारः। एवं **गुणा अभेदका इति** न्याय्यपक्षेऽपि न विचार इति बोध्यम्॥ भाष्ये **वक्ष्यत्येत-दिति।** सिद्धत्ववचनञ्चावश्यकम्। अन्यथा परस्यानुस्वारस्य **वा**[5] **पदान्तस्येति** परसवर्णे तस्यासिद्धत्वात् पूर्वस्य **अनुस्वारस्य**

---

१ तद्वारैव कार्यभाग्॥ क॥ ड॥ २ तदन्तः स्थानाम्। सम्॥
३ भाष्यस्येत्याह॥ क॥ ४ पक्षे चेदम्॥ क॥
५ अ ८। पा ४। सू ५९॥

ययीत्यस्यानापत्तौ रूपाविध्यापत्तेः। तर्हि द्विर्वचनसिद्धिरेव फलमित्याह **प्रसवर्णे तहींति** ॥

ननु न भेदोऽनुपलब्धेरत आह **श्रुतिकृत इति॥ यदि नित्यो लोपः स्यादिति।** तदा भेदो न स्यादित्यर्थः॥ **विभाषा चेति।** चस्त्वर्थे॥ एकदेश्याह **यथाऽभेद इति।** यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति। तथैवास्तु [1]मानुवृत्तद्विभाषाग्रहणमिति भावः॥ तृतीयो ज्ञापकमुपन्यस्यति **अनुवर्त्तत इत्यादिना।** [2]**झरो झरीति लोपे** इत्यर्थः। मध्यस्थतया [3]हलोयमामित्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः॥ **लोपापवाद इति।** यद्यपि हर्यनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेऽपि द्विर्वचनमारभ्यते[4]। तथापि कृते द्वित्वे [5]पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनापवादत्वोक्तिरिति भावः॥ **तयोर्योगयोः।** लोपविधायकयोः॥ **प्रत्तमित्यादौ** दाधातोः क्तः आतस्तकारोऽ[6]च उपसर्गादित्यनेन॥ **आदित्ये** आदित्याद्भवाद्यर्थण्यान्ताद् [7]ण्यः। तद्व्याचष्टे **ज्ञापकत्वमस्य विघटयतीति।** सर्वथाऽसम्भवीत्युपसंहरतीत्यर्थः। ज्ञापकेन तदनुवृत्तिं साधयतः तत्खण्डनेऽनुवृत्तिः सन्दिग्धैवेति भावः॥ **लण् सूत्रे** विभाषा स लोप

---

१ मास् तु तद्वद्विभाषाग्रहणम्॥ ख॥ २ अ ८। पा ४। सू ६५॥
३ अ ८। पा ४। सू ६४॥ ४ आरभते॥ क॥
५ पश्चाल्लोपे॥ क॥
६ अच उपसर्गात्तः। अ ७। पा ४। सू ४७॥
७ ण्य प्रत्ययः॥ क॥

इत्युक्तेराह **आचार्येति** । [1]अण्ग्रहणात्तु ज्ञापकादित्यपि कश्चित् । तत्तु वार्त्तिककृताऽण्ग्रहणप्रत्याख्यानान्नोक्तम् ॥

**लण्** ॥ ६ ॥ **किमिति** । क प्रत्यासत्तिः क व्याप्तिरिति सन्देह इत्यर्थः ॥ भाष्ये **कतमस्मिन्निति** । वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः ॥ कतरस्मिन्निति [2]पाठेऽपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् ॥ **न हि ढ्लोप इति** । [3]वर्ढेत्यादौ गुणोऽसिद्ध इति भावः ॥ **दीर्घोऽच इत्येवेति** । मात्रालाघवाभावेऽपि सङ्ख्यालाघवायासन्देहाय चेति भावः ॥

**तथा गीष्केति** । विसर्गस्यासिद्धत्वादिति भावः ॥ **तेषु च कृतेष्विति** । परत्वादिति भावः ॥ योगविभागस्य भाष्यानारूढत्वाद् **गोके**[4]त्यादि भाष्यात् **के परे** इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ॥ भाष्ये **अचो हीति** । [5]अचश्चेति परिभाषणादिति भावः ॥ **न हि पदान्ता इति** । पदानामेवानुनासिकोऽवसाने जायते इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति ॥ **लोप इति** । अग्रा हलो विशेषणादिति भावः ॥ **पर्युदासेनेति** । क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः । भाष्येऽपि न सत्त्वं निषिध्यते किन्तु कार्यित्वमेवेत्याह **कार्यभाज इति** ॥ एवञ्चानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः ॥ वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्या-

---

१ अण्ग्रहणाज्ज्ञापकात् ॥ क ॥ ख ॥ ङ ॥ २ पाठे ॥ क ॥

३ गर्ढेत्यादौ । ग ॥

४ अत्र भाष्यम् ॥ नहि के परेऽणः सन्ति । ननु चायमस्ति गोका-नौकेति ॥ ५ अ १ । पा २ । सू २८ ॥

स्थानमनुचितम्। [1]पूर्वपचस्य सन्देहस्य चानुत्थानात्। तस्मादृष्टमा-ध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम्। व्याख्यातश्च तत्रोपाध्यायै-रित्यमेव॥ भाष्ये कर्तृ हर्तृ इति। ऋचामुपलक्षणम्। अत एवाचोऽप्रगृह्यस्येत्युक्तमन्यथा कोऽप्रगृह्यस्येति वदेत्॥

निषेधात्सम्प्रसारणप्रसङ्ग इति। चिन्त्यमिदम्। णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोप विधानेन [2]वृश्वतः स्था-नित्वे मानाभावेन वकारे "एकदेशविकृतन्यायेन" वृश्वतित्वस्य दुर्लभत्वात्। अर्द्धाधिकविकारेण प्रत्यभिज्ञाऽभावाच्च। अत एव राजकीयमित्यादौ अल्लोपो न। वृश्च एव टिलोप स्थानित्वे तु प्रकृतिभावापत्तिः। एतेन विचि "एकदेशविकृतन्यायेन" वृश्व-तित्वात् चत्वापत्तिः। न च णिलोपस्य स्थानिवत्त्वान्न चत्वम्। "पूर्वत्रासिद्धीये तन्निषेधाद्" इति परास्तम्। न च [3]व्रश्चेति [4]सूत्रे पदाधिकारेण झलन्तत्वमेकदेशविकृतन्यायेन सुलभमिति वाच्यम्। स्कोरिति सूत्रादन्ते ग्रहणमनुवर्त्य वैयधिकरण्येनैवा-न्वयाऽऽश्रयणेनादोषात्। अत एवान्ते ग्रहणं चरितार्थम् अर्द्धाधि-कविकाराच्च[5]।। एवञ्च वृचभ्क्तो णिजन्तात् क्विपि वृचभ् [6]इत्यादौ चत्वं नेत्याहुः॥ वलोपप्रसङ्गश्चेति। इदमुपलक्षणम्।

---

१ पूर्वपक्षोऽस्य सन्देहस्य॥ इ॥

२ वृश्चतेः॥ क॥ इ॥ वृश्चतेः स्थानिवत्त्वे। ख॥

३ अ ८। पा २। सू ३६॥

४ सूत्र पदाधिकारेण झलन्तमेक--। सम्॥

५ अधिकविकाराच्च॥ क॥ ६ इत्यादि। सम्॥

कौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गस्येत्यपि बोध्यम्॥ भाष्ये [1]रो रीति। चिपाद्यां बहिरङ्गासिद्धत्वाभावादिति भावः। भष्भावः। [2]एकाचो बशो इत्यनेन। तत्र ह्येकाच इति झषन्तस्येति च धातोरित्यपेक्षया व्यधिकरणषष्ठीति भावः। रुत्वम्। [3]ढ्रस्येत्यनेन। भाष्ये इहापि तर्हीत्यस्य ऋत [4]इत्त्वमिति शेषः॥

ननु धातुग्रहणेन ऋकारस्य दीर्घो न रपर इति ज्ञापना-[5]दज्झनेति दीर्घस्याप्यरपरत्वात्[6] कथमत्रेत्त्वप्राप्तिरत आह धातुग्रहणेनेति॥ भाष्ये तस्मात्तत्रेति। न च इह किञ्चित् चपो इति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम्। गृइत्यादेरनुकरणे "प्रकृतिवदनुकरणमि"त्यस्याभावे [7]ग्रोयङीत्यादावित्त्वाभावार्थम् इहापि तदावश्यकत्वाद् गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च। तदाह तस्मादिति। एवञ्च रपरत्वेऽपि मातृणामित्यादौ [8]उपधायाश्चेतीत्त्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः॥ भाष्ये सामर्थ्यात् पूर्वेणेति॥ न च गस्येत्यादौ यणादेशे लपरत्वार्थमेव परेणाप्यग्रहणं स्यादिति सामर्थ्यं कथम्। ऋकारांशे इत्त्वरूपाऽपि रो रीति प्रवृत्त्या फलाभा-

---

१ अ ८। पा ३। सू १४॥ २ अ ८। पा २। सू ३७॥
३ अ ८। पा २। सू ७५॥ ४ ऋत इत्वम्। क। ख। इ। ग॥
५ अ ६। पा ४। सू १६॥ ६ रपरत्वाभावात् कथमत्रेत्त्वाप्राप्तिः॥क॥
७ अ ८। पा २। सू २०॥ ८ अ ७। पा १। सू १०१॥

वेन 'तस्मादचर्णाद् लकारांशेऽपि ङलरूपाऽचि अप्रवृत्तिरित्याश-यात्। रलयोः समानश्रुतित्वेन तत्रापि रो रीत्यस्य प्रवृत्तेरि-त्यन्ये। लकारे यणघटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादि-त्यन्ये।

भाष्ये सवर्णोऽण् तपरमिति। यद् 'उरृत्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेऽणग्रहणं परणकारकमिति वार्त्तिकाक्षरार्थः॥ इत्येवमर्थमिति। ह्रस्वो यथा स्याद्दीर्घो माभूदित्येवमित्यर्थः॥ ऋकार इति॥ [2]उद्देश्यसमर्थक इत्यर्थः॥ न च भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तदैयर्थ्यम्। तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेन चाविधेयत्वात्[3]। कृते तु तपरत्वे भाव्यमानतापीत्यन्यत्॥ भाष्ये संवृद्धेति। आदेशेन तौ निवर्त्त्यैत्यर्थः॥ अर्द्धचतुर्था इति वक्तुमुचितमत आह अर्द्धेनेति॥ भाष्ये तिस्रो मात्रा इति। इण इति पदच्छेदाभिप्रायेणेदम्। तदुक्तं विभक्तिनिर्देश इति। संहितायां तु सार्द्धमात्राद्-यमेवेति बोध्यम्। अणादिग्रहणेष्वृक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्या-शयेनाह भाष्ये किं पुनरिति॥ एतत्। वक्ष्यमाणम्॥ आचार्यः शिवः॥

ननु ज्ञापितेऽपि [4]प्रवर्त्तकतया निवर्त्तकतया वा नास्य चारिता-

---

१ अ० ७। पा० ४। सू० ७॥ २ उद्देश्यसमर्पकः॥ क॥ ख॥ ङ॥

३ चाभिधेयत्वात्॥ क॥ ४ प्रवर्त्तकनिवर्त्तकतया वा॥ क॥

र्थमत आह न्यायादिति। उक्तो न्यायः। आगमउपदेशपरम्परा तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्तद्व्यवहारेण बोध्यत इत्यर्थः। एवञ्च व्याख्यानेनैव [1]पूर्वणकारेण केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम्॥

अमङणनम्॥ ७॥ झभञ्॥ ८॥ भाष्ये न ञकारेत्यादि। अञ्ञ्हितहल्मात्रानुकरणम्। सूत्रादन्यत्र नास्तीति हयवरट् सूत्रे प्रपञ्चितम्। ञकारभकारयोरपि हि पदान्तयोरिति। पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य ञभौ स्यातामित्यर्थः॥ एवमपि पञ्चागमा इति। लक्ष्यसंस्कारकालिकं सञ्ज्ञासाम्यं यथासञ्ज्ञप्रवृत्तौ निमित्तमिति मन्यते। सिद्धान्ती तु प्रतिपत्तिकालिकमेव सञ्ज्ञासाम्यं तत्प्रवृत्तौ निमित्तमित्याह सन्त्विति॥ येषामागमानामागमिनः सन्ति तेषां भवन्तु इत्यर्थः। अनुदेशः प्रतिनिर्देशः। भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि॥

इति व्यवहारादिति। अइउणसूत्रेऽयं व्यवहारो भाष्ये। प्रश्न इति। तद्दृढीभूताक्षरपदार्थावगमायेति भावः। भाष्येऽक्षरमित्यस्य नक्षरमिति विग्रहप्रदर्शनम्॥ तच्चेति। अक्षरश्चेत्यर्थः। अज्ञातत्वस्यैव तत्त्वे हेतु गर्भं विशेषणमाह परमार्थतो नित्यमिति। यतस्तत्प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः॥ नन्वेवं प्रकृते किमायातमत आह

१ पूर्वणकारेण केचित् केचित्परणकारेणेति॥ क॥ ख। ङ। ग॥

**व्यवहारनित्यतया चेति** ॥ सर्वेषां [1]शब्दानामाकाशवत्सृष्ट्याद्यावुत्पत्तिः प्रलये च नाश इत्यर्थः ॥ एवञ्च व्यवहारनित्यतयाऽक्षरब्रह्मशादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः। शास्त्रप्रवृत्तिद्वाराबोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः। एवञ्च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः। न्यायादिनयेऽप्याह **जातिस्फोटस्य वेति** ॥ भाष्येऽश्नोतेर्वेति। तद्व्याचष्टे **अर्थमश्नुत** इति। वर्णानामनर्थकत्वेन चिन्त्यमिदम्। नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ इत्यन्ये ॥

ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह **वर्णं वाऽऽहुरिति** ॥ च घटितः पाठोऽत्र प्रामादिकः। व्याख्यानभाष्येऽथ**वेत्युक्तेः** ॥ नन्वनन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह **रूढिरिति**। तदुक्तं भाष्येऽक्षरमिति **संज्ञेति** ॥ **व्याकरणान्तरे इति**। पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः ॥ एवञ्चाक्षरसमाम्नाय [2]इत्यस्य श्रुतिरूपो वर्णसङ्घात इत्यत्र तात्पर्यम् ॥ भाष्ये **उपदिश्यत इति**। अक्षरसमाम्नायोपदेशः [3]किमर्थः इत्यर्थः। पूर्वकृतोऽप्ययं विचारः [4]कश्चिद् विशेषं वक्तुं पुनः क्रियते **येन शास्त्रेणेति** ॥ चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन वेत्यर्थः ॥ **तत्**। शास्त्रम्। वाचो

---

१ आकाशादिवत् ॥ क ॥ ख ॥ इ ॥ २ इत्यस्य च ॥ क ॥
३ किमर्थः क्रियते इत्यर्थः ॥ क ॥ ४ किञ्चिद् ॥ क। ख ॥

विषयः। बन्धनं प्रतिपादकमित्यर्थः। भाष्ये **यच चेत्यनेन** वाक्-परामृश्यते इत्याह **पदे वर्त्तते** इत्यादिना।

**शास्त्रं विषय इति** प्रतिपादकमित्यर्थः। वर्णज्ञानं शास्त्रं वाचो विषयः। का सा वाग् **यच** [1]**ब्रह्मवर्त्तते**। चात्पुराणादि इति भाष्याचरार्थः॥ तदर्थमित्येतद्व्याचष्टे **शास्त्रप्रवृत्त्यर्थमिति**॥

**कलादीति**। इदं प्रयोजनं पस्पशान्ते दूषितम्॥ **अनुबन्धकरणार्थमिति**। लघ्वर्थमित्यक्षराणामचार्थे स्वारस्यं चिन्त्यम्। अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थो वा॥ **वाक्समाम्नायः**। वाक्सङ्ग्रहोपाय इत्यर्थः। तदाह **एतावद्भिरेवेति**। दृष्टफलेनाभ्युदयेन वा **पुष्पितः**॥ अदृष्टफलेन निःश्रेयसेन वा **फलितः**॥ **वाग्व्यवहारस्येति**। तत्सङ्ग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः॥ यथा श्रुते हि भाष्ये अक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादायहरिणा **अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्त्तास्त्येवमेव वेदे पारम्पर्येण स्मर्यमाणमिति** व्याख्यातम्॥

**ब्रह्मतत्त्वमेवेति**। तदुक्तं नन्दिकेश्वरेण "अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वर" इत्यादिना सर्ववर्णानां मायेश्वररूपता। वर्णेभ्य एवच महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता। तदाह **सर्ववेदेत्यादि**। अन्ये तु वर्णज्ञानं चतुर्दशसूत्र्यात्मकं शास्त्रं वाचो वेदशास्त्रपुराणरूपायाः सकलवाचः विषयो बन्धनं

---

१ ब्रह्म च॥ क॥ इ। ग॥

यत्र च वर्णसमाम्नाये ब्रह्मबोध्यतया वर्त्तते। व्याख्याता च एषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण। तदर्थं सकलवाग्ज्ञानार्थं ब्रह्मबोधनार्थञ्च॥ अनेन सकलवेदाध्ययनेन यत्फलं तदक्षरसमाम्नायज्ञानेन सूचितम्। तदाह्यति **सर्ववेदेत्यादि**॥

**सोऽयमित्यादि**भाष्यग्रन्थस्यैतत्श्लोकपूर्वार्द्धस्यैव व्याख्यानपरः। तत्र **वर्णज्ञानमित्यस्य** व्याख्या **सोऽयमक्षरसमाम्नाय इति**। **वाग्विषय** इत्यस्य व्याख्या **वाक्समाम्नाय इति** सर्ववाग्रूपत्वात्। तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां **पुष्पितः**। **फलितः** तदर्थभावनया जनिततत्त्वज्ञानरूपफलः। **चन्द्रतारकवत्प्रतिमण्डित** इत्यनेनाख्यानादित्वं सूचयति। तादृशोऽयं ब्रह्मराशिर्वेदितव्यः। बोध्यबोधकयोरभेदात्। **सर्ववेदेति**। सर्ववेदाध्ययनजन्यपुण्यरूपफलस्य[1] चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे भवति। इदमेव पूर्वं पुष्पितत्वम्। तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति। यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति। **इष्टबुध्यर्थमित्यादि** तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

---

१ पुण्यफलस्य॥ क॥ ख॥ इ॥ ग॥

# महाभाष्यप्रदीपोद्योतः॥

श्रीपाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः।



## वृद्धिरादैच्॥ १।१।१॥

द्विपदं सूत्रम्॥

[1]कृतम् अनयोः साधुत्वम् (भा)

इति भाष्यदर्शनात्॥ अन्यथा उद्देश्यानेकत्वाद् वृद्धिशब्दस्या-वृत्तिर्वाक्यार्थबोधाय कार्य्या स्यात्। द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः सम्भवात् तां विनापि सिद्ध्यति। न च समाहारे टच् प्रसङ्गः। समासान्तविधेरनित्यत्वात्।

[2]प्रतेरंश्वादय (पा)

इति सूत्रेऽंश्वादिगणे राजन् शब्दपाठाल्लिङ्गात्। अन्यथा

---

१ एतत् सूत्रस्याग्रिमभाष्ये द्रष्टव्यम्॥

२ पा–अ, ६. पा, २. सू, १९३ सिद्धान्तकौमुद्यां समासस्वरप्रकरणे एतत् सूत्रमस्ति)॥

[1]राजाह (पा)

इति टचा सिद्धे किन्तेन ॥ यद्वा पदत्रयम् । पक्षान्तरे भाष्ये

वृद्धिः, आत्, ऐजिति (भा)

पदविभागदर्शनात् ॥ वृद्धिशब्दस्यावृत्त्या योज्यः । अत्र पक्षे

[2]अनयोः (भा)

इति भाष्यं खण्डयोरित्यर्थकम् ॥ असाधुशब्दोच्चारणे पाणिनेर-श्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति भाष्ये

कृत्वम् (भा)

इत्यादि ।

ननु ऐच्छब्दस्य

[3]आदिरन्त्येन (पा)

इत्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादि-शास्त्रप्राप्तिर्लौकिकत्वञ्च । 'लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत आह

अनेकेति ॥ (कै)

नित्यत्वाच्चेति । (कै)

चो हेतौ । यतः शब्दार्थसम्बन्धस्य नित्यत्वात् सर्वसंज्ञानां

---

१ "राजाहःसखिभ्यष्टच्" पा – अ, ५. पा, ४. सू, ९१ ॥

२ "कृतमनयोः साधुत्वम्" इत्यत्र ॥

३ पा – अ, १. पा, १. सू, ७१ ॥

नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः॥ लोकेऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति बोधयितुं

१"सर्व"शब्दः। (कै)

नन्वेवं

वृद्धिरादैज् (पा)

इत्यादीनां वैयर्थ्यमत आह

शक्तीति॥ (कै)

शक्त्यवच्छेदः (कै)

तत् सङ्कोचः॥

विनियोगो (कै)

विशेषे नियमः। अभिमतातिरिक्तार्थान्तरव्युदासाय च सः॥ परिसङ्ख्यायाश्चात्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम्॥ यद्वा,

शक्त्यवच्छेदः (कै)

शक्तिनिश्चयः। शब्दार्थस्यानवच्छेदे इत्यादाववच्छेदशब्दस्य तदर्थकत्वदर्शनात्। फलरूपे हेतौ तृतीया।

विनियोग (कै)

उपदेशः। शक्तिनिश्चयफलकोपदेशादित्यर्थः॥ एवं च तत् सङ्केतकरणाद्रूपप्रकरणादर्थान्तराप्रतीतिरिति बोध्यम्।

---

१ "सर्वसंज्ञानामि"त्यत्र सर्वशब्दः॥

इद मेव युक्तम्। सर्वार्थवाचकत्वेऽपि सङ्केतरूपत्वेनाज्ञातशक्ति-बोधकतया विधित्वसम्भवेनैषां नियमार्थत्वासंभवात्। नन्वेवं लौकिकार्थबोधो नस्यादत उक्तम्

अनेकशक्तेरिति। (कै)

स्वशास्त्रे एव प्रकरणादन्यार्थाबोध इति भावः॥ अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः। अन्ये

[1]सर्वनाम्नो वृत्तिमात्र (वा)

इति पुंवत्त्वम्।

[2]कोपधप्रतिषेधे तद्धितवुग्रहणा- (वा)

द्वा स्त्रि[3]या इति पुंवत्त्वम्। "आश्रयभेदादेव शक्तिभेद" इति मते आद्यम्। "निरूपकभेदाद्भेदे" द्वितीयः। "नित्ये शब्दार्थ-सम्बन्धे" पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्याकर्त्तुमतः "सर्वे सर्वार्थवाचका" इत्यभ्युपगमादनेकशक्तित्वाव-सायः। "तादात्म्यमेव च शब्दार्थयोः शक्तिः"। अत्र पक्षे गौणमुख्य-विभागः प्रसिद्ध्यप्रसिद्धिमूलः। "अन्यायोऽनेकार्थत्वमि"तित्वश्रद्धेयमे-वेति निरूपितं मञ्जूषायाम्॥ अत्र लौकिकशब्दत्वं साध्यम्। शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं हेतुरतो न वैदिकेषु व्यभि-चारः। "सर्वसंज्ञानामि"ति वदता सूचितमिदम्। "अपूर्वाः संज्ञाः क्रियन्त" इति पक्षेऽपि लौकिकत्वं साधयति

१ (वा अ २। पा २। सू २९॥ अ २। पा २। सू २८॥)
२ वा अ ६। पा ३। सू ३७॥ ३ अ ६। पा ३। सू ३४॥

अनुकरणेति। (कै)

अयमपि लौकिकत्वे हेतुः।

[1]आदिरन्त्येने- (पा)

त्यनेन संज्ञात्वेन विनियुक्तस्यैव शब्दस्यानुकरणम्। सूत्रे लक्षणया तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्य्यवशाच्छाब्दबोधविषयतेति बोध्यम्। अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः॥ यत्त्वैजित्याद्यन्तावयवद्वारा समुदायानुकरणमिति तन्न। तथासत्या"दिरन्त्येने"तिसूत्रवैयर्थ्यापत्तेः। वृद्धिशब्दादेः शास्त्रविषयताया एवमप्यनुपपादनाच्च। नन्वनुकरणत्वाननुभवः किं च "लौकिकानां शब्दानां प्रवृत्तिरि"ति पक्षे उक्त हेतुद्वयस्याप्यभावोऽत आह

जातीति॥ (कै)

वैयाकरणव्यवहाराच्च तत् सिद्धिरिति भावः। अत्र पक्षे जातिबोधार्थमेव संज्ञासूत्राणीति बोध्यम्। अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव बोध्यम्। हरदत्तस्तु वृद्धिशब्दो वृधेर्भावे क्तिन्नन्तः। अभेदोपचाराच्च वृद्धियुक्तादेषु वृत्तिः। लक्षणयैव सिद्धे सूत्रं नियमार्थं वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो माभूदिति लौकिकपक्षे सूत्रार्थमाह तन्न।

[2]अदेङ्गुण (पा)

इत्यादावसंभवात्॥

---

१ अ १। पा १। सू ७१॥ २ अ १। पा १। सू २॥

ननु [1]कुलमित्यत्र संज्ञात्वपक्षे ककारादिपंचकगतप्रवृत्तिनिमित्ताभावाद्भावप्रत्ययोऽनुपपन्नः। किं चात्र ककारस्य प्राप्तिर्न तु कुवृत्तिधर्मस्येति कुलमित्यसंगतमत आह

**तत्रेति ॥ (कै)**

**[2]आसक्तस्वरूपः। (कै)**

संबद्धस्वरूपः ॥ एवं च कुशब्दः कुशब्दवत्ककारादिषु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम्। संबन्धस्थानादिव्यवहारसिद्धतादात्म्यम्। तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य शक्ते बाधकाभावात्। केचित्तु शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं तच्छक्तिश्च[3] वाचिकेत्याहुः। तेन च [4]कुलशब्देन स्वार्थाश्रयः ककारो लक्ष्यते इति ककारः कस्मान्नेति चोद्यपर्यवसानम्। वस्तुतः कुलकुपदयोर्भत्वभसंज्ञापदयोश्च पर्यायतेति [5]ऋलृक् सूत्रे निरूपितमिति न कश्चिद्दोषः ॥

**अङ्गत्वात्। (कै)**

पदपदार्थकथनद्वारा वेदोपकारकत्वात्। "मुखं व्याकरणमि"त्यादिना अङ्गत्वनिरूपणाच्च।

**प्रधानं च षट्स्वङ्गेषु व्याकरणमिति (भा)**

---

१ भाष्ये ॥ २ आसक्तरूपः। क। ख। ग। ड ॥
३ वाधिकेत्याहुः। ख ॥ ४ कुशब्देन। क। कुलशब्दे। ड ॥
५ अ १। पा १। आ १। सू २ ॥

पस्पशायां भाष्योक्तेश्च। "[1]अस्यामिष्टौ नार्थत्वं प्रयोजकं नैवेष्टिरस्ति छन्दोवत्कवयः कुर्वन्तीति" [2]सूत्र्याख्याविति सूत्रे भाष्योक्तेः। तस्मादङ्गत्वमेव प्रयोजकमिति भावः॥

ननु छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह

**दृष्टिरिति। (कै)**

तथा च [3]भाष्यकारीयातिदेशात्सूत्रेषु छन्दः कार्यप्रवृत्तिरिति भावः॥ भाष्ये

**जश्त्वमपीति। (भा)**

संहितया पाठे इत्यर्थः॥

**उभयसंज्ञान्यपीति। (भा)**

उभे संज्ञे येषामिति विग्रहः। संज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्वकल्पनेति भावः॥

ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयते इति प्रश्नानुपपत्तिरत आह

**उभयथेति। (कै)**

लुगादिसंज्ञासु तद्भावितपक्षस्य लोपसंज्ञायामदर्शनमात्रस्येति भावः॥ ननु टिघुभादिसंज्ञास्तद्भावितानामेव ग्रहणं दृश्यत इति

---

१ "अस्यामिष्टौ" इत्यारभ्य "इति भाव" इत्यन्तं नास्ति। ह॥

२ अ १। पा ४। सू ३॥

३ "छन्दोवत् सूत्राणि भवन्ती" त्यतिदेशात्। आ ३। भा॥

सोऽपि पक्षः प्रङ्क्तितुमुचित इति चेन्न। तत्र हि तद्भावितासंभवात्तद्भावितानामेव ग्रहणं न च तथा प्रकृते इति "उभयथे"त्युक्तम्। वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणं वृद्धिशब्देकत्वे द्वितीयः पक्ष इति भावः॥ भाष्ये

**वृद्धिलक्षणो मयडिति।** (भा)

**[1]नित्यं वृद्धशरादिभ्य** (भा)

इति। अस्य [2]वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम्। वृद्धलक्षण इति पाठे एषां वृद्धित्वाभावेन समुदायानां वृद्धत्वाभावादित्यर्थः॥

**फिञिति।** (भा)

**[3]उदीचां वृद्धादगोत्रादिति।** (भा)

न च [4]**प्राचामवृद्धादिति** (भा)

फिनाप्येतत्सिद्धम्। पुंवद्भावनिषेधोऽप्याम्रगुप्तायनीभार्य इत्यादौ

**[5]जातेश्चेति** (भा)

सिद्ध इति वाच्यम्। आम्रगुप्तायनेरपत्यं युवेत्यर्थेऽणो

**[6]ण्यक्षत्रियार्षञित** (भा)

इति लुकि आम्रगुप्तायनिरित्येवरूपं पितरि पुत्रेष्यते फिनि तु ञितः परत्वाभावान्नसिध्येत्। नचाब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति तत्सिद्धिः। ब्राह्मणगोत्रे तदप्रवृत्तेः॥ भाष्ये

---

१ अ ४। पा ३। सू १४४॥ २ अस्य वृद्धिसंज्ञाद्वारा। क॥
३ अ ४। पा १। सू १५७॥ ४ अ ४। पा १। सू १६०॥
५ अ ६। पा ३। सू ४१॥ ६ अ २। पा ४। सू ५८॥

एष विधिरिति। (भा)

पूर्वपदान्तोदात्तत्वमित्यर्थः। तावद्वार्थे

[1]आ सर्वनाम्न (पा)

इत्यात्वस्य वतुर्निमित्तमिति पुंवत्त्वनिषेध प्राप्तिः। यदि प्रथमपक्षे दोषो दुरुद्धरोऽ"स्तु [2]तर्ही"त्याशयः॥ भाष्ये

तद्वत्युत्तरपद इति। (भा)

समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायोत्तरपदस्येत्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः॥ तत्राधिकारलक्षणायां बीजमाह

तत्र हीति। (कै)

न च आ अवतीति औः सर्वस्य औः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसंभवः। नचैकादेशे व्यपवर्गाभावः।

[3]नेन्द्रस्येति

निषेधेन [4]पूर्वोत्तरपदसंबन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात्। तथा च सर्वशब्दान्तोदात्तत्वे शेषनिधातेनौकारस्यानुदात्तत्वे एकादेशस्य

---

१ अ ६। पा ३। सू ९१॥ २ भाष्ये।
३ अ ७। पा ३। सू २२॥ ४ सर्वोत्तरपदसम्बन्धि। क॥

[1]स्वरितो वानुदात्त (पा)

इति पाक्षिकः स्वरितः स्यादिति वाच्यम् । तादृशानामभिधाने दृढतरमानाभावात् । स्वरितत्वादधिकारलाभ इति बोध्यम् ॥

अन्यथा वृद्धेरिति । (कै)

[2]वृध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहण[3]मिति भावः ॥

[4]ननु अर्शशब्दाद्

[5]अर्श आद्य- (पा)

चि टार्शसेत्यादौ वृद्धिरूपसम्भवइत्यरुचेराह

अथवेति । (कै)

व्यधिकरणबहुव्रीह्याश्रयणसामर्थ्यादेवव्यपदेशिवद्भावाप्रवृत्तिरिति भावः ॥

तेषामेवेति । (कै)

एव शब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः ॥ ननु वृत्तावभेदैकत्वसंख्यावगतेर्बहुवचनान्तेन विग्रहोऽनुपपन्नोऽत आह

---

१ अ ८ । पा २ । सू ६ ॥

२ वृद्ध्यात्मकस्तद्धिताभावात् । क ॥

३ वृद्धिनिमित्तग्रहणं व्यधिकरणबहुव्रीह्याश्रयणाद् । ख । ग ॥

४ "ननु अर्शशब्दाद्" इत्यारभ्य "अथवेती"त्यन्तं नास्ति ॥ क ॥ ख ॥ ङ ॥ ग ॥

५ अर्श आदिभ्योऽच् । अ ५ । पा २ । सू १२७ ॥

## निमित्तेति। (कै)

तत्र [1]कार्त्स्न्यप्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः। न च वैयाकरणभार्येऽपि निषेधापत्तिः। इष्टापत्तेः। अत एव।

## आदैज्मात्रस्येति

पक्षेऽत्र दोषानुद्भावनम्।

## तद्भावितानामेवेति

पक्षेऽपि

## [2]न य्वाभ्यामिति (पा)

सूत्रे ऐजंशेऽपि वृद्धिपदसंबन्धेन निषेधप्रवृत्तिरत्र सूपपादा॥ अत एव

## [3]देविकाशिंशपेति (पा)

सूत्रे भाष्यकृता तत्संबन्धो दर्शित इत्याहुः। आदैज्मात्रग्रहणादेव

## [4]मालादीनांचेति (पा)

सार्थकम्। अन्यथाऽस्यावृद्धत्वात्

## [5]प्रस्थेऽवृद्धमि- (पा)

त्येव सिद्धे किं तेन॥

---

१ कार्त्स्न्यं। इ। ख। क॥ कार्त्स्न्ये। ग॥ २ अ ७। पा ३। सू ३॥
३ अ ७। पा ३। सू १॥ ४ अ ६। पा २। सू ८८॥
५ प्रस्थेऽवृद्धमकर्क्यादीनाम्॥ अ ६। पा २। सू ८७॥ समास स्वरप्रकरणे (सि कौ)।

वार्त्तिकमिति । ( कै )

सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम् । एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्यायुक्ता दुरुक्तचिन्तेत्यपास्तम् ॥

प्रस्तावेति । ( कै )

वार्त्तिकेऽधिकारशब्दोक्तः स इति भावः ॥ वृद्ध्यादीनां संज्ञात्वाद्भेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह

संप्रत्यय इति ॥ ( कै )

भाष्ये

संज्ञेत्येष (भा)

इति । शब्दार्थज्ञानानामितरेतराध्यासादिदं नानुपपन्नम् ॥

भाष्यकारस्त्विति । ( कै )

अधिकारं विनाऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः ॥

वाक्याध्याहारेणेति । ( कै )

"[1]इदमिदानीमिति" वाक्याध्याहारेणेत्यर्थः ॥ ननु द्विगौ अकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप्स्यादित आह

बहुव्रीहिरिति ॥ ( कै )

अन्यपदार्थस्याशब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह

समाहार इति । ( कै )

[2]पात्रान्तादित्वात् स्त्रीत्वाभावः। अत एव त्रिसूत्रीत्यादिसंगच्छते।

---

१ अत्रैव भाष्ये ॥

२ पात्राद्यन्तस्य नेति वार्त्तिकेन ॥ वा अ २ । पा ४ । सू ३० ॥

बहुसूत्रशब्दस्यैव तत्रपाठादित्यभिमानः ॥ नन्वनर्थकदृष्टान्तेऽर्थवन्तीत्यादिव्यर्थमत आह

यथेति ॥ (कै)

यद्यप्यन्वितार्थकपदसमूह एव वाक्यं तथापि भाष्ये [1]पदसमूह एव वाक्यशब्दः प्रयुक्तोऽतोऽ-

[2]नर्थकानि वाक्यानीति (भा)

न विरुद्धम् ॥

झटिति । (कै)

विनाचार्याचारादिज्ञानेन ॥

पदार्थानाम् । (कै)

कुण्डमजाजिनमित्यादीनाम् ॥ स्फ्यवत्तोऽपत्यं स्फैयकृतः । उपचारो नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति ।

व्यवहारादिति । (कै)

अनेन व्यवहाराच्छक्तिग्रह उक्तः स च शक्तिग्राहकशिरोमणिः । भाष्ये

वेदे याज्ञिका (भा)

इति । यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः ॥ वेदकर्तृत्ववत्संज्ञाकर्तृत्वं तेषां द्रष्टव्यम् ॥

भाष्ये

---

१ पदसमूहे एव । ख ॥

२ अत्रैव भाष्ये ।

**इहैवेति ।** (भा)

"वृद्धिरादैच्" सूत्रे एवेत्यर्थः ॥ असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह

**वृद्धिशब्दस्येति ॥** (कै)

**प्रत्यायनशक्तिः ।** (कै)

प्रत्यायने बोधजनने कारणीभूता शक्तिः । भाष्ये

**उदाहरन्तीति ।** (भा)

"वृद्धिरादैजि"ति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचि वृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीत् अचैषीद्[1] अश्रौषीदित्युदाहरन्तीत्यर्थः । एवं च वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय "वृद्धिरादैच्" सूत्रस्य संज्ञाबोधकत्वं वृद्धिशब्दस्य संज्ञात्वं च निर्णयन्तीति भावः ॥

**तेन ।** (भा)

अपराचार्योक्तोदाहरणेन ॥ नन्वाकृतिर्ज्जातिस्तद्भेद आदैच्ष्वपि तदभावस्तु न वृद्धिशब्देऽपीत्यत आह

**आकृत्येति ।** (कै)

बहुव्रीहिरिति भावः ॥ "अनाकृतिरि"त्येतन्न्यायसिद्धमित्याह

**लाघवार्थमिति ॥** (कै)

नन्वेकस्यापि तव्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह

---

१ अ ७। पा २। सू १ ॥
२ अश्रौषीदिति राजकीयपाठशालास्थपुस्तके नास्ति ॥

प्रयोजनेति । (कै)

सति हि प्रयोजने तथा । प्रकृते तु न तथा । प्रयोजनाभावादिति भावः ॥

प्रत्यभिज्ञानिमित्तकम् । (कै।

प्रत्यभिज्ञाप्रमाणकमित्यर्थः ॥ वस्तुतो भाष्ये

आकृतिमत (भा)

इत्यस्य भेदवत इत्यर्थः । अवस्थाभेदेन च तत्रारोपितः सः । आरोपितभेदे च जातिसत्त्वे न मानम् । अत एव देवदत्तेत्यादौ न ङीषिति कश्चित् ॥

स कथं वृत्तिकारानिति । (कै)

तस्यैवेति (भा)

भाष्यस्य तदीयस्यैवेत्यर्थ [1]इति भावः ॥

[2]लिंगेन वेत्येतदिति । (कै)

लिंगाऽऽसंगः । इत्थं लिंगासंज्ञेति[3] च वक्तव्यमित्यर्थः ॥

ङकारादिष्विति । (कै)

धात्वादिपठितेष्वित्यर्थः ॥ ननु संज्ञालिङ्गे कृतेऽपीत्संज्ञाद्यभावे कथं तेषां निवृत्तिरत आह भाष्ये

---

१ "इति भाव" इत्यारभ्य "धात्वादिपठितेष्वित्यर्थ" इत्यन्तं नास्ति ॥ ख ॥

२ लिङ्गेनचेत्येतदिति । इ ॥

३ इत्थं लिङ्गासङ्गेति ॥ क ॥

**स्वभावतः संज्ञेति ।** (भा)

तद्व्याचष्टे

**संज्ञा संज्ञिनमिति ॥** (भा)

भाष्ये

**अपाणिनीयन्त्विति ।** (भा)

अनन्तस्थलेषु दोषविशिष्टपठने आनुनासिक्यादिवत् [1]प्रतिज्ञा-करणे च दुर्ज्ञेयत्वादिति भावः ॥ ननु भवतेर्जन्मार्थत्वेना[2]भूततद्भाव-प्रतीत्या च्वौ सति प्रमाणीभूत इति स्यात्तदविवक्षायां तु प्रमाण-माचार्यः प्रकारान्तरेण भूत इत्यर्थः स्यादत आह

**प्रामाण्यमिति ॥** (कै)

**वृत्तिविषये** (कै)

इति प्रकृताभिप्रायम् ॥

**प्रमादः** (कै)

पिशाचादिसंबन्धः ॥

**आगमः** (कै)

संप्रदायः । प्रकृतभाष्योक्तिर्वा ॥

---

१ प्रतिज्ञाकरणं च । इ ॥

२ अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः । अ ५ । पा ४ । सू ५० ॥ इत्यनेनाभूततद्भावेऽर्थे "च्विः" ॥

भाष्येऽनर्थकेनेति । (भा)

बोध्यार्थरहितेनेत्यर्थः । तेन पारायणे सर्वेषामदृष्टार्थत्वेऽपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासंगतिः ॥

संज्ञासंप्रत्ययाय । (कै)

संज्ञात्वनिश्चयाय । भाष्ये

किमत इति । (भा)

अतस्तादृशकर्तृकत्वात् किं कथमर्थवत्त्वं यत् यतस्तदृशक्यनिरूपणमित्यक्षरार्थः ॥

साध्वनुशासने (भा)

इत्यनेन साधुत्वपक्षस्याकाण्डता वारिता ॥

द्वन्द्वत्वादिति । (कै)

अनयोरि- (कै)

त्यस्य पदयोरिति विशेष्यम् । पदानामेव साधुत्वान्वाख्यानादिति भावः ॥ भाष्ये

अविशेषेणेति । (भा)

प्रत्ययविशेषमनादायेत्यर्थः ॥

ननु वर्णसमाम्नाये आकाराद्युपदेशेऽप्यादैच्छब्दस्य किमागतमत आह

तेषां चेति । (कै)

संज्ञाग्रहणद्वारेणेति शेषः ॥

[1]तपर इति (पा)

[2]आदिरन्त्येनेति च (पा)

तेषां कृतयोरादैच्संज्ञयोर्द्वन्द्वनिर्देशेन द्वन्द्वशास्त्रेण कृतं साधुत्वमित्यर्थः॥ ऐजित्यपि तन्मूलका"दिरन्त्येने"त्यनेन बोधितमित्याशयेन भाष्ये

[3]अक्षरसमाम्नाय उपदिष्टा (भा)

इत्युक्तम्। ननु "उपसर्जनं पूर्वं परस्मै"त्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह

प्रयुज्यत इति॥ (कै)

स्वतन्त्रस्येति। (कै)

गत्युपसर्गनिरासः। तौ हि द्योतकत्वात्परतन्त्रौ॥

पदावयवस्येति। (कै)

[4]आदिना द्योतकाः। युक्त्यन्तरमाह

लोकेचेति। (कै)

शिष्टलोकाभिप्रायं प्रयुक्तानां चेदमनुशासनमिति भावः॥

केवलः। (कै)

आदैच्पदा[5]संबद्धः॥ भाष्ये

---

१ अ १। पा १। सू ७०॥

२ अ १। पा १। सू ७१॥

३ अत्रैव भाष्ये॥ ४ अत्रैव कैयटे॥

५ आदैच् पदासम्बन्धः। इ॥

**संस्कृत्येति** (भा)

[1]साधुत्वेनान्वाख्यायेत्यर्थः ।

**अभिसंबन्धः ।** (भा)

पौर्वापर्यलक्षणः ॥ षष्ठ्यभावेऽपि

[2]**नाभिनभमि-** (पा)

त्यादौ आदेशदर्शनादाह

**स्थानेति ।** (कै)

[3]**षष्ठीस्थाने** (पा)

इति सूत्रगत इति शेषः। तत्र हि सूत्रे स्थानशब्दोऽधिकरण-व्युत्पत्त्याऽर्थवाची भावव्युत्पत्त्या प्रसंगवाची च तत्त्वेनोपादीयते। अन्यथा[4] केवलार्थशब्दं प्राप्तिशब्दं वोपाददीत। एवं च याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसंबन्धार्थिकैवेत्येकोऽर्थः। द्वितीये तु षष्ठी-शब्दो लक्षणया स्थानिपरः ।

**स्थाने**

इति सप्तमी वाच्यस्यार्थस्याधिकरणत्वविवक्षया बोध्या ॥ योगश-ब्दस्य युज्यते इति व्युत्पत्त्या आदेशवाची। ततो[5]ऽर्श आद्यच्। तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थ इति भावः ॥ भाष्यस्य तु

---

१ साधुनान्वाख्यायेत्यर्थः ॥ इ ॥

२ उगवादिगणसूत्रम्। उगवादिभ्योयत् ॥ अ ५। पा १। सू २ ॥

३ अ १। पा १। सू ४९ ॥

४ अन्यथा केवलार्थशब्दं वोपाददीत ॥ इ ॥

५ अर्श आदिभ्योऽच्। (अ ५। पा २। सू १२७ ॥) इत्यनेन ॥

षष्ठी निर्दिष्टस्य स्थानिनो योऽर्थस्तस्य [1]वाचका उच्यन्ते न चात्रा-दैचु षष्ठीनिर्दिष्टस्थानिनोऽर्थमभिधेयत्वेन पश्याम इत्यर्थः ॥

षष्ठ्यर्थाभावादिति । (कै)

षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः ॥

तदर्थसद्भावादिति । (कै)

आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः । वस्तुतस्तु स्थानं प्रसङ्ग एव स चार्थवत एव । अर्थप्रत्यायनाय शब्दप्रयोगात् । एवं चार्थप्रयुक्त एव स्थान्यादेशयोः सम्बन्ध इति स्थान्यर्थाभिधानसमर्थ-स्यैव आदेशतेति वदन्ति ॥

अत्रापीति । (कै)

वस्तुतोऽवयवषष्ठ्यैवागमा उच्यन्ते इत्यर्थो भाष्यस्य । कत्वादिलि-ङ्गभ्रमव्यावृत्तये आह ।

देशेति । (कै)

देशविशेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीति[2]र्न यत्नं विनेत्यर्थः ॥

इदं खल्वपीति (भा)

भाष्यं पूर्वोक्तपक्षाणामसंभवं प्रतिपादयति[3] तद्व्याचष्टे

विशेषणेति ॥ (कै)

---

१ "आदेशाः" इत्यधिकम् । ख ।

२ प्रतीतिर्यत्नाभावेनेत्यर्थः ॥ क ॥ ख ॥ इ ॥

३ "तद्व्याचष्टे विशेषणेति" इति नास्ति । इ । ख । ग ॥

## अस्ति सामानाधिकरण्यमिति। (कै)

न च[1] तादृशे संज्ञासंज्ञित्वसंभावनेति भावः॥

## इत्युभयोरिति। (कै)

विशेषणविशेष्यत्वसंज्ञासंज्ञित्वसंभावनास्थलप्रदर्शनायेत्यर्थः॥

## संज्ञासंज्ञिनोरपीति। (कै)

वृद्धिरादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम्। संज्ञी च व्यवच्छेद्यः सन् विशेष्यः। विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः॥

## प्रसिद्धेति। (कै)

"[2]द्वयोर्हि प्रतीते"त्यादिना भाष्ये उक्तमेतत्। यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनो[3]र्विशेषणविशेष्यभावो लोके न प्रसिद्ध इत्यर्थः॥ ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसंबन्धस्तत्तु न युक्तम्। सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन विशेषणविशेष्ययोः सामानाधिकरण्यमिति [4]भाष्यासंगतेः। संज्ञासंज्ञिनोरेकाभिधेयसंबन्धाभावेन संज्ञासंज्ञिनोर्वा सामानाधिकरण्यमित्यस्याप्यसंगति[5]रत आह

---

१ न च तादृश। ख॥ २ "द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति"। अत्रैवाग्रे उक्तम्॥

३ विशेष्यविशेषणभावः॥ क॥ ख॥ ङ॥ ४ भाष्यासंगतिः॥ क॥

५ सामानाधिकरण्यमित्यस्याप्यसङ्गतेः॥ ख। ङ॥

तस्त्विति ॥ (कै)

भिन्नप्रवृत्ती- (कै)

त्यनेन पर्यायनिरासः । वस्तुत इदं चिन्त्यम् । "अग्ने देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानी"त्यादौ

[1]नामन्त्रिते समानाधिकरणे (पा)

इत्यस्य व्यावृत्तये तत्र "सामान्यवचनग्रहणमिति" तत्सूत्रस्थभाष्यविरोधापत्तेर्युगपदधिकरणवचनता पक्षे पट्वीमृद्व्याविर्त्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च विशेषणत्वादिकं चोपपद्यत इत्याह

विशेषणेति ॥ (कै)

भाष्ये

संज्ञासंज्ञिनोरि- (भा)

त्यत्र संज्ञिपदेन [2]संज्ञिसमर्पकः शब्दोऽभिप्रेतः । संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं संज्ञिनि तत्संबन्धात् । संज्ञिबोधकशब्दे च संज्ञिगततत्तद्धर्मः[3] प्रवृत्तिनिमित्तम् । एवं च वृद्धिशब्दवदभिन्ना आदैच इति बोधः । 'वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः ॥

अन्ये त्विति । (कै)

[4]संज्ञासंज्ञिनोरुक्तं प्रवृत्तिनिमित्तमिति सामानाधिकरण्यम् ।

---

१ अ ८ । पा १ । सू ७३ ॥

२ संज्ञिसमर्पकशब्दः ॥ क ॥

३ तत्तद्धर्मप्रवृत्तिनिमित्तम् ॥ क ॥ ख ॥

४ संज्ञासंज्ञिनोरुक्तप्रवृत्तिनिमित्तमिति ॥ ख ॥

एकविभक्ति[1]कत्वञ्च पक्षे शब्दद्वारा वै। विभक्तिशब्देन शक्ति-र्वा। भाष्ये

[2]संज्ञासंज्ञिनोः (भा)

इत्यस्य तत्प्रवृत्तिनिमित्तयोरित्यर्थः।

अन्ये त्विति- (कै)

मतेऽरुचिबीजन्तु

[3]प्रतीतपदार्थकयोरिति (भा)

बहुव्रीहिस्वरभङ्गः।

[4]विशेषणविशेष्यभावो भवती- (भा)

त्यस्य तदर्थप्रतिपादकत्वं भवतीत्यर्थः॥ ननु वैयाकरणानामादै-च्छब्दः प्रतीतपदार्थ[5]एवेत्यत आह

न हीति। (कै)

वृद्धिशब्दार्थान्वययोग्य इति शेषोऽत्र द्रष्टव्यः। केचित्तु वृद्ध्या-दिशब्दाः शब्दपरा एव वृद्धिशब्दाभिन्ना आदैच इति [6]बोधः। तदुक्तं हरिणा

---

१ एकविभक्तित्वं त्वत्र ॥ क ॥

२ "विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा" इत्यत्र ॥

३ अत्रैव भाष्ये ॥

४ अत्रैव भाष्ये ॥

५ प्रतीतपदार्थक एवेत्यत आह ॥ क । ख । ग । ङ ॥

६ इति शेषः ॥ ङ ॥

वृद्ध्यादयो य… दाः स्वरूपोपनिबन्धनाः।

आदै… प्र… तैः शब्दैः सम्बन्धं यान्ति संज्ञिभि-

रिति॥…

…धिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याशः॥ भाष्ये

यच्चोभे (भा)

…ति। प्रत्ययः। अनीयरित्यादौ।

लघ्वर्थमि- (भा)

त्यस्य लाघवार्थमित्यर्थः॥

न मांसपिण्ड इति। (भा)

दूरस्थस्यापि नामोच्चारणमात्रेण दानादिसंभवादिति भावः॥

सतो वृ- (भा)

त्यादिना न भावरूपं विवक्षितम्। अभावस्यापि लोपादिसंज्ञाद-र्शनात्। नापि विद्यमानत्वं प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधा-नादत आह

बुद्ध्येति। (कै)

अत एव "भावर्णिर्भवितामनुरि"त्यादौ न दोषः। एवं च सच्छब्देन [1]पूर्वं बुद्ध्याविषयीकृतत्वं विवक्षितमित्यर्थः। बुद्धिसत्तास-

---

१ प्रत्यायितैः। सम्॥

२ पूर्वंबुद्ध्याविषयीकृतत्वम्। इ।

माविष्ट [1]एवचार्थः शब्देन बोध्यत इति.
पूर्वोच्चारितस्यैव भवतीत्याह

शब्देन पूर्वमिति ॥ (कै)

भाष्ये

माङ्गलिको (भा)

मङ्गलप्रयोजनः ।

महतोऽ- (भा)

र्थतः । एकैकं सूत्रं शास्त्रमिति

शास्त्रौघस्य (भा)

इत्युक्तम् ।

मङ्गलादीनी- (भा)

त्यादिना स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम् ।

प्रथन्ते । (भा)

विस्तृतानि भवन्ति । तेन समाप्तिरर्थाच्चिन्ता ॥

आर्थस्त्वन्यथेति । (कै)

आदैज् वृद्धिरित्याकारः । आनुपूर्वीज्ञानस्याऽऽसक्तिविधया हेतुत्वादिति भावः ॥ कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह

---

१ एवार्थः शब्देन —। ख ॥

त्विति । (कै)

…णो वृद्धिपदाभिन्ना इत्यर्थः । एवं चानु-
…म बोधजनकशब्दोच्चारणं मङ्गलार्थं चान्यता-
…अत्रैकशब्दः प्रथमार्थकः । प्रथमं तथाकरणं मङ्ग-
…एवं चान्यत्रापि तथाकरणम् उद्देश्य विधेयभावेनान्वये
…साधुत्वमिति भ्रमवारणार्थमित्याहुः ॥

परिभाषेति । (कै)

तदा हि यत्राऽपृक्तपदं तत्रैकालित्याद्युपतिष्ठत इत्यर्थात् प्राथम्यं युक्तमेवेत्यर्थः । वस्तुत इदं वृद्धिसूत्रेऽपि सुवचम् । किं चैव-मपृक्तसंज्ञायामित्यादिभाष्यवार्त्तिकव्यवहारानुपपत्तिः । केचित्तु परि-भाषात्वेऽपि एकाल्[1]प्रत्यय[2]इत्येतदुद्देशेनापृक्तपदवद्देश्यत्वं विधे-यम् । पदपरत्वार्थन्तवापि लक्षणावश्यकत्वेन [3]सामानाधिकरण्यान्व-यार्थन्तावत्पर्यन्तलक्षणाया उचितत्वात् । पदद्वयाध्याहारे गौरवाच्च ॥ एवं च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव [4]पूर्वं पाठो युक्तः । आनुपूर्व्या-त्यागाद्बोधस्तूभयोः सम इति वदन्ति ॥ भाष्ये

अनुवर्त्त्यस्यादिति । (भा)

तत्रासम्बद्धबहुव्यवायादशक्यमिति भावः ॥

---

१ अपृक्त एकालप्रत्ययः ॥ अ १ । पा २ । सू ४१ ॥
२ इत्याद्युद्देशेन ॥ ख ॥
३ सामानाधिकरण्यार्थं तावत् । ख ॥
४ तस्यैव पूर्वपाठो युक्तः । ख । ग । द ॥

**अस्थाने । (भा)**

अनवसरे ।

**भिद्यते । (भा)** स्तथा

विलक्षणं भवतीत्यर्थः ॥

**अभिसम्बन्धः । (भा)**

संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः ॥

**तस्याज्ञतः (भा)**

इत्यस्य तेनाज्ञात इत्यर्थः ॥ तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः ॥

**अथ तत्रेति । (भा)**

अनुमानादिना ज्ञात इत्यर्थः ॥

**सतो वृद्ध्यादिष्विति । (कै)**

सतो निष्पन्नस्य ॥

**संज्ञाभावात् । (भा)**

संज्ञासम्बन्धात् ॥

**तदाश्रये (भा)**

संज्ञाश्रये । संज्ञया संज्ञिविधायके शास्त्रे

**[1]मृजेर्वृद्धिः (भा)**

इत्यादौ वृद्ध्यादिपदेषु

१ मृजेर्वृद्धिः । अ ७ । पा २ । सू ११४ ॥

**इतरेतराश्रयत्वादप्रसिद्धिः** (भा)

वाक्यार्थासिद्धिरित्यर्थः ॥ अविद्यमाने सम्बन्धस्य वक्तुमशक्यत्वादिति भावः ॥ वचनक्रियायामितरेतराश्रयत्वाभावेऽपि तत्फलतौ... ॥

**नौ** (कै)

इति ॥

**सामग्र्यन्तरेति ।** (कै)

कारणान्तरेत्यर्थः ॥

**सूचकम् ।** (भा)

कीलादि । न च सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः संभवत्येव । अन्यथा तवापि तत्तद्बोद्धृबुद्धावसन्निहितसकलाकारविषयकशक्तिग्रहासंभवेनानुवादेऽपि दोषः स्यात् । सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्य्यकारणभावाभ्युपगमान्न दोष इति वाच्यम् ॥ जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेऽप्यनुत्पन्ने जात्याश्रयत्वसम्बन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बोधासंभवेन

**[1]मृजेर्वृद्धिरि-** (पा)

त्यत्र तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात् ।

**[2]वृद्धिरादैजि-** (पा)

त्यस्य विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासंभ-

१ अ ७ । पा २ । सू ११४ ॥ २ अ १ । पा १ । सू १ ॥

वेन तत्र वृद्धिपदस्य शक्तिग्रहासंभवाच्च। यथ "यस्य सूत्रस्य शाटकं वये"त्यादाविव भाविसंज्ञाविज्ञानेन सिद्ध्यति। यथा च तत्रोत्पत्त्यनन्तरङ्गृहीतशक्तिकशाटकसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेऽपि। स्पष्टं चेदम्

[1]इग्यण (पा)

इति सूत्रे भाष्ये। तथाप्यत्र वास्तवमेव परिहारमाह भाष्ये

## सिद्धन्त्विति। (भा)

एतच्च मञ्जूषायां विस्तरेण निरूपितम्।

## न्यायेति। (कै)

[2]वक्ष्यमाणन्यायेत्यर्थः॥

ननु [3]वृद्धिर्यस्येत्यादौ समुदायासंभवात्प्रत्येकमेव संज्ञेत्यत आह

## अन्यथेति। (कै)

एवं च तमादाय तत्रापि संभवः। द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः॥

## समुदायेति। (कै)

"मातापित्रोर्मृतेऽहनी"ति वद्बोधे साहित्यं न तु क्रियानिष्पत्तौ इति भावः॥

---

१ इग्यणः सम्प्रसारणम्। अ १। पा १। सू ४५॥

२ वक्ष्यमाणन्यायेनेत्यर्थः॥ क॥

३ वृद्धिर्यस्याचामादिस्तद्वृद्धम्॥ अ १। पा १। सू ७३॥

उभयत्रेति। (कै)

समुदायेऽवयवेचेत्यर्थः। उभयत्र तात्पर्याभावे हेतु-

र्युगपदिति। (कै)

फलाभावादिति भावः। यद्यपि पर्यायः प्राप्नोति। तथापि समासविधिनियमोभयपरत्वे गौरवमिति अतो लिङ्गत्वकल्पनमे-वोचितमित्यत्र तात्पर्यम्॥

भाष्यकारास्त्विति। (कै)

तदेकदेशीत्यर्थः। द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं सहार्थक-मिति भावः॥ न ज्ञापकादेव किन्तु युक्तितोऽपि प्रत्येकं संज्ञेत्याह भाष्ये

प्रत्यवयवमिति। (कै)

प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता न हि भुज्यर्थोऽत्र[१]वाक्यार्थः किन्तु एयन्तार्थोऽत आह

अत्रेति। (कै)

वाक्यार्थस्तु अत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसंभवात् फलग्रहणम्। तच्च प्रयोज्यव्यापाररूपमित्याह

तत्रेति॥ (कै)

ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदायपर्याप्ते-त्यपि वक्तुं शक्यमत आह

१ भुज्यर्थो वाक्यार्थः। ख॥

तृप्तिफलत्वाच्चेति ॥ (कै)

सर्वापि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह

नाट्येति ॥ (कै)

गीतादीति। (कै)

आदिना नृ[1]त्तवाद्यादि। अन्वर्थत्वं[2] संयुज्यन्ते वर्णा अत्रेति। लक्ष्यानुसारात् तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम्। प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह

वृद्धिसंज्ञेति ॥ (कै)

लिङ्गादिति। (कै)

"[3]प्रस्थेऽवृद्धमिति" निषेधबाधनार्थं हि तदिति भावः। न च नामधेयरूप[4]मालादीनामाद्युदात्तार्थन्तत्। तस्य वा नामधेयस्येति पक्षे वृद्धत्वादिति वाच्यम्। "अभिव्यक्तेति" न्यायेन तत्राप्रवृत्तेः॥ [5]समुदाये समाप्तौ युक्तिमाह

अथ शतस्येति। (कै)

एवंचा[6]कथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके॥

---

१ नृत्यवाद्यादि। ख॥ २ अन्वर्थत्वात्। ख॥

३ प्रस्थेऽवृद्धमकर्क्यादीनाम्। अ ६। पा २। सू ८७॥ सिद्धान्तकौमुद्यां समासस्वरप्रकरणे द्रष्टव्यम्॥

४ मालादीनां च। अ ६। पा २। सू ८८॥ वृद्धानाम् आद्युदात्तार्थमिदम्॥

५ समुदाये युक्तिमाह। ख॥

६ अकथितं च। अ १। पा ४। सू ५१॥

उद्देश्यत्वरूपमार्थं प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म। दण्डेषु स्वसंप्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनं नियन्त्रणम् । [1]तत्र ण्यन्त इव कर्त्तुरित्युभयोः कर्मत्वम् । कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्य[2]न्तत्रैव प्रधाने कर्मणि लकारः ॥

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्

इत्युक्तः ॥ दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते ।

अपादानस्थानप्राप्ता (कै)

इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति परे ॥

शतस्य प्राधान्यमिति । (कै)

शारीराभिहननलक्षणदण्डव्यावर्त्तनेनेति भावः ॥ नन्वन्तरेणापीति वाच्ये सार्वकालिकासत्त्वप्रतिपादकमपि शब्दरहितमयुक्तमत आह

न्यायादिति । (कै)

[3]शतदण्डनन्यायेत्यर्थः ॥

योगविभागेति । (कै)

तिङन्तसमासायेति भावः ॥ भाष्ये

---

१ ण्यन्त इव । क ॥ इ ॥

२ प्राधान्यात्तत्रैव । क ॥

३ शतदण्डनन्यायादित्यर्थः । क ॥

किमर्थमिति । (भा)

चतुर्थीतत्पुरुषः ॥

तपरकरणं क्रियते (भा)

इति । पाकं पचतीतिवत्सामान्यविशेषभावेन सह प्रयोगः । [१]आलजातेर्भिन्नकालावर्णवृत्तित्वाभावाद् द्वितीयमाश्रयति ।

व्यक्तिरिति ॥ (कै)

यद्गुणस्य (कै)

इत्यादि बहुव्रीहिः ॥ भाष्ये

किं च कारणमिति । (भा)

[२]निमित्तकारणहेतुष्विति (वा)

हेतौ प्रथमा ॥

अस्तिप्रयोजनमेतदिति (भा)

काका सूचितमनुग्रयं पृच्छति

किं तर्हीति । (भा)

किं तर्हीति प्रश्ने ॥

इति । (भा)

इदं वक्तव्यमित्यर्थः ॥ तदाह

भेदकत्वादि- (कै)

त्यादि ॥

---

१ अत्वजातेः । इ ॥

२ निमित्तकारणहेतुषु सर्वासां प्रायोदर्शनम् । इति वार्त्तिकेन ॥

जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इद-मुदाहरणं स्यादत आह

उदकत्वेति॥ (कै)

[1]आत्मशब्दो द्रव्यवाची भाष्ये।

[2]बालो युवेति (भा)

भाष्ये

स्वामाख्यां न जहाती- (भा)

त्यनुकर्षः। एतेनाभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम्॥ ननु गुणेषू-भयाङ्गीकारे खण्डिकोपाध्यायचपेटादानं विरुध्येतेति चेन्न। यत उभयमिति लोकमात्रविषयमिति न विरोध इत्याह

आम्नायेति॥ (कै)

ननूभयोरपि न्याय्यत्वप्रतिपादनेन

किं पुनरत्र न्याय्यमिति (भा)

प्रश्नोऽयुक्तोऽत आह

शास्त्रे इति॥ (कै)

अत्रेति। (भा)

निर्धारणसप्तमी नेति भावः॥

---

१ "एकोऽयमात्मा उदकं नाम" इत्यादिना॥
२ भाष्ये वाचो युवेति। क॥

[१]इत्येव न्याय्यमिति। (भा)

विधेयाण् भिन्नविषय इति शेषः॥ तच्चैतत्क्तस्यापि अप्रत्यय इति निषेधात्। अतस्तथैव ज्ञापकमुपन्यस्यति

यदयमिति॥ (भा)

प्रयत्नम्। (कै)

स्वशब्देनोपादानरूपम्॥

कथमिति। (कै)

यथा वध्यादेशे उदात्तनिपातनेन

[२]एकाच (पा)

इति सूत्रस्थमेकाच् ग्रहणं न कार्यमिति॥

यः स्वरः प्राप्त इति। (कै)

हन्तेरनुदात्तत्वादनुदात्त इत्यर्थः॥ न चैवमस्त्यादीनामाद्युदात्तत्वेनादेशानङः स्थान्यनुरूपेऽनुदात्त उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थमुदात्तग्रहणमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावादित्याशयात्॥ नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतस्र इत्यत्र

[३]चतुरः शसी- (पा)

त्यस्याप्रवृत्तिरिति भाष्योक्तमनुपपन्नम्। चतुः शब्दस्य

---

१ इत्येवं न्याय्यमिति। क॥ २ अ ७। पा २। सू १०॥

३ चतुरः शसि। अ ६। पा १। सू १६७ अन्तोदात्तविधायकमिदम्॥

[1]न्नः संख्यायाः (भा)

इत्याद्युदात्ततया तत्स्थानिक चतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या

चतुरः शसी- (भा)

त्येतद्बाधकत्वायोगादत आह

अन्ये त्विति ॥ (कै)

एकश्रुतिश्च

[2]विभाषा च्छन्दसीति (भा)

वैकल्पिकी । तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । वैस्वर्येण पाठमभिप्रेत्य प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः ।

अन्येतु (कै)

इत्यत्रपिबीजन्तु निपातनं नामान्याद्रूप्ये प्रयोगे प्राप्तेऽन्याद्रूप्यप्रयोगकरणम् । तद्रूपा[3]यत्नात्तत्रचोदात्तादिविवक्षा ।

[4]तिसृचतसृ (भा)

इत्यत्रापि [5]द्वन्द्वप्रयुक्तान्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं

---

१ न्नः संख्यायाः । आद्युदात्तार्थमिदं फिट् सूत्रम् । पा २ । सू ५ ॥

२ विभाषा छन्दसि । अ १ पा २ । सू ३६ ॥ एकश्रुतिविधायकमिदम् ॥

३ यत्नात् तत्रोदात्तादिविवक्षा । क ॥

४ त्रिचतुरोः स्त्रियां तिसृचतसृ । अ ७ । पा २ । सू ९९ ॥

५ द्वन्द्वप्रयुक्तेऽन्तोदात्ते । क । ख । ड ॥

विवक्षार्थम्। सम्पूर्णाष्टाध्यायी आचार्यैरेकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्क्वचित्पदस्यैकश्रुत्या पाठो यथा

[1]दाण्डिनायनादि- (पा)

सूत्रे ऐक्ष्वाकेति [2]एतावदेव भाष्याल्लभ्यते। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः॥

स्वरितादेरिति। (भा)

भाष्ये उपलक्षणम्। उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम्॥

आश्रीयमाण इति। (भा)

शब्देन निपातनेन वाऽऽश्रीयमाण इत्यर्थः। नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह

अजिति॥ (कै)

ऐजर्थन्तपरत्वमित्याह

इदं तर्हीति (भा)

भाष्ये। चतुर्मात्रोऽपि प्लुतः

[3]प्लुतावैच (पा)

इति सूत्रे भाष्ये स्पष्टः॥ कार्यकालमाश्रित्य नोदयति।

---

१ अ ६। पा ४। सू १७४॥

२ एतदेव च भाष्याल्लभ्यते। क॥

३ प्लुतावैच इदुतौ। अ ८। पा २। सू १०६॥

नन्विति। (भा)

अयं भावः। तत्पक्षे

[1]मृजेर्वृद्धिरि- (पा)

त्यादौ उपस्थितं

वृद्धिरादैजिति (पा)

पदैकवाक्यतयान्वेति। एकं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव। एवं च भाष्यमानत्वं स्पष्टमेवेति। उत्तरस्य त्वयं भावः। [2]अनुवादकल्पनापेक्षया [3]तत्रोपस्थितं

वृद्धिरादैजिति (पा)

तत्रैव प्रक्रियाग्रहं सम्पाद्य वाक्यभेदेन

मृजेर्वृद्धिरित्य- (पा)

स्यार्थं बोधयति॥ "ज्योतिष्टोमेन यजेते"त्यादौ तु प्रक्रियाग्राहकशास्त्रान्तराभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः कल्प्यते। न तु विद्यमाने प्रक्रियाग्राहके तथा कल्पनमुचितं पदस्यानु[4]वादत्वकल्पनं चेति॥ यत्तु कार्यकालपक्षे वृद्धिरादैज्

---

१ अ ७। पा २। सू ११४॥

२ अनुवादत्वकल्पनापेक्षया। क। ख। ग। ङ॥

३ यत्रोपस्थितम्। क॥

४ अनुवादकत्वकल्पनम्। क। ङ॥ 'पदस्यानुवादत्वकल्पनं चेति' इति ख पुस्तके नास्ति॥

**वृद्धिरादैजि-** (पा)

इत्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः॥ यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि "मृजेर्वृद्धिरि"त्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः। उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात् परं संज्ञासूत्रत्वावगतिरिति[1]। तन्न।

**[2]कार्यकालं संज्ञापरिभाषं**

**भस्येत्युपस्थितमिदं भवति।**

**[3]यचिभमि-** (पा)

तीति।

**[4]ष्यङः संप्रसारणमिति** (पा)

[5]सूत्रस्य भाष्येण

**कार्य्यकालं संज्ञापरिभाषं**

**प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति॥**

**[6]ईदूदेद् द्विवचनं प्रगृह्यमिति[7]** (पा)

---

१ संज्ञासूत्रत्वावगतिरिति चेन्न। क॥

२ स्पष्टाचेयं परिभाषेन्दुशेखरे॥

३ अ १। पा ४। सू १८॥

४ अ ६। पा १। सू १३॥

५ सूत्र भाष्येण। क॥

६ अ १। पा १। सू ११॥ ७ ईदूदेदितिसूत्रस्य –। सम्॥

[1]अदसो मादिति (पा)

सूत्रस्थभाष्येण च विरोधात्। तद्रीत्या ह्युपस्थितमिदं भवति [2]अचीतीत्येव वक्तव्यं स्यात्॥ [3]"अथ संज्ञे"त्यादिप्रकृतसूत्रस्थवार्त्तिकविरोधश्च। प्रकारान्तरेणाचत्य तत्प्रत्याख्यानपरभाष्यविरोधश्च। किञ्च

मृजेर्वृद्धिरि- (पा)

त्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसम्पत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावात् "तन्त्रेकपरिभाषा"नुपस्थित्यापत्तिः। वृद्धिपदेनाविधानात्। "मृजेर्वृद्धिरि"त्यादौ इक्पदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वात् विधिविषये एव तत्प्रवृत्तेश्च भवत्येवान्वयः। [4]एवं च ज्योतिष्टोमवाक्यादेस्तत्चणेनाच नामधेयता दुरुपपादा। किं चोपस्थाप्यार्थस्य वृत्त्या बोधनात् संज्ञासूत्रत्वं वा "इकोगुणे"त्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः। वृद्ध्यादिपदैर्वृत्त्या बोधनञ्च दुरुपपादम्। अनुवादेऽपि संज्ञासूत्रोपस्थितिः

[5]अणोऽप्रगृह्यस्य (पा)

---

१ अ १ । पा १ । सू १२ ॥ अदसो मादिति नास्ति । सम् ॥

२ पश्यतीत्येव । क ॥

३ भाष्ये उक्तमनेव ॥

४ एवं ज्योतिष्टोमवाक्यात् । क ॥

५ अ ८ । पा ४ । सू ५७ ॥

[1]वृद्धिर्यस्ये- (भा)

त्यादिविषये भाष्ये स्पष्टेति दिक्। भाष्ये

किं तकार इति। (भा)

अस्य तादपि परस्तपर इत्यनङ्गीकुर्वत इति शेषः॥

सम्बन्धाभावादिति। (कै)

शेषशेषिभावाभावादित्यर्थः॥ तान्तस्य पदत्वाभावे अप्त्वं न स्यादिति भावः। आनुषङ्गिकं फलं दर्शयति

ज्ञापकद्वारेणेति॥ (कै)

---

१ अ १। पा १। सू ७३॥

# इको गुणवृद्धी।१।१।३॥



गुणवृद्धिग्रहणोत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि इक् पदस्थेकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषयकोऽयं प्रश्नो भाष्ये

इग्ग्रहणमिति॥ (भा)

ननु इग् ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्त्तुमत आह

स्थानित्वस्येति॥ (कै)

ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च अकारोदाहरणादाने किं बीजमत आह

आकारस्येति॥ (कै)

वृद्धिविधौ। (कै)

सिचि वृद्धिविधौ अयासीदित्यादौ। अपवादत्वात् सगिड्भ्यां सा बाध्यते इति भावः॥ इतरवृद्धिविधौ सम्भवेऽप्याह

विशेषाभावादिति॥ (कै)

अकारस्येति। (कै)

[१]एयल्लोपाविति (वा)

पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणबाधकत्वादिति भावः। पुत्रीयतीत्यादौ त्वविशेष इति बोध्यम्॥

आकारस्य गुणः। (भा)

[२]सार्वधातुकार्द्धधातुकयो- (भा)

रित्यनेन॥ नन्वैकारोच्चारणसामर्थ्याद् गुणो नेत्यत आह

एचामिति। (कै)

सर्वेषां विवृत एव प्रयत्न इत्यभिमानः॥

आर्द्धधातुकोपदेश इति। (कै)

गुणनिष्पन्नस्य तदुत्तरकालिक इति भावः॥

[३]प्रतिपत्ति लाघवम्। (कै)

प्रक्रियालाघवम्।

"तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च"

इति पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम्।

इग् ग्रहणेति। (कै)

ततश्च

---

१ "एयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन"। अतो लोपः (अ ६। पा ४। सू ४८) इति सूत्रस्यवार्त्तिकम्॥

२ अ ७। पा ३। सू ८४॥

३ प्रतिपत्तिलाघवार्थमित्यस्ति॥

[1]मिदेरिति (पा)

नावयवषष्ठी किन्तु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः। भाष्ये

नैतानि सन्ति ज्ञापकानीति । (भा)

कचिन्न्यायेन। "ननु नैतानि सन्ति ज्ञापकानि" इति प्रतिज्ञायां ज्ञापकसमर्थनमयुक्तमत आह

विशेषेति ॥ (कै)

टकः कित्त्वं ज्ञापकं यं विधिं प्रतीत्यादिविशेषप्रतिपादनायेत्यर्थः ॥ शङ्कते

केचिदिति ॥ (कै)

यद्प्युच्यते इति । (कै)

समुच्चयार्थापिशब्देनेतिशेषः ॥

आर्थेन । (कै)

सामर्थ्यप्राप्तेन । [2]भङ्गस्य भङ्गसदृश इति भावः ॥

[3]ग्लायत इत्यादीति । (कै)

आदिना अग्लावित्यादि ॥ नन्वेवमात्त्वमपि बाध्येत नहि तस्यैकारो निमित्तं ग्ले इति पाठेऽपि सुकरत्वाद् अत आह

१ अ ७। पा ३। सू ८२॥

२ भङ्गस्य भङ्गः सदृश इति भावः। क। ग। ङ॥

३ ग्लायत इति। ङ। ख। ग॥

[1]न ध्याख्येति । (कै)

[2]ध्या इति कृतात्वनिर्देशेनैकारोच्चारणस्यात्वाबाधकत्वज्ञापना-दिति भावः ॥ न चास्य सौत्रत्वम् । बाधकत्वमङ्गीकृत्य सौत्रत्वकल्प-नापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः ॥ न च शब्दादिभ्य आचारक्विपि रायतीत्यादौ संध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विभाव एतद् [3]भाष्यप्रामाण्यादित्यदोषात् ॥

गुणवदिति । (कै)

वैधर्म्ये दृष्टान्तः ॥ ननु पररूपेऽपि गुणानामभेदकतया कदा-चित्सानुनासिकोऽपि स्यादत आह

रूपग्रहणस्येति ॥ (कै)

परे तु अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम् । स्थाने जायमानः किं गुणक इत्याकाङ्क्षा-यामन्तरतमपरिभाषयोभयगुणकः । प्रकृते चोभयान्तरतमासम्भवात् परशब्देन यद्गुणकस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्या-शयाद्रूपग्रहणस्येत्यादि चिन्त्यम् । गुणानां शब्दत्वादिवत् शब्दरूप-त्वाभावेन व्यावृत्त्यसम्भवस्य रूपग्रहणेनेत्याहुः ॥

ननु

गमेरप्ययं ड इति (भा)

भाष्यमनुपपन्नं गमो गमस्य

---

१ न ध्याख्ये इति । क ॥ २ "ध्या इति" इति नास्ति । क ॥
३ भाष्यकारप्रामाण्यात् । क ॥

[1]अन्तात्यन्ताध्वदूरपारेति (पा)

सूत्रे पठितेन

[2]अन्यत्रापि दृश्यत इति (वा)

वार्त्तिकेन नगोऽग इत्यादौ डस्य सत्त्वादत आह

सप्तम्यामिति। (कै)

[3]सप्तम्यां जनेरि- (पा)

त्युत्तरं पठिते

[4]अन्येष्वपि दृश्यते (पा)

इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन[5] तेनैव प्रकृत्यन्तरादपि डे सिद्धे "अन्तात्यन्तेति" प्रकरणस्थं वार्त्तिकं न कार्यमिति भावः॥ भाष्ये

आन्तर्यत ओकार इति। (भा)

स्थानत आन्तर्यादिति भावः॥ ननु

[6]तनोतेर्डउः सन्वच्चेति

डित्करणात्

---

१ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। अ ३। पा २। सू ४८॥

२ अन्यत्रापि दृश्यत इति वक्तव्यम्। वा॥

३ अ ३। पा २। सू ९७॥

४ अ ३। पा २। सू १०१॥

५ व्यभिचारार्थत्वेनैव। क॥

६ "तनोतेर्डउः सन्वच्च"। सू ७१०॥ उणादिसूत्रम्॥

[1]न व्यञ्जनस्य गुण (भा)

इति चेन्न॥ उणादिनामव्युत्पत्तिपक्षाङ्गीकारात्॥ न चैवमपि स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि व्यञ्जने न [2]प्रवर्त्तन्ते इति वाच्यम्। ईशादौ यकारे तथाप्यति-प्रसङ्गात्। सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः॥ [3]"स्थानेऽन्तर-तमे" इति सप्तम्यन्तपाठस्य भाष्ये [4]प्रत्याख्यानेनास्या युक्तेरसम्भव-[5]दुक्तिकत्वाच्च॥ भाष्ये

एतेऽपीति॥ (भा)

औकारादयः। एषु उदाहरणेष्विकः

प्राप्नुवन्ती- (भा)

त्यन्वयः॥

स (भा)

इत्यत्र तु न स्यादेवेति भावः॥

[6]त्यदादीनाम (भा)

इत्यत्र "त्यदादीनामि"ति तु

---

१ एतत् सूत्रस्यभाष्यम्॥

२ प्रवर्त्तते। क॥

३ "स्थानेऽन्तरतम" इति सूत्रे। अ १। पा १। सू ५०॥

४ प्रत्याख्यातत्वेनास्याः। क॥

५ उक्तित्वाच्च। ख॥

६ अ ७। पा २। सू १०२

[1]तदोः सः सावि- (पा)

त्युत्तरार्थं स्यात् । संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम् ॥

आश्रितेति । (कै)

आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदैचु विधीयमानेषु तदर्थमित्यर्थः ॥

तेनेति । (कै)

इत्येवमित्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादीदृशार्थलाभ इति भावः ॥ अत एव सम्बन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धी इत्युच्चार्य

गुणवृद्धिग्रहणमनुवर्त्तते (भा)

इत्युक्तम् । उपक्रमस्थगुणवृद्धिग्रहणसामर्थ्यादित्येतद्भाष्यस्वारस्यादाह

अथवेति । (कै)

पुनरुपादानसामर्थ्यादित्थं [2]गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमिति भावः ॥

यादृश इति ॥ (कै)

स्वरूपपदार्थक इत्यर्थः ॥ नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्त्त-

१ अ ७ । पा २ । सू १०६ ॥

२ इह गुणवृद्धि - - । क ॥ इहत्य गुणवृद्धिग्रहणम् । ख ॥

मानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेन्न। "आगन्तूनामन्ते निवेश" इति न्यायेन

[1]अदेङ् (पा)

सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य। उत्तरत्र तु योग्यतयाऽर्थपरत्वम्।

[2]इक इति (पा)

सूत्रेऽपि

न धात्वि- (पा)

त्यादिसाहचर्येणार्थपरत्वम्। 'इक इति' षष्ठीनिर्देशाच्चेति भाष्याशयात्॥

नपुंसकस्येति॥ (कै)

[3]"घञजपः पुंसीति" तु प्रायिकमिति भावः। यत्तु भावविषयमेवैतदिति। तन्न। मांसं भक्ष्योऽस्येति

[4]कर्मण्यणिति (पा)

सूत्रस्थभाष्यप्रयोगविरोधात्॥

तेनेति। (कै)

अचादैजित्यनुवृत्तिर्न स्वकार्याय किं तु वृद्धिशब्दस्यान्यसम्बन्धनिवृत्तये इति भावः॥ भाष्ये

---

१ अ १। पा १। सू २॥ २ अ १। पा १। सू ३॥
३ घञजपाःपुंसि। इ। क॥ ४ अ ३। पा २। सू १॥

[1]वृद्धिरादैज् अदेङ्गुणः[2] (भा)

इति सूत्रक्रमनिर्देशः । पुनर्वृद्धिरादैजित्यभिधानमदेङ् इत्यत्र सम्बन्धानुवृत्तिं दर्शयितुम् । "इको गुणवृद्धी" इत्युक्तिस्तु यथान्यासाभिप्रायेण ॥

[3]आदैजदेङ्ग्रहणमिति । (भा)

स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः । क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येवपाठः ॥ ननु मण्डूकस्य चेतनत्वात्तथा गतिसम्भवेऽपि शब्दस्य कथं सेत्यत आह

वृद्धिशब्दस्येति ॥ (कै)

स्वरितत्वासङ्गाद् अनुवर्त्तमानस्यापीति शेषः ॥

इहेति । (कै)

इक इति (कै)

सूत्रे इत्यर्थः ॥ "अदेङि"त्यत्र तु न सम्बन्धः । गुणसंज्ञासम्बन्धेनादेङो निराकाङ्क्षत्वादिति बोध्यम् ॥ नन्वेकयोगत्वं नैकार्थत्वं भिन्नविषयसंज्ञाद्वयविधानात् । नापि निरन्तरपाठः । तस्येदानीमपि सत्त्वेन करिष्यत इत्यस्यासङ्गतेः ।

---

१ अ १ । पा १ । सू १ ॥
२ अ १ । पा १ । सू २ ॥
३ आदैज् ग्रहणमिति । ख ॥

[१]गोरणावि- (पा)

त्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाचात आह

एक इति ॥ (कै)

प्रतिपत्तिकाले । (कै)

लक्ष्यसंस्कारकवाक्योपप्लवकाले ॥

एककालेति । (कै)

आदैज्वृद्धिसंज्ञोऽदेङ्गुणसंज्ञो भवतीति सङ्ग्राहकवाक्यार्थबोध एककाल इति भावः ॥ समूहालम्बनात्मक एकवाक्यार्थबोध इति तात्पर्यम् । यद्वादैज् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञश्चभवत इत्येको वाक्यार्थबोध इति तात्पर्यम्[२] ।

[३]गोरणावि- (पा)

त्यादौ अवान्तरवाक्यार्थभेदान्नदोषः ॥ केचित्तु एककाला प्रतिपत्तिर्भवतु तावतापि स्वरितत्वगुणप्राप्तवृद्धिपदसंबन्धाभावः कुत इति चिन्त्यम् । न च स्वविषयवाक्यजबोधानन्तरं निराकाङ्क्षत्वान्यत्रान्वयाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गो नह्येतदेकयोग इति वाच्यम् । व्यवधाननिबन्धनायामनेकसम्बन्धाप्राप्तावनेकसम्बन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् । तस्मादयमत्र भाष्यार्थः

१ गोरणौ यत्कर्म णौ चेत् सकर्तानाध्याने ॥ अ १ । पा ३ । सू ६७ ॥

२ प्रतिपत्तिः वाक्यार्थबोधः । इत्यधिकम् ॥ क ॥ ख । ङ ॥

३ अ १ । पा ३ । सू ६७ ॥

[1]तदधीते तद्वेदे- (पा)

त्यत्र द्वित्वद्ग्रहणादेकयोगेऽनुवृत्त्यभाव इति । स्पष्टं चेदं

[2]तदस्मिन्नस्तीति (पा)

सूत्रे भाष्ये ॥ एकयोगत्वं च द्वयोः संहिता पाठ एव । वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति ।

[3]तदस्यास्त्यस्मिन्निति (पा)

सूत्रे द्वित्वद् ग्रहणाभावात् ।

तदधीत (पा)

इति सूत्रे तु बालानां सुखबोधाय द्वित्वद्ग्रहणमित्यप्युक्तं[4] तत्रैवातोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥ ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाभावात् कथमुत्सर्गापवादसाम्यमत आह

यथेति । (कै)

आत इत्युपादानादेव तद्विषये कस्यासन्दिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहः । तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च । ननु गुणसंज्ञया वृद्धिसंज्ञावत्तत्यादिसंज्ञयापि प्रत्ययसंज्ञा बाध्येतेत्यत आह

---

१ अ ४ । पा २ । सू ५९ ॥

२ तदस्मिन्नस्तीति देशे तन्नाम्नि । अ ४ । पा २ । सू ६७ ॥

३ तदस्यास्त्यस्मिन्निति मतुप् । अ ५ । पा २ । सू ९४ ॥

४ इत्युक्तम् । क ॥

## प्रत्ययेति ॥ (कै)

न तथाद्याकाङ्क्षया [1]प्रत्ययसंज्ञायाः सम्बन्धो येन सन्निहित-कृत्यादिसंज्ञया निराकाङ्क्षत्वात्प्रत्ययसंज्ञया[2] सम्बन्धः स्यात्। किन्तु संज्ञाकाङ्क्षया। सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तर-विषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते। बहुविषयत्वं चास्याः संज्ञिविशेषासम्बन्धेनाधिकारकरणाद्वसीयत इति भावः॥ प्रकृते तु न तथेति बोध्यम्॥

## स्वञोऽप्राप्ताविति। (कै)

यता सुक्ते इति[3] शेषः। मण्डूकगतयोऽधिकारा इत्यस्यैव स्वरित-लिङ्गेनानुवर्त्तमानं यत्राकाङ्क्षा तत्रैव सम्बध्यते इति विशेषमभि-धातुमयं पक्षः॥ स च सम्बन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः॥ अस्य विशेषस्य प्रागकथनं तु एतद्वि-शेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम्।

## इह त्विति॥ (कै)

अकर्त्तव्यत्वविशिष्टं पुनर्गुणवृद्धिग्रहणं यत्र इत्यर्थः॥ अनुवृत्तौ हि तदकर्त्तव्यं भवतीत्याहुः॥ भाष्ये

---

१ प्रत्ययसंज्ञया। क। ङ॥ २ प्रत्ययसंज्ञा॥ क॥
३ विशेषः। ख॥

उभयं निवृत्तमिति । (भा)

स्वरितत्वज्ञानाभावेनाननुवृत्तिरेव निवृत्तिरित्यर्थः ॥

अपेक्ष्येति । (कै)

इक इत्येतावन्मात्रस्येतराकाङ्क्षत्वात्समुदायापेक्षायां च लक्ष्यानुसार एव बीजम् । "अनन्तरस्येति" न्यायेन गुणस्यैवापेक्षा युक्तेत्यत्राप्तीत्यन्वयः ॥ समुदायत्वं च युगपद्बुद्धौ सन्निधानात् क्रमेणासन्निधानाच्चेति बोध्यम् ॥

षष्ठीति । (कै)

स्थानषष्ठीत्यर्थः ।

[1]षष्ठी स्थान इति (पा)

परिभाषया तत्त्वनिर्णयः । अस्य च सूत्रस्य गुणवृद्धिशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या ।

गुणश्रुत्ये- (कै)

त्यस्य गुणशब्देन विधेयत्वबोधिकयेत्यर्थः ॥

तच्च यदीति । (कै)

बुद्धेः क्रमिकत्वादिशेषणविशेष्यभावे कामचाराच्चेति भावः ॥

---

१ षष्ठी स्थानेयोगा । अ १ । पा १ । सू ४९ ॥

## [1]सोऽस्येति। (कै)

इगन्तस्येति षष्ठ्याः तेनान्वयेऽस्य[2]नुपसंहारादेतद्विशेषणत्वमेतत्परिच्छेदकत्वं तस्येति भावः॥

## तदा तस्यायं विशेषणत्वादिति। (कै)

तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः॥ भाष्ये

## इको गुणवृद्धीति (भा)

पूर्वपरान्वयि तेनैतद्द्वयलाभ इति भावः॥ परिच्छेद्यपरिच्छेदकभावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम्॥

## अथ त्विति। (कै)

अवान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसम्भावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ

## [3]मिदेरि- (पा)

त्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्राप्यवयवषष्ठीत्वनिर्णये तदसम्बन्ध इति भावः॥

## बाधायोगादिति। (कै)

आत्यन्तिकबाधायोगादित्यर्थः॥ पाक्षिकस्तु बाधः "षोडशी"-ग्रहणादौ भवत्येवेति बोध्यम्॥

---

१ सोऽस्येत्यारभ्य इति भाव इत्यन्तं नास्ति ख पुस्तके॥

२ अत्युपसंहारात्। क॥

३ मिदेर्गुणः। अ ७। पा ३। सू ८२॥

समुच्चय इति । (कै)

[1]भिदेरन्यस्यैकस्येत्येवमाकारः ॥

नहीति । (कै)

प्रत्यर्थं शब्दनिवेशेनैकस्य [2]नानेकाभिधायकत्वम् । तस्मै आवृत्तौ च न मानमिति भावः ॥

अनेकयोगेति । (कै)

एवं च

एकं वाक्यमिति (भा)

भाष्यमयुक्तमिति भावः ॥ उत्तरम् ।

एकस्मिन्नित्यादि ॥ (कै)

[3]अङ्गाङ्गिभावस्य न गुणगुणि भाव इत्याह

विशेषणेति ॥ (कै)

इकः स्थानित्वादिति । (कै)

भाव न

[4]अलोऽन्त्य- (पा)

सूत्रप्रवृत्तौ निमित्तम् । अल्समुदायोत्तरस्थानषष्ठीत्वाभावात् ।

---

१ भिदेरन्तस्यैक इत्येवमाकारः । ख ॥

२ नानेकाभिधायकत्वम् । क ॥

३ अङ्गाङ्गिभावे न गुणगुणिभाव इत्याह । इ । अङ्गाङ्गिभावस्य गुण-गुणिभाव इत्याह । क । ख ॥

४ अलोऽन्त्यस्य । अ १ । पा १ । सू ५२ ॥

अङ्गस्येति (कै)

च न स्थानषष्ठीति भावः॥

तद्विशेषणत्वादिति। (कै)

अवयवित्वेन विशेषणत्वादित्यर्थः॥

नानावाक्यत्वमिति। (कै)

अत्र पक्षे

[1]पुगन्ते- (भा)

त्यादि नियमार्थमिति बोध्यम्॥

मिदादीनामिति। (कै)

गुणादिविधौ परिभाषाद्वयस्य परस्परसम्बन्धापरित्यागेनोपस्थानात्केवलं तत्रैकस्या असम्भवे द्वितीयापि न प्रवर्त्तते इति भावः॥ भाष्ये

[2]अनन्त्यत्वादिति। (भा)

तत्पक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः॥

अङ्गस्येति च स्थानषष्ठीति। (भा)

अङ्गस्य स्थाने गुणो भवति स च यथान्य इक् तथान्यस्येक इत्यर्थ इत्यभिमानः। तदाह

---

१ पुगन्तलघूपधस्य च। अ ७। पा ३। सू ८६॥
२ अनन्त्यत्वाद्धीति। क। ख। ग। ङ॥

भेदेनेति। (कै)

शास्त्रस्य बहुविषयत्वायेत्यर्थः॥

तत्रेगन्तेष्वेवेति। (कै)

तच्छेषत्वादिति भावः॥

अन्यच। (कै)

अनिगन्तविषये गुणशास्त्रे॥

अन्त्यमलमिति। (कै)

इक्परिभाषाशेषभूतत्वादोऽन्त्यपरिभाषयेत्यर्थः॥

अङ्गस्येत्यपि स्थानषष्ठीति (भा)

भाष्ये

अन्त्यमिकमुपसंक्रान्ते- (भा)

त्यनुकर्षः। एवं च सङ्ग्राहकवाक्यस्येगन्तमात्रविषयत्वादनिगन्तविषय-कलक्षणाभाव एव। आवृत्तौ च न मानमितिभावः। अत एव

[1]गापोष्टकः (भा)

कित्त्वं सार्थकम्॥

हिश्च (भा)

हेत्यर्थ इत्याह

---

१ अ ३। पा २। सू ८॥

मिदादिष्विति ॥ (कै)

अनन्त्यस्य चेक इति। (कै)

यद्यपि "जुसि च"[1] इत्यादीनां प्रधानभूतेष्विग्विशेषणत्वे

तस्मिन्निति[2] (भा)

परिभाषया व्यवस्थितस्येको न भविष्यति तथापि प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया[3]

जुसि चे- (भा)

त्यादिभिरप्यङ्गमेव विशेष्यते इत्यभिप्रायः ॥

समानन्यायेति। (कै)

गुणप्रकरणावैरूप्याय सर्वत्राङ्गस्येत्यवयवषष्ठ्येव स्यादितिभावः ॥

निर्दिष्टेति। (कै)

अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः ॥

अन्ये त्विति। (कै)

अयमभावः। "नह्यनियम" इति श्रुतिः स्मृतिर्वा किन्तु परिभाषा लिङ्गवती फलवती चेति नियमः ॥ फलं चेतरव्यावृत्तिवदितरसङ्ग्रहोऽपीति ह्रस्वस्येत्यस्याङ्गविशेषणत्वव्यावर्त्तनेनावयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात्। अकारे तु गुणागुणयोर्न विशेष इति। तदेतद्वक्ष्यति

---

१ अ ७। पा ३। सू ८३॥ २ अ १। पा १। सू ६६॥

३ उपस्थिताकाङ्क्षतया। क॥

## अनन्त्यस्याप्युकारस्येति॥ (कै)

नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह

## दीर्घस्येति। (कै)

घिसंज्ञावर्णयोरेवेति पक्षे ङिति गुणस्याग्निचिते[1] इत्यादौ प्रसङ्गो बोध्यः॥

## पुनः श्रुतिः। (कै)

पुनर्गुणविधानम्॥

## ननु चेति। (कै)

बहुव्रीहिः समासः सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः॥ "भिदो" इकारोच्चारणं तु [2]भिन्नो भित्तमित्यादौ चरितार्थम्॥ "क्नोः" कित्त्वेनानिग् लक्षणत्वेऽपि निषेधप्रवृत्तेः। पुग्विधानमपि "ह्मापयती"त्यादौ यलोपार्थम्। ओकाररूपगुणार्थं च चरितार्थमित्याशयः॥

## पुकीति। (कै)

लाघवात्तत्पुरुषे निर्णीते "निषादस्थपति" न्यायेन नियमार्थत्वस्य दोषावहमित्यर्थः। ननु पुगन्तग्रहणं दापयतीत्यादौ अनन्त्यस्यानिकोऽपि गुणार्थं स्यादिति कथं [3]नियमार्थत्वमिति चेन्न। गुणे उपधावृद्धा विशेषाभावात्॥

---

१ अग्निचितेत्यादौ। ख॥ २ भिन्नोभिन्नम्। क॥
३ नियमार्थमिति चेन्न। क॥

प्रकृतस्यैवेति। (कै)

अनन्तरस्यैवेत्यर्थः॥ न "अनन्तरस्ये"ति न्यायविरुद्धोऽयं नियम इत्यत आह

अनन्तरस्येति। (कै)

व्याख्यानुसारस्यानाश्रयणे बीजं बोध्यम्। अभ्युपेत्यवादः क्लेशे-नाङ्गीकार इत्याहुः॥

पिचव्येति। (कै)

[1]उगवादिभ्यो यत्। (पा)

उवर्णान्तस्याङ्गस्येको गुण इति व्याख्यानमभिप्रेत्याच दोषोपन्यासः। परन्तु[2] "औश्रुत इत्यत्रापि प्राप्नोतीति" भाष्यानतुगुणा सा व्याख्येति चिन्त्योऽयं कैयट इत्याहुः। क्वचित्तु कैयटपुस्तके "पिचव्य" इति न दृश्यत एव॥

तच्छेष (भा)

इति शब्दोऽसम्भवदुक्तिकलशस्तोऽपीत्याह

परस्परेति। (कै)

विशेषणविशेष्यभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः॥ अत एवाग्रे एतत्पचोक्तदूषणोद्धारेऽपि नायं तच्छेष इत्युक्तिः सङ्गच्छते॥

---

१ अ ५। पा १। सू २॥ २ उक्तं भाष्ये॥

सन्निपात इति। (कै)

जायमानोऽपि सन्निपातः सावकाशत्वेन विप्रतिषेधोपयोग्येव न तच्छेषत्वोपयोगी। अत एव नापवादत्वमप्युक्तदोषाच्चेति भावः॥

असम्बद्धमनयेति (भा)

भाष्यस्य शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः॥

नियमादिति। (भा)

अलोऽन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञानियम इति॥

तेनैव तस्यायुक्त इति। (भा)

स्वाङ्गेन स्वस्येत्यर्थः॥ शेषशेषिणोरभेदस्थला तेनैवेत्याद्युक्तम्॥ नन्व-ङ्गस्येति स्थानषष्ठीदर्शना"त्सार्वधातुके"त्यादा[१]वलोऽन्त्यपरिभाषाप्रवृ-त्त्या कथमिक्परिभाषायास्तचनमित्यवकाशोऽत आह

[२]अलोऽन्त्येति। (भा)

अङ्गेनेको विशेषणेन पुगन्तेत्यादिनियमेन च तत्प्रयोजनसिद्धि-रिति भावः॥

अचाहुरिति। (कै)

अथवा विशेषिताङ्गेनेको विशेषणसम्भवात्। प्रापयति गावावि-त्यादि लेष न जानातीति भावः॥

---

१ इत्यादावप्यलोऽन्त्यपरिभाषाप्रवृत्त्या। क। ख। ङ॥

२ अ १। पा १। सू ५२॥

**दृष्टेति।** (कै)

दृष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमितिभावः॥

**न तु कार्येति।** (कै)

द्वयोरप्येकदेशस्थत्वेन परत्वासम्भवादितिभावः॥ वस्तुतः कार्य-कालपक्षेऽपि पाणिन्युच्चारणरूपपाठकृतपरत्वमस्त्येव। अन्यथैकत्र प्रयोगरूपदेशे [1]सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात्। प्रयोग-साधनफलकान्येव शास्त्राणि। नचैवं कार्य्यकालपक्षमादाय त्रिपाद्या-मेषां प्रवृत्तिः। यथोद्देशेतु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेना-प्रवृत्तिरेव स्यादिति भाष्याद्युक्तं विरुध्येतेति वाच्यम्। परिभाषायाः सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्येण स्वार्थं तदाकर्षणसम्भवादित्यष्टमे उपपादयिष्यमाणत्वात्। ध्वनितं चेदं

**[2]तस्मिन्नितिनिर्दिष्टे** (पा)

इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत्॥

ननु

**द्विकार्ययोग** (भा)

इत्यस्य द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः। उत द्वयोः परस्परेण योग इत्यर्थः। उभयथापि [3]त्रिपदतत्पुरुषो दुर्लभः। कर्मधारय-पूर्वपदकोऽपि न

---

१ सर्वेषां मिलनेन। क। इ॥ २ अ १। पा १। सू ६६॥
३ त्रिपदस्तत्पुरुषः। ख॥

[1]दिक् संख्ये (पा)

इति नियमेन तस्य दुर्लभत्वादत आह

**द्वाभ्यामित्यादि ।** (कै)

अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह

**विप्रतिषेधेति ॥** (कै)

द्विकार्ययोगेऽप्यसम्भवसत्त्वादाह

**केवलोऽपीति ॥** (कै)

ननु आ ए इति ए आ इति वादेशसम्भवोऽस्त्येवेत्यत आह

**न चेति ॥** (कै)

**द्वयोरिति ।** (कै)

कार्ययोरित्यर्थः ॥ अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्वं [2]साध्वित्यर्थ इति भावः ॥

[3]**आद्गुण** (पा)

इत्यादौ द्वयोः स्थानिनोरेकादेशस्य सम्भवादाह

[4]**मिदेरिति ॥** (पा)

**न चास्ति सम्भवो युगपदिति ।** (कै)

युगपद्वाक्यार्थद्वयबोधाभावादिति भावः ॥ ननूक्तरीत्याप्रयोजनाभावाद्

---

१ दिक्संख्ये संज्ञायाम् । अ २ । पा १ । सू ५० ॥
२ साधुरित्यर्थः । क । ख । ङ ॥ ३ अ ६ । पा १ । सू ८७ ॥
४ अ ७ । पा ३ । सू ८२ ॥

[1]अलोऽन्त्यस्य (पा)

अप्रवृत्तौ अत्रापि नियमः प्राप्नोतीत्यसङ्गतमत आह

यदीदमिति। (कै)

एतदभावे "सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्" सर्वस्याङ्गस्येति स्थान षष्ठ्येव इति तस्मिन्नवयवषष्ठी सेति भावः॥

अथापि कथञ्चिदिति (भा)

भाष्यस्योक्त एवाशयः॥

क्रोष्ट्रीयमतम्। (कै)

विप्रतिषेधः॥ असंबद्धपरिभाषापचस्य तदुपजीव्यः। तत्र विप्रतिषेधरहितोऽन्यस्त्वयुक्त एव। क्व सन्निपातः क्वान्यतरत्यागः स च कस्येत्यत्र विनिगमकाभावेन [2]सर्वेष्टासिद्धेस्तस्माद्द्वयमप्येकपक्षभूतमेव बोध्यम्॥

प्रदेशार्थत्वादिति। (कै)

परस्परेण सम्बन्धाभावादित्यन्तेन तच्छेषत्वासम्भव उक्तः। पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषान्तरङ्गा। तत्त्वेन ग्रहस्य प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल[3] एव। तदुक्तं भाष्ये

---

१ अ १। पा १। सू ५२॥ २ सर्वेष्टाऽसिद्धेः। ख॥
३ पदज्ञानकाले एव। ख॥

गुणो भवतीति यत्रे- (भा)

त्यादि। नियमस्तु स्थानषष्ठीलिङ्गक इत्यवान्तरवाक्यार्थबोधोत्तर-कालिकत्वेन बहिरङ्गः। एवं च मिदादावुपस्थितेक्परिभाषायाः सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेव

अलोऽन्त्यस्ये- (पा)

त्यस्यानुपस्थितिः।

[1]सार्वधातुकार्द्धधातुकयोरि- (पा)

त्यादौ सामानाधिकरण्यान्वये

अलोऽन्त्यस्ये- (पा)

त्यनेनान्त्यस्यादेशव्यवस्था। एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्त्ततेत्यपास्तम्।

पर्यालोचनयेति। (कै)

प्रदेशे सति सम्भवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः। अन्यथात्विक्परिभाषागर्भ एव। अस्या अन्तरङ्गत्वादित्यर्थः॥ भाष्ये

[2]वृद्धिर्भवतीत्यादि। (भा)

[3]इतिशब्दो यत्रेत्यर्थकः॥

---

१ अ ७। पा ३। सू ८४॥

२ भाष्ये वृद्धिर्भवतीतीत्यादि। क॥

३ इति शब्दो यत्रेत्यर्थः। क॥

**इक इत्येतदिति ।** (भा)

[1]इक इति सूत्रे इक इति षष्ठ्यन्तानुकरणमित्यर्थः । अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्याद्यर्थः स्यात् । अतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न । शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थस्तदुक्तमिति

**यत्रेत्यादि ॥** (भा)

गुणपदं यत्र वर्त्तते इत्याद्यर्थस्तु न ।

[2]**अतो गुण** (पा)

इत्यादावप्यापत्तेः । "भवति" क्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणाद्च विधीयमान इत्यस्य तदर्थकस्य भवतीत्यस्य वाऽध्याहार इति बोध्यम् । एतन्मूलकमेवानुवादे [3]परिभाषानोपतिष्ठते इति । अत एव तदेतद्विषयमेव

[4]**अचश्चे-** (पा)

त्येतद्विषयमेव च ।

[5]**अचो ञ्णिती-** (पा)

त्यादौ तु वाक्यार्थबोधकाले श्रौतात्पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्बलतया नान्वयः इति दिक् ॥

---

१ सूत्रे इक इति । क ॥ "इक इति" इति कचिल्लिखितपुस्तके नास्ति ॥
२ अ ६ । पा १ । सू ८७ ॥
३ विधौ परिभाषोपतिष्ठते नानुवादे । १०२ ॥ परिभाषेन्दुशेखरे स्पष्टम् ॥
४ अ १ । पा २ । सू २८ ॥ ५ अ ७ । पा २ । सू ११५ ॥

**पुंसि अन्त इति ।** (भा)

सुप्सुपेति समासः । भिनत्तीत्यत्र गुणापादनं-

**[1]क्ङिती-** (पा)

त्यस्य निमित्तसप्तमीत्वात् । इकः

**सार्वधातुकार्द्धधातुकयो-** (पा)

रितिविशेषणमिति तु न युक्तम् । तस्याङ्गांशे उत्थिताकाङ्क्षत्वात् । भाष्ये

**यणादिपरं गुण इति ।** (भा)

यणादिपरं लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन त्रिप्रादेः सर्वादेशो गुणः सिद्धः सूत्वादौ तु

**[2]ओर्गुण** (पा)

इत्येव सिद्धमिति भावः ॥ ननु पूर्वस्येत्युक्तावपि यणपेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ सूत्वादिषु यकारादेर्गुणः स्याद् यणादिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण इत्यर्थे त्रिप्रचुद्र्योरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह

**अच चेति ॥** (कै)

**अनित्यत्वादिति ।** (कै)

आसन्नित्यत्र लोपनिवृत्त्यर्थात्

---

१ क्ङिति च । अ १ । पा १ । सू ५ ॥
२ अ ६ । पा ४ । सू १४६ ॥

[1]श्नसोरल्लोप (भा)

इति तपरकरणादित्यर्थः। तथा हि अस् अन्तीति स्थिते परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गेनाटि विकारान्यानुपूर्व्यैक्याभावेन "लक्ष्ये लक्षणस्ये"ति न्यायाप्राप्तौ प्राप्तलोपवारणार्थन्तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम्। न चाटोऽप्यनापत्तिः। तच्चानित्यत्वे मानाभावात्॥

तस्मादेव चेति। (कै)

पूर्वत्वस्यावध्याकाङ्क्षायां परत्वेऽवधित्वेन क्लृप्तत्वादुपस्थितत्वाच्च तस्यैवावधित्वमिति भावः। तद्ध्वनयन्व्याचष्टे

पञ्चमीसमास इति। (कै)

सुप्सुपेत्यनेन। अवयवभूते यणादीत्यत्र समुदिते चेत्यर्थः॥ न चैवं कुरुशब्दे[2] रस्य शब्दस्यापि लोपापत्तिः। स्थूलादिषाठ-चर्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः॥

पक्षाश्रयणाच्चेति। (कै)

परिभाषाणामनियमे नियमकारि[3]त्वाच्चेत्यपि बोध्यम्। एवं "ज्ञापयती" त्यादौ "[4]पुगन्तेति" गुणे उपधा वृद्धिरिति न दोषः॥

---

१ अ ६। पा ४। सू १११॥

२ रस्यशब्दस्यापि। ङ॥

३ नियमकारिणीत्वाच्च। क। ङ॥

४ अ ७। पा ३। सू ८६॥

[1]क्ङ्सनोरिति। (कै)

एतत्

क्ङिति चे- (पा)

ति सूत्रे उपपादयिष्यते॥ भाष्ये शङ्कते

अथ वृद्धिग्रहणमिति। (भा)

न क्वचित्स्थानी निर्दिश्यते (भा)

इत्युक्त्या सर्वत्रैव न निर्दिश्यते इति प्रतीयते क्वचिदादिपद[2]वर्त्ति-नञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्ति-सिद्धत्वात् तत्रायुक्तमत आह

क्वचिदिति॥ (कै)

भाष्ये सिद्धान्त्याह

वृद्धिग्रहणमुत्तरार्थमिति॥ (भा)

पूर्वपक्ष्याह

कस्येत्यादि॥ (भा)

अविशेषेणोच्यते या

क्ङितीति॥ (भा)

प्रत्ययविशेषानाश्रयणमत्राविशेषः॥ उत्तरस्याविशेषेणेत्यस्य स्था-निविशेषानुच्चारणेनेत्यर्थस्तदाह

---

१ क्ङ्सवोरिति। क॥

२ क्वचिदादिपदप्राग्वर्त्तिनञः॥ ख॥

तच हि सूचे इति ॥ (कै)

अडागमात्पूर्वमिति। (कै)

लादेशेषु कृतेष्वडिति

पक्षे इदम् ॥

अटि कृते इति। (कै)

विकारान्यानुपूर्व्या भेदेन लक्ष्यभेदाच्चिन्त्यमिदम् ॥

परत्वाद् (कै)

इत्यपि चिन्त्यम्। द्वयोर्यौगपद्यासम्भवात् ॥

एवं तर्हीति। (कै)

लावस्थायामडिति (भा)

पक्षे इति भावः ॥ भाष्ये

[1]अनन्यविकारे इति। (भा)

तथापि सिध्यतीत्यभिमानः ॥ सिद्धान्ते लन्यार्थमिग्ग्रहणे कृते तेनैवाटो व्यावृत्तिसिद्धौ मा नैतदर्थेति

[2]ष्यङः (भा)

इति सूत्रे वक्ष्यत इति न विरोधः ॥

तस्मान्मृजेरिति[3]। (भा)

---

१ अनन्यविकारेऽन्त्यसदेशस्य कार्य्यम्भवतीति। भा ॥

२ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे। अ ६। पा १। आ १३ ॥

३ मृजेर्वृद्धिः। अ ७। पा २। सू ११४ ॥

निषेधस्य सिद्धये योगविभागमकृत्वा[१] स्थानिसमर्पणायास्या एवोपस्थितिरङ्गीकार्येति भावः ॥

संक्रम इति । (भा)

गुणवृद्धि प्रतिषेधविषयक्ङितः प्राचां संज्ञा ॥ "अचि" इत्येववचनम् ।

अजादाविति (भा)

तु तदादिपरिभाषालभ्यार्थानुवादः ॥ अत एवाग्रे वक्ष्यति

ततोऽचि क्ङितीति ॥ (भा)

एवं च मम्रजे यूयं मम्रजेत्यादौ विकल्पो भवत्येव । एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिस्तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् ॥ "[२]तुन्दपरिमृज" इत्यत्र यदि वृद्ध्यभाव इष्टः तर्हि व्यवस्थितविभाषया नेति बोध्यम् ॥

अजादावेवेति । (भा)

विपरीतनियमस्तु न । इष्टानुरोधात् । श्चि वृद्धौ स्थानि विशेषानाश्रयणरूपोऽविशेषः ॥ उत्तरार्थत्वे खण्डिते सिद्धान्त्याह

इहार्थमेवेति । (भा)

तत्खण्डयति पूर्वपक्षी

१ स्थानिसमर्थनाय । ख ॥

२ तुन्दशोकयोः परिमृजापनुदोः (अ ३ । पा २ । सू ५) इति सूत्रस्य दृष्टान्तः ॥

कस्य पुनरित्यादि ॥ (भा)

पूर्वविप्रतिषेधेति । (कै)

[1]ण्यल्लोपावियङ् । (भा)

इत्यादिः ।

चिकीर्षक इति । (कै)

अन्यथा ह्यत्र परत्वाद्वृद्धौ युकि चिकीर्षायक इति स्यात् ॥

परत्वाच्चेति । (कै)

अपवादत्वादित्यर्थः । परशब्द उत्कृष्टवाची ॥ भाष्ये

नैव सन्ध्यक्षरमिति । (भा)

वृद्धियोग्यमिति शेषः ॥ उपदेशे आत्वविधानादिति भावः ॥

अन्त्यमिति । (भा)

अङ्गस्य वृद्धिरित्यर्थेऽलोऽन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

ढलोपस्यासिद्धत्वादिति । (कै)

पूर्वं हलन्तलक्षणाया[2]वृद्धेर्जातत्वेनेदानीं

[3]सिचि वृद्धिः परस्मै[4] (पा)

इत्यस्य प्राप्त्या "लक्ष्ये लक्षणस्ये"त्यस्याप्रवृत्तिरिति भावः ।

---

१ अतो लोपः । अ ६ । पा ४ । सू ४८ । एतत् सूत्रस्थवार्त्तिकम् ॥

२ हलन्तलक्षणावृद्धेः । क ॥

३ अ ७ । पा २ । सू १ ॥

४ सिचि वृद्धिरित्यस्य । क ॥ ख । इ ॥

धातुग्रहणमिति । (कै)

विना तदाक्षेपे विद्ध इति भावः । एवं च कव्यादिभ्य आचारक्विपि अकवायीत् इत्यादौ वृद्धिर्नेति[1] लभ्यते । माधवस्तु वृद्धिं मनुते ।

बहुलं छन्दसी- (पा)

त्यतो बहुलग्रहणानुवृत्त्या [2]सन्ध्यक्षरान्तनामधातोर्वृद्धिर्नान्यत्र भवत्येवेति तदाशयः ॥ तेन सेयब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु

[3]नैव सन्ध्यक्षरमिति (भा)

एव गर्भितभाष्यप्रामाण्येन [4]सन्ध्यक्षरान्तेभ्यः आचारक्विबेव नेत्याहुः ॥

इलन्तलक्षणाद्वृद्धिर्बाधिकेति (भा)

भाष्ये । इग्ग्रहणाभावे "येन नाप्राप्तिन्यायेनेति" भावः ॥

इत्याहेति । (कै)

इत्याशङ्कायामाहेत्यर्थः ॥

नैकचेति । (कै)

बाध्यसामान्यचिन्तेयम् ॥

---

१ वृद्धिर्न लभ्यते । क ॥
२ नामधातौ वृद्धिर्नान्यत्र । ख ॥
३ अनेनैवोक्तं भाष्ये ॥
४ सन्ध्यक्षरान्ते आचारक्विमेवन । ख ॥

[1]नेटी- (पा)

त्यच

[2]हलन्तस्य (पा)

इत्यनुवर्त्त्यं हलन्तस्य या वृद्धिः प्राप्ता सा सर्वापि नेत्यर्थः । तेनाजावीदित्यादौ न दोषः इति बोध्यम् ॥ बाध्यविशेषचिन्तायामाह भाष्ये

अथवेति । (भा)

तद्व्याचष्टे

अपिशब्दादिति ॥ (कै)

अप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा . "भ्रष्टावसरन्यायेन" सिचि वृद्धेरप्यभावः प्रतिपाद्यते इत्यर्थः । तद्ध्वनयन्नाह भाष्ये

अस्ति पुनः क्वचिदित्यादि ॥ (भा)

ननु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न त्वपवादेन[3] बाधादुत्सर्गस्येत्यत आह

नान्त इति ॥ (कै)

भाष्ये

न भवन्तीति । (भा)

भ्रष्टावसरन्यायेनेति भावः ॥

---

१ अ ७ । पा २ । सू ४ ॥

२ वदव्रजहलन्तस्याचः । अ ७ । पा २ । सू ३ । इत्यस्मात् ॥

३ नत्वपवादे बाधादुत्सर्गस्य । क ॥

पूर्वसवर्णदीर्घवद्वृद्धेरपीति । (कै)

अवर्णादिषि यद्यत्प्राप्तं तन्नेति बाध्यसामान्यचिन्तारूपाद्यपेक्षणेयं शङ्का ज्ञापकाद्बाध्यविशेष चिन्तैवाश्रीयत इत्युत्तरम् ॥ पूर्वसवर्ण-दीर्घे निषिद्धे वृद्धेरपीति पाठे भ्रष्टावसरन्यायामित्यत्वेन क्वचिदपवा-दनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः ॥ परेतु

अथवेति (भा)

भाष्यं पूर्वपक्षयुक्तित्वात्प्रौढ्या । "भ्रष्टावसरन्यायस्तु" नास्त्येवोक्त-निर्देशात् । अत एव

[1]नान्तःपादमिति (पा)

सूत्रे एङोऽतीत्यनुवर्त्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति ॥ इष्टार्थत्वे पूर्वपक्षिणा प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याह

उत्तरार्थमेवेति ॥ (भा)

नूधूधातू कुटादौ ॥ भाष्ये

अनन्त्यत्वादिति । (भा)

अचोऽनन्त्यत्वादित्यर्थः ॥ नन्विक्परिभाषाभावेऽन्त्यात्मात्रस्य सा प्राप्नोतीति अनन्त्यत्वादित्यसङ्गतमिति चेन्न । हलन्तेषु हलन्त-लक्षणया बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात् ॥ सिद्धा-न्त्याह

---

१ प्रकृत्यान्तः पादमव्यपरे । अ ६ । पा १ । सू ११५ ॥

## यदि तर्हीति । (भा)

अत्र यदीत्यनेनापवादत्वात्तद्विषये ऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम्। इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम् ॥

## [1]लुप्तनिर्दिष्ट (भा)

इत्यत्र पूर्वन्निर्दिष्टः पश्चाल्लुप्त इत्यर्थे [2]मयूरव्यंसकादित्वात्समासः। न च गुणे कृते [3]"वार्णादाङ्गमिति" न्यायेनावं बाधित्वा वृद्धौ आवादेशे अलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थः इति वाच्यम् ।

## [4]सिचि वृद्धिरि- (भा)

त्यस्यापवादत्वाज्ज्ञानेनैव एतत्परिभाषाऽज्ञानेनैवास्य प्रवृत्तेरदोषात्। न च वकारप्रश्लेषे [5]अब्रवीदब्रावीद् इति ब्रूधातोर्नित्यवृद्ध्यापत्तिः। अस्या एकदेशयुक्तित्वेन तदज्ञानेनैवास्य भाष्यस्य प्रवृत्तेः। जिरिचिर्यथाद्यज्ञानवद् इत्याहुः॥ एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो वबयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये। अवेराटि वृद्धवृद्धोरविशेष इति आण्निवृत्तये भाष्ये माङ्प्रयुक्तः। एकादेशे पुनरप्यविशेषस्तदवस्थ इति भवानित्युक्तं मवौ तु प्रयोजनान्तरासत्त्वेऽप्येकरूप्याय तत्प्रयोगः।

---

१ लुप्तनिर्दिष्टो वकारः। भा ॥
२ मयूरव्यंसकादयश्च। अ २। पा १। सू ७२ ॥
३ न च गुणे वार्णादाङ्गमिति। क। ख। इ ॥
४ अ ७। पा २। सू १ ॥
५ अब्रावीदिति नास्ति। ख ॥

¹अविमव्योर्नेति (भा)

निषेधस्य ²मध्येऽपवादन्यायेन

³अतो ल्रान्तस्य (पा)

इत्यस्यैव तेन

अतो⁴हलादेरिति (पा)

विकल्पो भवत्येवेति बोध्यम् ।

सिचि वृद्धिरिति (पा)

सूत्रं तु अचैषीद् इत्यादौ गुणे कृते चरितार्थमेतन्मते इति बोध्यम् ॥

⁵कृतेऽस्य चारितार्थ्येऽपि समप्राप्तिकाले प्राप्तस्य ⁶येन नाप्राप्तिन्यायेन बाध इत्येतदाह

न्यायादपीत्यादि । (कै)

बाध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवञ्च न ज्ञापकोपयोगो नापि ज्ञापकसम्भवो नापि प्रयोजनं

---

१ अविमव्योर्नेति वक्ष्यामि । भा ॥

२ मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान् । परिभा । ६१ ॥

३ अ ७ । पा २ । सू २ ॥

४ अतो हलादेर्लघोः । अ ७ । पा २ । सू ७ ॥

५ "कृतेऽस्य" इत्यारभ्य "वृद्धिविकल्प एवेति बोध्यम्" इत्यन्तं नास्ति । क । ख । ङ ॥

६ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति। परिभा ।५८॥

वार्णपरिभाषयाऽचिरायौदित्यादौ गुणे कृतेऽयादेशात्पूर्वं वृद्धिप्राप्तेर्न वा वकारप्रश्लेषस्य फलं नाय्यविमव्योः प्रतिषेधस्येति मन्‌धातौ वृद्धिविकल्प एवेति बोध्यम् ॥

[1]नैतदस्ति ज्ञापकमिति । (भा)

भाष्ये

न्यकुटौदि- (भा)

न्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः । सिद्धान्ते न्यायाभावादिति भावः ॥

यत्तर्हि णिश्व्योरिति । (भा)

ननु णिश्विस्थानेऽविमवौ इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेन्न । ज्ञापकत्वे संभवति [2]निमाणासंभव इत्याशयात् ॥

यच्च करोतीति । (भा)

इग्ग्रहणाभावेऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे [3]त्वया सिचि वृद्ध्यपवादहलन्तलक्षणाया निषेधे तेन न्यायेन[3] सिचिवृद्ध्यप्राप्तेः स्वीकारेण त्वद्रीत्या ज्ञापकमेवेति भावः । एतेन सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोषीदित्यादौ लघुत्वाभावादेव वृध्यभावेऽत इति[4] व्यर्थमेवे-

---

१ "भाष्ये" इति नास्ति । क । ख । ह ॥

२ माणासंभव इति । क । नयमत्वासंभव इति । ख ॥

३ विशेष इत्यधिकम् । क ॥

४ व्यर्थमेवेत्यन्तम् । क । ख ॥

त्यन्यं ज्ञापकमसंगतं [1]तथा णिच्योर्गुणे वार्णपरिभाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसंगतमित्यपास्तम्। एकदेश्युक्तित्वेनादोषात्। एतदेव ध्वनयन्

[2]यदि तर्हीति (भा)

सिद्धान्त्युक्तौ यद्यन्तर्भावसूचितम्[3] ॥

[4]एवं च न्यनुवीदित्यादौ उवङं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचि वृद्धिराश्रयेयेत्युपसंहरति सिद्धान्ती

तस्मादिति (भा)

भाष्ये। इग्लक्षणत्वेन निषेधाय अकोषोदित्यादावनिको गुणव्यावृत्तये चेति भावः। बाध्यसामान्यचिन्ता भ्रष्टावसरन्यायश्चैकदेश्युक्तिर्न तु सिद्धान्तः। अत एव

[5]न्यस्तारीदि- (भा)

त्युपक्रम्य

[6]हलन्तलक्षणायाश्च [7]नेटीति प्रतिषेध (भा)

इत्युक्तमित्यलम्।

---

१ तथापि। क ॥ २ अत्रैवोक्तं भाष्ये॥

३ सिद्धान्त्युक्तौ यद्यन्तर्भावः सूचितः। क। सिद्धान्त्युक्तौ यद्यन्तर्भावः सूचितः। ख ॥

४ प्रागुक्त "कृतेऽस्य चारितार्थ्ये" इत्यारभ्य "वृद्धिविकल्प एवेति बोध्यम्" इत्यन्तमत्रास्ति। क। ख। इ॥ ५ अत्रैवोक्तं भाष्ये॥

६ अ ७। पा २। सू ३॥ ७ अ ७। पा २। सू ४॥

**विधायकमिति ।** (कै)

**[1]इको यणची-** (पा)

त्यादि तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः ॥

भाष्ये

**इग्ग्रहणेति-** (भा)

त्यस्य गुणवृद्धिरूपादेशेनेत्यादिः ॥

**पुनर्वचनम्** (भा)

**[2]अदेङ्गुण[3]** (पा)

इत्यादिरूपम् ॥

**नियमाद्विधेरिति ।** (कै)

प्राप्तबाधानुवादरूपदोषापत्या परिसंख्यारूपो नियमो गुरुरिति भावः ॥

**द्वितीयमिति ।** (कै)

केवलविधायकत्वेऽनुवृत्त्यैव सिद्धे इहत्यगुणवृद्धिग्रहणम् अनर्थकं स्यादिति भावः । यातीत्यादिनिर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये ॥

**तुल्यन्यायेति ।** (कै)

[4]षष्ठीदर्शनरूपोन्यायः ॥

---

१ अ ६ । पा १ । सू ७७ ॥

२ पुनर्वचनं मिदेर्गुण इत्यादिरूपम् । क । ख । इ ॥

३ अ १ । पा १ । सू २ ॥

४ षष्ठीनिर्देशरूपो न्यायः । क ॥

**वाक्यभेदेनेति।** (कै)

**[1]ष्यङः संप्रसारणमि-** (भा)

त्यादिनिर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः॥

**विषयार्थमि-** (भा)

त्यस्य निमित्तनियमार्थमित्यर्थः॥ [2]गुणादिविधावधिकारल-भ्या षष्ठीत्याह

**अङ्गस्येति॥** (कै)

तत्र

**[3]उरण्रपर** (भा)

इत्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः। एतयोरपि तत्रानुवृत्त्या षष्ठीतिसंबन्धेन तदर्थलाभः॥ तत्रानुवर्त्तनं यदि लौकिकोऽधि-कारस्तर्हि स आकाङ्क्षानिबन्धनः॥ न च

**[4]षष्ठी स्थाने** (भा)

इत्यस्याकाङ्क्षेत्यत आह

**स्वरितत्वादिति।** (कै)

व्याख्यानुरोधाच्चेत्यपि बोध्यम्॥

---

१ अ ६। पा १। सू १३॥

२ गुणादिविधावपि अधिकारलभ्या। क। ख। ङ॥

३ अ १। पा १। सू ५१॥

४ अ १। पा १। सू ४९॥

**षष्ठीति।** (कै)

योगविभागे च

**षष्ठीति** (पा)

सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षा लक्षणोऽधिकार इतिभावः॥

**योग्यत्वादिति।** (कै)

व्याख्यानाच्चेत्यपि बोध्यम्॥

**उपतिष्ठत इति।** (कै)

अनुवर्त्तत इत्यर्थः॥

**अन्यतरार्थमिति।** (कै)

केवलविधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव॥

**न तु वाक्यभेदेनेति।** (कै)

एकवाक्यत्वे सम्भवति तस्यायुक्तत्वमिति भावः। एतेन

[1]**इग्यणः** (पा)

इत्यपि व्याख्यातम्। तत्रापि संज्ञाविधाने इगनुवाद्यः। अनुवाद्यत्वं च

[2]**ष्यङः सम्प्रसारणम्** (पा)

इत्यादीनां सार्थक्यायावश्यकम्। एवं चैकरूप्यायानुवाद्यत्वमेवास्तु न तु विधेयत्वं

---

१ अ १। पा १। सू ४५॥
२ अ ६। पा १। सू १३॥

[1]वचिस्वपी- (पा)

त्यादीनां नियामकलापादकमिति बोध्यम् ॥

तदपेक्षिष्यामह इति । (कै)

एवञ्च यथा विधेः स्यान्याकाङ्क्षा तथास्यापि स्वसम्बन्धिविधेय-बोधकशास्त्रापेक्षेति [2]एकवाक्यतयैवेति भावः । एवं च स्वातन्त्र्य-न्दूरापास्तमेव । तदाह

अस्येति । (कै)

आवृत्तौ तु न मानम् इति शिवम् ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते
महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमपादे
तृतीयमाह्निकम् ॥

---

१ अ ६ । पा १ । सू १५ ॥ २ एकवाक्यतैवेति भावः । क ॥

# न धातुलोप आर्द्धधातुके । १ । १ । ४ ॥

प्राधान्यादिति ॥ (कै)

[1]प्राधान्यञ्च संस्कार्य्यत्वरूपम् ॥

असम्बद्धमिति ॥ (कै)

[2]अलोऽन्त्यस्य (पा)

इत्यनेनापि इक एव प्रसक्त्या परिभाषानिषेधे वैयर्थ्यम्[3] ॥

कृत्स्नस्येति । (कै)

[4]दुरीणो लोपश्च (उ)

इति रक्सन्नियोगेन कृत्स्नधातुलोपोऽस्तीति तदसम्भवो नोक्तः ॥

अथवेति । (कै)

आद्यपक्षे अवयवधर्मस्य समुदाय आरोपोऽन्त्ये समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

---

१ प्राधान्यं — गुणवृद्धिविधिनिष्ठम् ॥

२ अ १ । पा १ । सू ५२ ॥

३ वैयर्थ्यमिति । दीधीवेवीटामित्यस्य । १ । १ । ६ ॥

४ उ—पा २ । सू १७७ ॥

परामर्शः । (कै)

शब्देन पृथगुपादानम् ॥

प्रतिपादितमिति । (कै)

बुद्ध्या पृथङ्निष्कर्षादिति भावः ॥

लोपविशेषणमिति । (कै)

सूत्रे श्रुतत्वादिति भावः ॥

सिद्धान्तेत्विति । (कै)

निषेध्यत्वेन गुणवृद्ध्योः शाब्दप्राधान्याल्लोपस्य तद्विशेषणत्वादिति भावः । न च लोपशब्दोऽधिकरणघञन्तः ।

[1]अदर्शनं लोप (पा)

इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात् । गणे सानुबन्धस्य पाठाद् विशिष्टस्यैव धातुत्वं स्यादत आह

अनुबन्धविति ॥ (कै)

यस्मादिति । (कै)

उपदेशपदाभावेऽपि अन्तरङ्गत्वात् सर्वतः पूर्वं सा । धातुसंज्ञा तु प्रत्ययविशेषे विधित्सित इति भावः ॥ धातुसंज्ञेत्संज्ञयोः समकालत्वेऽपि न क्षतिरित्याह

---

१ अ १ । पा १ । सू ६० ॥

**लूशब्दस्यैवेति ।** (कै)

अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वावगमात् । गणपठित-क्रियावाचिनां च धातुत्वविधानादिति भावः ॥

**रोरवीतीति ।** (भा)

यङ्लुगन्तस्य रूपम् ॥

**शब्दवत्त्वात् ।** (कै)

शब्देनोपादानात् ॥

**नान्यथेति ।** (कै)

अन्यथाऽन्तरङ्गत्वात् तत्पुरुष एव स्यादित्यर्थः ॥ ननु पद-प्रयोजनचिन्ता वृत्तिकारस्योचिता न भाष्यकारस्येत्यत आह

**क्रमेणेति ।** (कै)

तत्तत्पदप्रयोजनक्रमेणेत्यर्थः ॥ क्रममेवाह

**आर्द्धधातुकस्य चेति ॥** (कै)

लोपविशेषणं श्रुतत्वात् । गुणादिविशेषणं प्राधान्यात् । तत्र लोप विशेषणत्वे आर्द्धधातुके परे पूर्वस्य धात्वंशस्य लोप इति वाच्योऽर्थस्तत्फलितमुक्तं भाष्ये

**आर्द्धधातुकनिमित्ते लोप इति ॥** (भा)

एवं गुणवृद्धिविशेषणत्वे आर्द्धधातुके[1] प्रत्यासत्त्या पूर्वस्य धातो-

**र्यौ गुणवृद्धी** (भा)

इति वाच्योऽर्थः । अनुवादेऽपि

---

१ अत्र "परे" इत्यधिकम् । क । ख । ग ॥

[1]इको गुणवृद्धी (पा)

[2]अचश्च (पा)

इति परिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात्। तत् फलितमुक्तम्

आर्द्धधातुकनिमित्ते ये इति॥ (भा)

प्राप्नुत (भा)

इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति।

बहुव्रीहीति। (कै)

उभयानुग्रहार्थेति भावः॥ यद्यपि धातुलोप इति समस्तमार्द्ध-धातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः॥

नन्वादगुण[3] इति। (कै)

नन्विक्स्थानिकत्वादयमपीग्लक्षणः। नचाचाप्यनुवृत्तमिक इति स्वरूपपरम्। उत्तरसूत्रे इव स्वरूपपदार्थकत्वव्यवस्थापक[4]शब्दा-भावादिति चेन्न।

[5]इको गुणवृद्धी (पा)

इति सम्पूर्णमनुवर्त्त्य यत्रेदन्तत्र न धात्वित्युपतिष्ठत इत्यर्थेनास्यापि

१ अ १। पा १। सू ३॥ २ अ १। पा २। सू २८॥
३ अ ६। पा १। सू ८७॥
४ व्यवस्थापक च शब्दाभावाद्-। ख। म। क॥
५ अ १। पा १। सू ३॥

परिभाषात्वाङ्गीकार इति भावात् । यद्वा । यत्रेदं तद्विहिते गुणवृद्धी नेत्यर्थः ॥ तद्वक्ष्यति । यत्रेक् परिभाषा व्याप्रियते तत्रायं निषेध इति ॥

## [1]इक्प्रकरणादिति (भा)

भाष्यप्रतीके अर्थाधिकारेण स्वरूपपरस्यैवेक इत्यस्यानुवर्त्तनाद्वा ॥

## यद्वेति । (कै)

[2]"पूर्वं धातुः साधनेने"ति सिद्धान्तपक्ष इत्यर्थः ॥

## यदा त्विति । (कै)

[3]"पूर्वं धातुरुपसर्गेणे"ति पक्षे पूर्वमेव जातस्य निषेधायोगादिति भावः ॥

## बहिरङ्गस्यासिद्धत्वादिति । (कै)

द्वितीये बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकालेऽनिष्पन्नत्वान्निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः ॥ एतेन जातस्य बहिरङ्गस्यान्तरङ्गे कर्त्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेऽन्तरङ्गे पश्चात् प्राप्तबहिरङ्गस्यानेनासिद्धत्वप्रतिपादने मानाभावः फलाभावो ज्ञापकविरोधश्चेत्यपास्तम् ॥ परं त्वयं पक्षः

---

१ "इक्प्रकरणान्मुल्लोपे वृद्धिः" इत्यत्रैवाग्रिमभाष्ये वक्ष्यति ॥

२ परिभाषेन्दुशेखरे द्रष्टव्यम् ॥

३ परिभाषेन्दुशेखरे द्रष्टव्यम् ॥

[1]सुट् कात्पूर्व (भा)

इत्यादि सूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक् ॥

नन्विति । (कै)

इयं च

[2]षत्वतुकोरिति- (भा)

सूत्रेण ज्ञापिता । अन्यथा बहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥

अचोरिति (कै)

द्वित्वमविवक्षितम् । धर्मिग्राहकमानस्य तथैव सत्त्वात् ॥

अनुपस्थानम् (कै)

इत्यस्याचेत्यादिः[3] ॥

तच हीति । (कै)

ततश्च यण्वदसिद्धो नेत्यर्थः । तेनासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । अत एव भाष्ये [4]विप्रतिषेधसूत्रभिन्नस्थले न क्वाप्ये-

---

१ अ ६ । पा १ । सू १३५ ॥

२ अ ६ । पा १ । सू ८६ ॥

३ अचेत्यादिरिति । प्रदीपे अनुपस्थानपदेन "नाजानन्तर्य्येति" परिभाषाया अनुपस्थानं बोध्यत इति मत्वेदम् । यदि तु अन्तरङ्गपरिभाषाया अनुपस्थानं गृह्यते अत एव अत्तयूरित्याद्युत्तरग्रन्थसङ्गतिरित्युच्यते तदा तचेति ग्रेषो नापेक्षितः ॥

४ विप्रतिषेधे परं कार्यम् । अ १ । पा ४ । सू २ ॥

तदुल्लेखो यथाऽसिद्धपरिभाषाज्ञापकं विप्रतिषेधसूत्रे उक्तमपि पुन-

[1]वाह ऊठ् (पा)

सूत्रे उक्तमिति विवरणकृतः ॥

अस्मिन्निति। (कै)

निषेधस्य प्राप्तिपूर्वकत्वात् पश्चात् प्रवर्त्तमाने इत्यर्थः ॥ क्नूय्-धातोर्णिचि पुकि

[2]लोपो व्योरिति (पा)

यलोपः। वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय [3]परिगणन-माह भाष्ये

परिगणनमिति। (भा)

अत्र

[4]यस्य हल इति (पा)

लोपः [5]समुदायलोप इति मत्वा "यक्क्ययोः" परिगणनं [6]"वेभिदिता" इत्युदाहरणं च बोध्यम् ॥ ननु भञ्जिरञ्जोरौपदे-शिकनस्यैव

---

१ अ ६। पा ४। सू १३२ ॥ २ अ ६। पा १। सू ६६ ॥

३ परिगणनमिति भाष्ये। क ॥ ४ अ ६। पा ४। सू ४९ ॥

५ समुदायलोप इति मत्वेति। वर्णलोप इति पक्षेतु अल्लोपस्य स्थानि-वद्भावादेव न गुणादि प्राप्तिः ॥

६ वेभिदितेति। अस्यापि यङन्ततया वर्णलोपपक्षे अल्लोपस्य स्थानि-वद्भावादेव गुणाभावः सिद्ध्येत्। यङ्लुगन्तन्तु नेदम् तत्र लुक आर्द्ध-धातुकनिमित्तत्वाभावेन निषेधाप्राप्तेः। अनारम्भो वेत्युपक्रम्य कथं "वेभिदितेति" अकारलोपे कृते तस्य स्थानिवद्भावादित्युत्तरभाष्य-विरोधाच्च। "मरीमृज" इत्यत्र तु "यङोऽचि चेति" लुक् समुदाय-स्यैव भवतीति नास्ति तत्र स्थानिवद्भावसम्भावना ॥

[1]भञ्जेश्च चिणि (पा)

[2]रञ्जेश्च (पा)

[3]घञि च (पा)

इत्यादिना लोप इति नुल्लोप इत्यसंगतमत आह

नुमितीति ॥ (कै)

मध्यनिदिद् वृद्धिणा इदं चिह्नमत आह

वृद्धि इद्धाविति । (कै)

स नास्त्येवेति पूर्वपक्षाशयः ॥

ऊडादेश इति । (कै)

[4]ज्वरत्वरस्रिवी- (पा)

त्यनेन ॥ भाष्ये

इत्यत्रापि प्राप्नोतीति । (भा)

वृद्धिरिति शेषः ॥ न प्राप्नोतीति पाठे निषेध इति शेषः ॥

निपातनादिति । (भा)

[5]स्यदो जवे (पा)

---

१ अ ६ । पा ४ । सू ३३ ॥

२ अ ६ । पा ४ । सू २६ ॥

३ घञि च भावकरणयोः । अ ६ । पा ४ । सू २७ ॥

४ ज्वरत्वरस्रिव्यविमवामुपधायाश्च । अ ६ । पा ४ । सू २० ॥

५ अ ६ । पा ४ । सू २८ ॥

[1]अवोदैधौद्मप्रश्रथहिमश्रथाः. (पा)

इति निपातनम् । अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्यापत्तिरिति भावः ॥

तेनेति । (कै)

अन्यथा

[2]ओर्गुणः (पा)

इत्यादावपि परिभाषाप्रवृत्तौ तस्यापौन्नचणत्वे "लैगवायन" इत्यादौ निषेधः स्यादिति भावः ॥

यद्येक्परिभाषेति । (कै)

नचेक इत्यनुवर्त्यैको न ते इत्येव व्याख्यानमुचितमिति वाच्यम् । "मरीमृजः" "सरीसृप" इत्यादाविकः प्रत्ययाव्यवहितपूर्वत्वाभावा-न्निषेधानापत्तेः । तदाह भाष्ये

इग्लक्षणयोरिति । (भा)

यद्येतदर्थलाभस्तयोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः ॥

लोपेति । (कै)

प्रत्ययाश्रयत्वादिति (भा)

भाष्यस्य लोपे आर्द्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

---

१ अ ६ । पा ४ । सू २९ ॥
२ अ ६ । पा ४ । सू ४७ ॥

न प्रत्ययेति। (कै)

प्रत्ययस्याश्रुतत्वादनाश्रितत्वाच्चेति भावः॥ अवश्यं जीरदानुशब्दस्यैवमेव[1] व्युत्पत्तिः कार्य्येत्याह

एवं चेति। (कै)

अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः॥ ननु रदानुप्रत्यये रेफाकार उदात्तः समासे त्वन्तोदात्तः स्यादत आह

बहुव्रीहाविति। (कै)

जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः। जीवेर्विचि तु गुणनिषेधो भवत्येव॥ एतेनार्द्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम्। वार्त्तिकविरोधात्।

[2]यङोऽचि च (पा)

इत्यत्रापि तत्त्वेनानिमित्तत्वा "लोलुव" इत्याद्यसिद्ध्यापत्तेश्च। धिव्यादिभ्यस्तु विजभाव एव। भाष्ये

यावता चेदानीमिति। (भा)

किन्नेन गुणनिषेधादिति भावः। अत्र वलोपो

[3]लोपो व्यो- (पा)

रित्यनेन। इदं च यथाश्रुतसूत्रमते। वलोपप्रत्याख्याने तु

---

१ अवश्यं जीरदानुशब्दस्यैवं व्युत्पत्तिः कार्य्येत्याह - । क॥

२ अ २। पा ४। सू ७४॥

३ अ ६। पा १। सू ६६॥

## [1]इकि ज्य (भा)

इत्येव शरणम् ॥

## पक्षद्वयेऽपीति (कै)

तन्त्रेणोभयविशेषणत्वपक्षेऽपीत्यपि बोध्यम्। गुणो ध्याश्रयो णिलोपो यगाश्रयः ॥

## अपवादेति। (कै)

"[2]प्रकल्प्य चापवादविषयमिति" परिभाषयेति भावः। एतेन गुणप्रतिषेधौ यत्र समानकालौ तत्र चरितार्थौ निषेधो नान्तरङ्गं गुणं बाधितुं क्षमत इत्यपास्तम् ॥ न च

## भेद्यते (भा)

इत्यत्र

## [3]अचः परस्मिन्निति (भा)

णिलोपस्य स्थानिवत्त्वेन तत्राभावातिदेशस्य च सत्त्वेन स्थानिनि णिचि सति अभवतो निषेधस्य लोपेऽप्यभावातिदेशान्न दोष इति वाच्यम्। स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति तदना- श्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात् ॥ भाष्ये

## तस्मादिग्लक्षणा वृद्धिरिति। (भा)

प्रतिषेध्येति शेषः ॥ अत एवाभाजीत्यादिसिद्धिरिति भावः ॥

---

१ "इकि ज्यः सम्प्रसारणम्" इत्यत्रैव भाष्ये ॥

२ परिभाषेन्दुशेखरे स्पष्टम् ॥

३ अ १। पा १। सू ५७ ॥

**अकारलोप इति ।** (भा)

**[1]अतो लोप** (पा)

इत्यनेन ॥ यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न । आर्द्धधातुकनिमित्तलोपाभावात् ॥

**मरीमृजक इति ।** (भा)

अचाल्लोपस्य स्थानिवत्त्वे

**क्ङित्यजादौ वेष्यते** (वा)

इति विकल्पो न । व्यवस्थितविभाषाश्रयणात् ॥ नन्वेवं लुक्-शास्त्रं व्यर्थं स्यादत आह

**कृतेऽपीति ।** (कै)

अवशिष्टे तच्चरितार्थमिति भावः ॥ भाष्ये

**लुकि कृते इति ।** (भा)

अनवकाशत्वा"[2]दन्तरङ्गानपीति"न्यायाच्च लुकि कृतेऽतो लोपो न प्राप्नोतीत्यर्थः ॥ इतर आशयानभिज्ञ आह

**परत्वादिति ।** (भा)

[3]ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह

---

१ अ ६ । पा ४ । सू ४८ ॥

२ "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति ॥ परिभा — । ५३ ॥

३ ननु इत्यनन्वितमिति ग्रन्थकर्तुरनवधानम् ॥

लुक् शास्त्रेति ॥ (कै)

गौणत्वादिति । (कै)

अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम्। किञ्च भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः। यथा

[१]व्यथो लिटीति (पा)

संप्रसारणस्य वकारे चारितार्थ्येऽपि हलादिः शेषबाधकता। भाष्यकारोऽपि

[२]मिदचोऽन्त्यादि- (पा)

त्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति। तस्मात् कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्याऽपवादत्वं भवत्येवेत्याशयः॥

असम्भव एव बाधकत्वम् (भा)

इति वार्त्तिकानुयायिना

सावकाशो लुक् (भा)

इत्युक्ते स एव

अथापी- (भा)

त्याहेति तदुक्तिः कथञ्चिदिति ॥ भाष्ये

---

१ अ ७। पा ४। सू ६८॥
२ अ १। पा १। सू ४७॥

**अत इत्येवेति।** (भा)

**[1]अलोऽन्त्य-** (पा)

परिभाषया अत इत्यनुवृत्तेर्वेति भावः॥ [2]अयं च लुकोऽपवादः। एवञ्चार्थादवशिष्टस्य लुगिति बोध्यम्। अत्र

**[3]असृजो रोपधेति** (पा)

सूत्रादन्यतरस्यां ग्रहणस्य मण्डूकप्लुत्यानुवर्त्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपो न सर्वत्रेति बोध्यम्॥

**मरीमृज** (भा)

इत्यत्र विकल्पस्तु न। व्यवस्थितविभाषाश्रयणात्। यद्वा तत्र विकल्प इष्ट एव। तदर्थं सूत्रकृतोऽप्येतत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः॥ लोलुवादावुवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः। अचः पूर्वत्वेन दृष्टत्वोल्शब्दात् परस्य गुणे कर्त्तव्ये पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावसौलभ्यात्। निमित्तत्वेनाश्रितात् पूर्वस्मादित्यर्थे तु न मानम्। अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात्॥ भाष्यानुक्तत्वात् तदनित्यत्वाभावेऽपि पूर्वस्मात् परस्याव्यवहितस्यैव ग्रहणेन छे गौरित्यत्रादोषः। अचः पूर्वत्वांशे स्वरग्रहणाद् भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्वा-

---

१ अ १। पा १। सू ५२॥ २ अत्र च। क। ग॥
३ असृजो रोपधयो रमन्यतरस्याम्। अ ६। पा ४। ४७॥

धे मानाभावात्। अतिदेशप्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम्। किञ्चाशास्त्रीयस्यापि तस्य "तत्स्थानापन्ने तद्धर्मलाभ इति" लोकन्यायेनातिदेश इति स्थानिवत्सूत्रे वक्ष्यते। लोलू इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः॥

दरीदृश इत्यत्राङ् निमित्तगुणस्तु न। अस्याङन्तर्कैकगोचरत्वेन लाक्षणिकतया अङ्ग्रहणेनाग्रहणात्। अत एव दरीदृशक इत्यादौ यङन्ताद् ण्वुलि अङ्निमित्तगुणाभावः॥ जङ्गमक इत्यादौ यङन्ताद् ण्वुलि उपधालोपस्य। अनङीति निषेधाप्रवृत्तेः। जङ्गम इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः॥ निजेगिल इत्यादौ

[1]ओ यङीति (भा)

नित्यं लत्वमिष्टमेव। सूत्रमतेऽपि

[2]न लुमतेति (भा)

निषेधस्यानित्यत्वाद् यङ्परत्वमस्ति।

[3]नवेति विभाषेति (भा)

सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः। यदि "जरीगृह्यादेः" "वाशर्य्यतेश्च"ति[4] सम्प्रसारणगुणाविष्टौ तर्हि सूत्रमतेऽपि

---

१ अ ८। पा २। सू २०॥ २ अ १। पा १। सू ६३॥
३ अ १। पा १। सू ४४॥
४ सम्प्रसारणयङिचेति गुणाविष्टौ। क। ग॥

"न [1]लुमतेति" निषेधानित्यत्वेन साधनीयौ भाष्यप्रामाण्यादिष्टा-वितिति गम्यते। अत एव पृथगल्लोपे यङो विषयापहाराभावेन अजे-र्व्यादेशे यणि "वेव्य" इति स्यादित्यपास्तम्। योगविभागस्य क्वाचित्कत्वेन तच्च लुक एव प्रवृत्त्याऽऽद्यतेः। [2]पुर्वादिभ्यो वान्तेभ्यो विच् नास्त्येव। [3]अनभिधानात्। इदं च

## [4]लोपो व्योरिति- (पा)

सूत्रे भाष्ये ध्वनितम्। एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानाम-नभिधानमित्यन्ये॥ न चैवं "न धातुलुक्यचौ"त्येव सिद्धे आर्द्ध-धातुकग्रहणं व्यर्थमिति वाच्यम्। लोपार्द्धधातुक इत्येव षष्ठीतत्पु-रुषेण लोपनिमित्तार्द्धधातुक इत्यर्थेन लून्यादेर्व्यावृत्तिसिद्धौ धातु-ग्रहणवत् तस्यापि सत्वात्॥ भाष्ये

## लुकं वक्ष्यतीति। (भा)

लुगतो लोपापवादः। अपवादश्च प्रायेण पश्चाद्भावीति भवि-

---

१ अ १। पा १। सू ६३॥

२ ननु पुर्वधातोर्विचि "वेरपृक्त" लोपाद् वलि लोपो बलीयान् इति धातुवकारलोपे सूत्रसत्त्वे तेन गुणनिषेधाद् "हलि चे"ति दीर्घे पूरित्येव भवति। प्रत्याख्याने तु पोरिति स्याद् अत आह पुर्वा-दिभ्य इति॥

३ अनभिधानादिति। इदं प्रत्याख्यानपरं भाष्यमेव पुर्वादिभ्यो विचोऽ-नभिधाने मानम् फलभेदे प्रत्याख्यानासङ्गतेरिति भावः॥

४ अ ६। पा १। सू ६६॥

त्यनिर्द्देशः ॥ ननु भिन्नाश्रययोरपि दीर्घत्वह्रस्वयोरियायेत्यादौ बाध्य-बाधकभावो दृष्ट इत्यत आह

तुल्यकालेति ॥ (कै)

बहुलेति । (कै)

[1]यङोऽचि चेति (पा)

चकारेण ॥

अन्तरङ्ग इति । (कै)

प्राक् प्रवृत्तिकलमन्तरङ्गत्वम् । न हि तदाऽपवादप्रवृत्तिरिति भावः ॥

अकित्त्वस्येति । (कै)

[2]उदुपधाद्भावादिकर्मणोरिति (पा)

विहितस्येत्यर्थः । एवञ्चाकित्त्वाभावे

[3]क्ङिति च (पा)

इत्येव निषेधः सिद्धो "निकुचित" इति भावः ॥ सन्निपातः सम्बन्धः । तद्विघात इति

कर्मण्यण् । (पा)

---

१ अ २ । पा ४ । सू ७४ ॥

२ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । अ १ । पा २ । सू २१ ॥

३ अ १ । पा १ । सू ५ ॥

अजादौ प्रत्यये इति । (कै)

यायायतेः क्विपि यातिरित्यादौ आलोपानापत्तेः[1] "वरे" ग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव ॥ अत एव

[2]न पदान्त- (पा)

सूत्रे "वरे" ग्रहणं चरितार्थम् । सत्यकारे यदि स्याद्यकारलोपस्तदा सम्भव उदाहरणादेरिति भावः ॥

---

# क्ङिति च ॥ १ । १ । ५ ॥

---

तत्र यदीति । (कै)

[3]तस्मिन्निति- (पा)

परिभाषानुग्रहार्थेत्यर्थः ॥

यद्वा त्विति । (कै)

निषेध्यत्वेन तयोः प्राधान्यादिति भावः ॥

---

१ "न पदान्तद्विर्वचनवरे - -" इति सूत्रे ॥ अ १ । पा १ । सू ५८ ॥

२ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु । अ १ । पा १ । सू ५८ ॥

३ अ १ । पा १ । सू ६६ ॥

न हीति । (कै)

अनभिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्त्तुमशक्यत्वात् तदनुपस्थानम् । निर्वृत्तनिषेधे तु "देवदत्तहन्तृहत"न्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः ॥

निमित्तेति । (कै)

अत्र

[1]यस्य च भावेन (पा)

इति सप्तमी । सा च[2] ज्ञापकत्वार्थिका । ज्ञापकत्वं च सम्बन्धं विना-

---

१ यस्य च भावेन भावलक्षणम् । अ २ । पा ३ सू ३७ ॥

२ ज्ञापकत्वार्थिकेति । वस्तुतो "गोषु दुह्यमानासु गत" इत्यत्र गमने गोदोहनसामानकालिकत्वबोधस्य "गोषु दुग्धासु गत" इत्यत्र गोदोहनौत्तरकालिकत्वबोधस्य "गोषु धोक्ष्यमाणासु गत" इत्यत्र गोदोहनपौर्वकालिकत्वबोधस्यानुभवसिद्धत्वाद् ज्ञाप्यत्वार्थकत्वे चोक्तबोधे त्रैविध्यस्योपपादयितुमशक्यत्वात् सामानकालिकत्वादिकमेव सप्तम्या वाच्यं मन्तव्यम् । ज्ञाप्यज्ञापकभावस्तु सामानकालिकत्वादिबोधे अर्थात् सिद्धो भवतीति सूत्रे निमित्तत्वेन गृहीतः । अत एव कदा गत इति प्रश्नस्य "गोषु दुह्यमानसु" इत्यादेरुत्तरत्वमपि सङ्गच्छते । ज्ञापकत्वार्थकत्वे तु किं ज्ञाप्यं गमनम् एतत्प्रश्नोत्तरत्वं तस्य स्यात् । न चैतत् कोऽप्यभिप्रैति । एवञ्च न निमित्तनिमित्तिभावलाभस्य विवरणोक्तं द्वारमुपपद्यते । राहूपरागे स्नायादित्यत्र तु शब्दवृत्त्या सामानकालिकत्वमेव सप्तम्या बोध्यते स्नाननिमित्तापेक्षायां प्रत्यासन्नत्वात् उपराग एव तन्निमित्तत्वेन मनसा गृह्यते इत्यन्यत् ॥

नुपपन्नं सद् विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्य्यवस्यति। एवञ्च निमित्ततया क्ङिज्ज्ञाप्ये गुणवृद्धी नेत्यर्थः। तदाह

**क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति॥** (कै)

केचित्तु "सिद्धसाध्यसमभिव्याहार"न्यायेन निमित्तत्वं फलतीत्याहुः॥ परेतु क्ङितीत्येतद्गुणवृद्धिविशेषणमेव भवनक्रियातदभावयोरमूर्त्तत्वेन क्ङित्परत्वासम्भवादिक इत्यस्याप्यनुवृत्त्यनुक्तेः। अनुवृत्तावपि तस्य शब्दपरत्वात्। तस्मान्निमित्तग्रहणाभावे क्ङितीति सप्तम्या

[1]**तस्मिन्निति निर्दिष्टे पूर्वस्य** (पा)

इत्युपस्थित्या क्ङिति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः॥ [2]"अनुवादे परिभाषा नोपतिष्ठत" इति तु

[3]**इको गुणवृद्धी** (पा)

[4]**अचश्चेति** (पा)

सूत्रद्वयविषयमेवेत्युक्तं भाष्ये। तस्य निषेधस्यानुपलम्भाच्च॥ तद्वक्ष्यति भाष्ये

---

१ अ १। पा १। सू ६६॥
२ विधौ परिभाषोपतिष्ठते नानुवादे। परिभाषेन्दुशे-१०२॥
३ अ १। पा १। सू ३॥
४ अ १। पा २। सू २८॥

## क्ङित्यनन्तरो गुणभाव्यस्तीति। (भा)

निमित्तग्रहणे तु तत्सामर्थ्यात् परिभाषानुपस्थानं तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम्। सम्भवन्त्यां परसप्तम्यां

## [1]यस्य चेति (पा)

षष्ठ्या असम्भवाच्च। [2]"उपपदविभक्तेरिति"न्यायात्॥ "सिद्ध-साध्यसमभिहारन्यायस्या"पि

## [3]तस्मिन्निति (पा)

शास्त्रेण बाध एव। अत एव निमित्तग्रहणप्रयोजनावसरे "हत"[4] इत्युदाहरिष्यति॥ कैयटोक्तरीत्या इक्पदानुवृत्तावेव

## [5]निमित्तग्रहणम् इति (भा)

वार्त्तिकस्थोक्तिसम्भवेन तत्प्रयोजनदानानुक्तिसम्भवः स्पष्ट एवेत्याशः॥

## उपधाया अपीति। (कै)

---

१ अ २। पा ३। सू ३७॥
२ "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति। परिभाषे-न्दुशे-१०३॥
३ अ १। पा १। सू ६६॥
४ अत्रैवाग्रिमभाष्ये "इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि। हतो हथ उपोयते औयत लौयमानिः पौयमानिर्नैनिक्त इति"॥
५ "क्ङितिप्रतिषेधे तन्निमित्तग्रहणम्" इति अत्रैव भाष्ये उक्तम्॥

उपधायां रोरवीतौ चार्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत् तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः॥ उपधारोरवीतिभ्यामिति

**उपधारोरवीत्यर्थमिति** (कै)

अर्थेन[1] नित्यसमास इत्यन्ये॥

नन्वसन्निहितं पुगन्ताङ्गादि कथं तत्परत्वेन विशेष्यमत आह

**आकाङ्क्षयेति॥** (कै)

[2]ननु निषेध्ये गुणवृद्धी प्रति क्ङित्प्रत्ययपरेगूपं निषेधविषयं प्रति चाकाङ्क्षा नाङ्गं प्रतीत्यत आह

**अथवेति।** (कै)

निषेध्यगुणादेरप्रत्यये क्ङित्यप्रसङ्गेन प्रत्ययग्रहणमिति भावः॥ एवं च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात् तस्यैव तद्विशेषणमिति भावः॥

आद्यव्याख्यायां परिहारभाष्यं योजयति

**ततश्च समुदेति।** (कै)

द्वितीयेत्विदं बोध्यम्। नाचिप्रविशेषणत्वं न्याय्यमिति। भाष्ये

**अङ्गविशेषणे हीति।** (भा)

---

१ "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति वार्त्तिकेन। अ २। पा १। सू ३६॥

२ क्ङित्परे। क। ख। ग। ङ॥

[1]पुगन्तलघूपधस्य (पा)

इत्यस्य बहुव्रीहिणाङ्गविशेषणत्वे इत्यर्थः ॥

[2]यदि (भा)

इत्यनेन न स्वपक्षोपादेयतोच्यते किन्तूभयोः साम्यमुच्यते इत्याह

तन्निमित्तपक्षस्यापीति। (कै)

सार्वधातुकनिमित्तस्य लघूपधलक्षणस्य तिब्निमित्तस्य ॥

भाष्ये

अन्तरङ्गलक्षणत्वादिति। (भा)

प्राधान्येनाक्ष एव यत्रानन्तर्य्याश्रयणं तत्रैव[3] "नाजानन्तर्य्ये" इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः ॥

ननु अदुद्रुवद् इत्यत्र

[4]सार्वधातुकेति (पा)

गुणात् पूर्वं नित्यत्वाच् "चङि"

[5]द्विर्वचनेऽचीति (पा)

निषेधादुवङभावे द्वित्वात् परत्वात् लघूपधगुणो दुर्वार इति चेन्न। अन्तरङ्गत्वात् द्वित्वस्यैव प्रवृत्तेः। [6]ओणेर्ऋदित्करणेनोपधाकार्य्यस्य

१ अ ७। पा ३। सू ८६। २ "यदि तन्निमित्तग्रहणं क्रियते प्रचङन्ते दोषः। रियति पियति धियति प्रादुद्रुवत् प्रासुस्रुवत्" अत्रैव भाष्ये ॥
३ "नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः"। परिभाषेन्दु - ५१ ॥
४ अ ७। पा ३। सू ८४ ॥ ५ अ १। पा १। सू ५९ ॥
६ ओणृधातोः।

द्वित्वात् प्राबल्यबोधनेऽपि न क्षतिः। ज्ञापकस्य सजातीयापेक्षत्वे- नोपधाकार्य्यस्य द्वित्वात् प्राबल्यबोधने यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तार्वाग्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः॥

[1]भूयः (भा)

पुनरर्थे॥

एवमकारोऽपीति। (कै)

क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये इति सूत्रार्थः॥ तत्र यथा "चितमि"त्यादावसतो गुणादेः प्रागभावः पाल्यते एवं सतोऽपि निवृत्तिः साध्येत। सतोऽपि निवृत्तेः

[2]अदिप्रभृतिभ्य (पा)

इत्यादौ दृष्टत्वादिति भावः॥

नन्विति। (कै)

तथाचेक इत्यनुवृत्तिसामर्थ्यादसत एवाप्रयोगः प्रतिपाद्यत इति भावः॥

[3]नेनिक्ते (भा)

इत्यत्र

[4]निजां त्रयाणां गुणः श्लौ (पा)

---

१ "इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि"। अत्रैवोक्तम्॥
२ अ २। पा ४। सू ७२॥ ३ "इतो ह्यय उपोयते औयत लौयमानिः पौयमानिः नेनिक्त इति" अत्रैव भाष्ये॥
४ अ ७। पा ४। सू ७५॥

इत्यभ्यासस्य गुणः ॥ [1]प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह

**सामान्येति ।** (कै)

**निवृत्तिः ।** (कै)

अनभिनिर्वृत्तिः क्रियते ॥ विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह

**परमार्थेति ।** (कै)

गुणविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति तयोरप्राप्तिरेवेति भावः । सा च पर्युदासविधया । यद्वा प्रसज्यप्रतिषेधेन वाक्यार्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवाक्यताफलसम्पत्तेस्त्वेकवाक्यतायामित्युक्तमिति द्रष्टव्यम् ॥

**भूताकारेति ।** (कै)

सिद्धाभावपरिपालनेनैव सिद्धावसिद्धाभावविधाने गौरवादिति भावः ॥

**प्रक्रियायामिति ।** (कै)

वस्तुतस्तु तत्रापि लुकानुत्पत्तिरेवान्वाख्यायते इति बोध्यम् ॥

**नैष इति ।** (कै)

[2]"एकान्ता अनुबन्धा" इति भावः ॥ [3]अयमेव न्याय्य इति

---

१ अत्रैव भाष्ये "प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम्" ॥ २ परिभाषेन्दुशे—५ ॥

३ "वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति । उभयमिदमनुबन्धेषूक्तम् एकान्ता अनेकान्ता इति । किमत्र न्याय्यम् । एकान्ता इत्येव न्याय्यम् । कुत एतत् । अत्र हि हेतुर्व्यपदिष्टः । यच्च नाम सहेतुकं तन्न्याय्यम्" । तस्य लोप (१। ३। ९।) इत्यत्र भाष्ये ॥

[१]तस्य लोप (पा)

इति सूत्रे वक्ष्यति ॥

कार्यित्वादिति । (कै)

अङ्गस्य गुणो भवति तत्सम्बन्ध्यभ्यासेक इत्यर्थ इत्यभिमानः ॥

उत्तरस्त्विति ।

पक्ष इति शेषः । क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः ॥ भाष्ये

[२]धातुं क्ङिदिति ।

"परत्वेन" निर्दिष्टं यत् "क्ङिदि"ति त"द्धातुं" प्रति विहितमिति "विशेषयिष्यामः" । तथाच धातुविहितं क्ङिद्यतः कुतश्चित्परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः ॥ तद् ध्वनयन्नाह

मत्वाप्रश्न इति ॥ (कै)

धातुर्विकरणो वेति । (कै)

धातुना विहितविशेषणवत्त्वलक्ष्यमेतदुभयम् ॥

येन नेति । (कै)

[३]पुगन्तलघूपधस्येति (पा)

---

१ अ १ । पा २ । सू ९ ॥

२ "धातुं क्ङित्परत्वेन विशेषयिष्यामः" । भाष्ये ॥

३ अ ७ । पा ३ । सू ८६ ॥

तत्पुरुष इति भावः। श्रुतत्वात्सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेव विशेषणमित्यभिमानः॥

प्रतिषेध्यापेक्षायामिति। (कै)

गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लव इत्यर्थः॥

प्रधानानीति। (कै)

अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः॥

अङ्गविकल्पेति। (कै)

पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः॥ न चैवं

नेनिक्ते (भा)

इत्यत्रापि निषेधः स्यात्। [१]"येन नेति"न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बाधनात्॥

न्यायव्युत्पादनार्थेति। (कै)

न्यायव्युत्पत्तिस्तत्प्रतिपत्तिः। श्रोतृणां तदुत्पादनार्थेत्यर्थः॥ भाष्ये

[२]हलन्ताच्चेति। (भा)

---

१ "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्"॥

२ अ१। पा२। सू१०॥

नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् ॥ [1]दिदृक्षतीत्यादाविमागमनिषेधेन धिप्सतीत्यादौ नलोपेन च तच्चारितार्थ्यात् ।

[2]इको झल् (पा)

इत्यपि न । तद्विषये इकः क्ङित्परस्यैव सम्भवादिति चेन्न "हनिदृशोर्झल्यमकित्सनि" "इको झल्" "दम्भे"रिति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वेन ज्ञापकसामाञ्ज्यात् ॥

[3]रुदविदमुषां (पा)

क्त्वासनो-

[4]र्मृडमृदगुधकुषक्लिशां (पा)

क्त्वः कित्त्वविधानं च ज्ञापकं बोध्यम् ॥

अङ्गाधिकार इति । (भा)

स्वरितलिङ्गासङ्गेनेति भावः ॥

[5]कार्य्यकालमिति । (भा)

तथाच तत्रोपस्थितत्वादिदमप्याङ्गमङ्गाधिकारस्यैकवाक्यतापन्नत्वादिति भावः । स्वरितत्वासङ्गवशात् तदधिकारपठितमिव तद-

---

१ सर्वपुस्तके परस्मैपदविशिष्टः पाठः तथा नागेशहस्तपुस्तकेऽपीति ग्रन्थकर्त्तुरेव भ्रमः । ज्ञाश्रुस्मृदृशाम् ( १ । ३ । ५७ । ) इत्यात्मनेपदस्य व्यवस्थापितत्वाद् "दिदृक्षते" इति पाठः ॥

२ अ १ । पा २ । सू ९ ॥

३ अ १ । पा २ । सू ८ ॥ ४ अ १ । पा २ । सू ७ ॥

५ परिभाषेन्दुशे—३ । कार्यकालं संज्ञापरिभाषम् ॥

धिकारस्यैकवाक्यतापन्नमपि गृह्यते इति तात्पर्य्यम्। निषेधेऽपि परिभाषासादृश्यात् परिभाषात्वमुक्तम्। सादृश्यं च निषेध्याकाङ्क्षतया तदेकवाक्यतामात्रेणेति बोध्यम्॥

[1]छान्दसमिति। (भा)

[2]यङोऽचि चेति (पा)

चेन

[3]बहुलं छन्दसी- (पा)

त्यनुकृष्य यङो लुग्विधानादित्यर्थः॥ न च

[4]हुश्नुवोरिति (पा)

सूत्रस्थेन "हुश्नुवोरि"त्यस्य भाषायां यङ्लुक्सत्ताज्ञापकत्वपरभाष्येणोवर्णान्तेभ्यो यङ्लुग् भाषायामप्यस्तीति लभ्यतेऽन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम्। तत्प्रामाण्येनाजादौ क्ङिति क्वचित् तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाभावात्। तत्रत्य भाष्यस्यैकदेश्युक्तित्वाच्च॥

गुणो बहिरङ्ग इति।

गुणस्य बहिरङ्गता बहिर्भूतसार्वधातुकाश्रयत्वात्। नन्वसिद्ध-स्यानिष्पन्नस्यैव निषेधः क्रियते तत्राह

असत्त्वादिति। (कै)

---

१ "अथवा छान्दसमेतत्"। भाष्ये॥

२ अ २। पा ४। सू ७४॥ ३ अ २। पा ४। सू ७३॥

४ हुश्नुवोः सार्वधातुके। अ ६। पा ४। सू ८७॥

शास्त्रासिद्धत्वाद्वासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः ॥ उभयविशेषणाय

**बहुव्रीह्यर्थम्** (कै)

[1]इत्यन्वयः ॥

**[2]यथेति ।** (कै)

[3]प्रथमस्येत्येतत्तुकर्मधारयेऽपि विशेष्यं शक्यं कर्त्तुमिति न तद् बहुव्रीहिगमकमिति भावः ॥ ननु सूत्रान्तरप्राप्तनिवृत्तिः कथं तत्राह

**सामर्थ्यादिति ।** (कै)

अयमाशयः । "आर्द्धधातुक" इति योगो विभज्यते "धातुलोप" इति वर्त्तते षष्ठीतत्पुरुषश्च । एवं च धात्वेकदेशलोपे सति प्रत्यासत्त्यान्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेत् आर्द्धधातुक एवेति नियमस्तत्सार्थक्यादिति तद्ध्वनयन् आह

**यङ्निमित्तस्येति ॥** (कै)

**भाषेति ।** (कै)

**[4]हुश्नुवोः सार्वधातुके** (पा)

इत्यत्र श्नुग्रहणादिति भावः ॥

---

१ इति भावः । क ॥

२ "यथेति" इत्यारभ्य "इति भाव" इत्यन्तं नास्ति । क ॥

३ प्रथमस्येत्येतत्कर्मधारये । ख । ग । ङ ॥

४ अ ६ । पा ४ । सू ८७ ॥

## इत्यादिभ्य इति। (कै)

आदिना ह्रूर्च्छामूर्च्छौ॥

## [1]राल्लोप इति। (कै)

तत्र हि क्ङितीति नानुवर्त्तते तदनुवृत्तिपक्षे "तोतोर्मौ"-त्याद्युदाहरणम्॥ नन्वेवमपि "क्ङिति चे"ति निषेधोऽत्र दुर्वार इति तद्वारणं विनाऽस्य चारितार्थ्यं कथं अत आह

## अनेनेति॥ (कै)

बहिरङ्गराल्लोपस्यान्तरङ्गे यङाश्रयप्रतिषेधे कार्य्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानादप्राप्तिः। सनः कित्त्वेन तु एक व्यवधानमेवाश्रितमिति भावः। वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाश्रयणीयम्॥

नन्विग्लक्षणयोरित्युक्तावपि लैगवायने इक् स्थानिकत्वेनेग्लक्षणत्वात् स्यादेव गुणनिषेधोऽत आह

## इक इतीति। (कै)

अर्थाधिकारानुरोधेन पदपरमेवेक इति सम्बध्यत इति भावः॥

## लोपादिति। (कै)

उपदेशकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः॥

## पिद् ङिद् नेति। (कै)

## [2]सार्वधातुकम् (पा)

---

१ अ ६। पा ४। सू २१॥

२ सार्वधातुकमपित्। अ १। पा २। सू ४॥

इत्यत्र "अपिदिति" योगविभागेन प्रसज्य प्रतिषेधेनायमर्थो लभ्यते। तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्त्या वा ङित्त्वप्राप्तिः सर्वापि प्रतिषिध्यत इत्याशयः॥ भाष्ये

स्थानिवद्भावः प्राप्नोतीति। (भा)

तथा च

अचिनवम् (भा)

इत्यादौ गुणप्रतिषेधप्रसङ्ग इति भावः॥

ननु ङित इति। (कै)

तथा च न स्थानिवत्त्वेन ङित्त्वं प्रार्थ्यमिति भावः॥

ङिद् व्यपदेश इति। (कै)

स्थानित्वसंबन्धिङत्वेत्संज्ञाऽभाव एव ज्ञाप्यते॥

[1]लस्य (पा)

इत्यस्य लघटितस्येति व्याख्या कार्य्येत्यर्थः॥

यत्कार्य्यं पूर्वस्येति। (कै)

प्राप्तमिति शेषः॥

नत्विति। (कै)

प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः॥

युक्त्यन्तरमप्याह

---

१ अ ३। पा ४। सू ७७॥

अन्यथेति। (कै)

लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः। ङित आदेश-स्येत्यर्थस्तु नेत्युक्तमेव ॥

तदभावस्यैवेति। (कै)

ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ भाष्ये

[1]यासुट एव (भा)

इत्यस्य न समुदायस्येत्यर्थः। एवस्यावधारणार्थत्वात्। यदि समु-दायस्य ङित्त्वं स्यात् तदा ङितो यत्कार्य्यं तदपि तत् प्राप्तियोग्य-मिति तदभावमपि ज्ञापयेत् ॥ तथा

[2]नित्यं ङित (पा)

इत्यादेर्ङित आदेशस्येत्येवार्थः। पचावः पचन्तीत्यादौ तु न दोषः।

[3]सार्वधातुकमपित् (पा)

इत्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्य्यस्यैवाति-देशादिति भावः ॥ न च यासुटि ङिति किं कार्य्यं प्राप्नोति तन्निमित्तग्रहणेन निषेधाप्राप्तेरिति वाच्यम्। संप्रसारणप्राप्तेः। न हि तत्र प्रत्यय इत्यस्तीत्याहुः ॥ नन्ववयवे श्रुतस्य लिङ्गस्य समुदा-यविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव। अत एव तन्निमित्तग्रहणेऽपि निषेधः सिद्ध्यति तत्र स्थानिवत्त्वेन

---

१ यासुट एव ङिद्वचनात्। भा ॥
२ अ ३। पा ४। सू ९९ ॥
३ अ १। पा २। सू ४

सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्याद् ङितो यत्कार्य्यं तदभावस्यापि वा ज्ञापकं स्याद् अत आह भाष्ये

**अपर्य्याप्तश्चेति । (भा)**

अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वादवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वमत एव पठिता विद्येत्यादौ ङीब्नेति भावः ॥

**ङितं चैनम् इति (भा)**

अवयवमित्यर्थः ॥

**यासुट एव हीति । (कै)**

यासुड् ङिदिति सामानाधिकरण्याद् यासुट् पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादिलक्षणायां मानाभाव इति भावः ॥

**प्रत्याख्यातत्वादिति । (कै)**

स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये ॥

**यदि च समुदाय इति । (कै)**

ननु स्थानिवत्त्वेन ङित्त्वे यासुटः कथं ङित्त्वमिति चेन्न । तद् ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः ॥

**केषां चिदिति । (कै)**

अत्र पाठे "यासुट एव" इत्येवकारः प्रसिद्ध्यर्थकः । केवलयासुटो ङित्त्वं व्यर्थं गुणनिषेधे तन्निमित्तग्रहणात् । संप्रसारणमपि

धात्वाचिप्ते प्रत्यये एव । एवं च सामर्थ्यात् समुदायविशेषकं तदिति भावः ॥

ङितश्चैतमिति । (कै)

स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपीति शेषः ॥

ङितो यत्कार्य्यम् (भा)

इत्यादि ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ न हि यासुड् विशिष्टस्य ङित्त्वप्रयुक्तं किञ्चिदनेन ङित्त्वेन प्राप्नोति ॥

[1]नित्यं ङित (पा)

इत्यस्य च ङितो लस्येत्येवार्थात् । आदेशस्य ङित इत्यर्थे तु दोष उक्त एव ।

[2]सार्वधातुकम् (पा)

इत्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन सप्तम्यन्ततया अन्याय्यत्वादिति भावः । नन्विदं ङित्त्वं "सुयादि"त्यादावनिग्लक्षणगुणवृद्धिबाधनार्थं "चिनुयुरि"त्यादौ

[3]जुसि चेति (पा)

निषेधार्थं च चरितार्थमिति चेन्न । "ङिच्च पिन्नेति" भाष्योक्तकल्पनयैव सिद्धेः । एतदर्थमेव हि भाष्ये तत्स्वीकारः । यत्तु संज्ञा-

---

१ अ ३ । पा ४ । सू ९९ ॥
२ अ १ । पा २ । सू ४ ॥
३ अ ७ । पा ३ । सू ८३ ॥

पूर्वकविधेरनित्यत्वेन वृद्धेर्वारणम् । अत एवोत औदिति नासुत्रीति । तन्न । अस्यार्थस्य भाष्यास्पृष्टत्वात् ।

[1]आजनोर्जा (पा)

इत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च । अनयैवान्यथा सिद्धेः ।

जुसि च (पा)

इत्यत्र

[2]क्सस्याचि (पा)

इत्यतोऽचीत्यनुवर्त्त्याजादौ "जुसि" गुणविधानान्न "चिनुयुरि"-त्यत्र दोषः । एवं चात्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम् ॥

---

# दीधीवेवीटाम् ।१।१।६॥



भाषायामिति । (कै)

अनन्यभावो हि विषयशब्दार्थ इति भावः ॥

दृष्टस्यैवेति । (कै)

भाषायान्तु सम्प्रति प्रयोगेऽदृष्टस्यापि व्याकरणान्तरानुसारेण शिष्टप्रयोगादिना वावगतसाधुत्वस्याप्यनुविधानमित्यर्थः । एवं च

---

१ अ ७ । पा ३ । सू ७९ ॥　२ अ ७ । पा ३ । सू ७२ ॥

वेदे "आदीध्यनम्" इत्यादिलक्ष्याभावादसम्भवदुक्तिकं सूत्रमिति भावः ॥

**अथवेति ।** (कै)

एवं च लक्षणस्याव्याप्तिप्रतिपादकं भाष्यमिति भावः ॥

**व्यत्ययेनेति ।** (कै)

दीधीङो ङित्वात् ॥ परस्मैपदोपलक्षणं

**तिबिति ॥** (कै)

**अन्तरङ्गत्वादिति ।** (कै)

नन्वेवं बहिरङ्गस्य "जुसि" गुणस्य कथमनेन निषेध इति चेन्न सर्व्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयान्तरङ्गनिषेधाभावादिति भावः ॥

सर्वथैतन्न्यायानाश्रयणे हेतुमाह

**कार्य्यविशेषेति ।** (कै)

यच्छब्देन तत्तद्रूपेण कार्य्याणां परामर्शादिति भावः । केचित्तु सामान्यचिन्ताविषयेऽप्येतं न्यायं योजयन्ति तदा "येनेत्यस्य" स्वेतरेणेत्यर्थः ॥ भाष्ये

**अकणिषमिति ।** (भा)

णिजन्तस्याङ्गस्य मिपोऽमि लघूपधगुणः प्राप्नोति ॥

**श्वः** (भा)

प्रयोगो लुडर्थः । तत्र हि तिपो डादेशे टिलोपे च तास् प्रत्ययान्तमङ्गं भवति । इचि आमङ्गलाक्ष गुण प्राप्तिरिति भावः ॥ भाष्ये

पुनरिड्ग्रहणस्येति। (भा)

न च नेत्यस्यनिवृत्त्यर्थं तत् स्पष्टञ्चेदं

[1]नेड्वशी- (पा)

त्यत्र भाष्ये इति वाच्यम्। "क्वचिदेकदेशोऽप्यनुवर्त्तते" इति न्यायेन

[2]नेड्वशी- (पा)

त्यत्र नञो निवृत्तिसिद्धेरिति भावः॥ वस्तुतस्तु अचत्यमिदं भाष्यमेकदेश्युक्तिः॥

[3]आर्द्धधातुकस्य (पा)

इति सूत्रस्थेड्ग्रहणस्य च

[4]नेड्वशी- (पा)

तिसूत्रे भाष्ये प्रत्याख्यानात्। तत्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात्। अङ्गस्येत्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्य्यादयाऽलाभाच्च। अन्तेऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम्॥

क्विबिति। (कै)

अप्रत्यय (भा)

इत्यस्याश्रूयमाणः प्रत्यय इत्यर्थः। कृदन्तत्वात् प्रातिपदिकत्वे स्वादयः॥

झलन्तत्वाभावादिति। (कै)

---

१. २. ४. नेड्वशि कृति। अ ७। पा २। सू ८॥

३ आर्द्धधातुकस्येड्वलादेः। अ ७। पा २। सू ३५॥

स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम्॥ ननु क्ङौ लुप्तस्य स्थानिवत्त्वनिषेधादृलोपस्य स्थानिवत्त्वं दुर्लभमत आह

क्ङाविति॥ (कै)

अलावीदित्यत्रेति। (कै)

न च समार्त्तित्यत्र

[1]ह्रस्वादङ्गात् (पा)

इति "सिज्" लोपाय सिद्धत्ववचनं चरितार्थं सिद्धत्वेहि परत्वात् सिज्लोपे ततो वृद्धिरन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम्।

लावस्थायामडिति (भा)

पक्षे सर्व्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिजलोपाभावस्यैवौचित्येन "समार्ष्ट"-त्येवरूपस्यौचित्यात्। सत्यभिधाने।

[2]सिज् लोप एकादेश (वा)

इति तु सिजलोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम्। वस्तुतो नियमस्यैकदेशयुक्तित्वादिफलोऽयं विचार इति तत्त्वम्॥

---

१ अ ८। पा २। सू २७॥

२ स्वरितो वानुदात्ते पदादौ (अ ८। पा २। सू ६) एतत्सूत्रस्थ-वार्त्तिकम्। सिद्धान्तकौमुद्यान्तु "इट ईटि" (अ ८। पा २। सू २८) इति सूत्रे पठितम्॥

# हलोऽनन्तराः संयोगः।१।१।७॥



अन्तराशब्दो मध्ये इत्यर्थे॥

न त्वाधारस्येति। (कै)

कालमात्रस्येत्यर्थः॥

अर्द्धेति। (कै)

वर्णाद्वर्णोच्चारणेऽर्द्धमात्राकालस्य नियतत्वात् तदधिकोऽर्द्धमात्राकाल इत्यर्थः। अत एव "मात्राकालोऽवग्रह" इति प्रातिशाख्यान्तरैरविरोधः।

नैव दोष (भा)

इत्यादेः संज्ञाभावे न दोषः। संज्ञायां च न प्रयोजनमित्यर्थ इत्याह

दोषनिवृत्तये (कै)

इत्यादि॥

अप्सव्यशब्द इति। (कै)

अप्शब्दाद्

[1]दिगादि (भा)

यति

१ दिगादिभ्यो यत्। अ ४। पा ३। सू ५४॥

[1]अपो योनियन्मतुषु (वा)

इत्यलुक् ॥

प्रकृत्यवयवस्य। (कै)

तद्धितप्रकृत्यवयवस्य। अत्र च वैदिकसम्प्रदाय एव शरणम् ॥

अन्त इति। (कै)

समासे समस्यमानपदान्ते एवावग्रहः। अयमपि वैदिकसम्प्रदाय एव ॥

नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह

आनन्तर्येति। (कै)

एवं च तदुपलक्षणमिति भावः॥ "संज्ञाप्रतिबन्धे"तिपाठे कर्मणि "घञ्" बोध्यः ॥

संज्ञाप्रतिबद्धेति (कै)

पाठः सुगम एव ॥

कस्मादिति। (कै)

बहूनां सन्निधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः॥ परिहरति

एत्वे इति। (कै)

"पूर्वत्रासिद्धीयमद्विर्वचने" इति तु द्विर्वचने कार्येऽन्यस्यासिद्धत्वं नेत्यर्थकं न तु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः ॥

---

१ अलुगुत्तरपदे (अ ६। पा ३। सू १) एतत्सूत्रस्थवार्त्तिकम्॥ यन्मतुष्विति। अयं पाठो हरदत्तानुसारेण। "मतिषु" इति युक्तः पाठः। एकवच इत्यस्यातिप्रसङ्गव्याजेनाप्सु चरादिवदस्य भाष्ये उपन्यासात्। नहि अप्सुमन्ताविव्यत्र तस्य प्रसङ्गोऽस्तिशब्दपरतया तस्यैकत्वमाचार्यत्वात्। किन्तु मतुष्विति पाठे फलं चिन्त्यम्। अस्य वामीयमित्यादाविव लुकोऽप्राप्तेः ॥

## संयोगो भवत्यादिश्चेति । (कै)

प्रत्येकं संज्ञापक्षे स्कोः संयोगावयवत्वासंभवेन षष्ठीसमासासम्भवाल्लाघवाच्च कर्मधारय एवेति भावः । आदिशब्दश्च पूर्वभूतसमीपवाची आदित्वं च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् । अन्यथा हि अर्कयतेरप्रत्ययेऽर्क् इत्यादावन्त्यककस्यापि लोपः स्यात् ॥

## कथं हन्ताविति । (कै)

अयं पूर्वपक्षोऽयुक्तः । संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाभावात् । संयोगत्वेनैवानेकसंयोगप्रतीतेः । न हि वृत्तावनेकबोध उपसर्जनात्वेति भाष्यमम्मतं संख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् ॥

## संयोगात्पर इति । (कै)

न चाङ्गावयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्द्धधातुकविवक्षायां तस्याऽऽल्लोपविधानात् । तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादौ एत्ववारणं फलमिति वाच्यम् ।

## [1]स्यसिच् (पा)

सूत्रादुपदेशपदानुवृत्त्या "घुमास्था"इत्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाप्रवृत्तेरिति भावः ॥ खट्वादिभ्य

---

१ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ अ६ । पा४ । सू६२ ॥

[1]आतो धातो- (पा)

रितिसूत्रस्थभाष्यप्रामाण्येनाचारक्विपोऽभावाच्च । सिद्धान्ते तु "निर्यायादि"त्यादि वारणायाङ्गावयवसंयोगग्रहणाय तदिति बोध्यम् ॥ भाष्ये

आदौ इति । (भा)

यद्यपि मुख्यादित्वमुभयोर्व्याहतं तथाप्येक आदिशब्दो गौण इति भावः । पूर्ववद् द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थ उभयत्रापि द्विवचनोपपादनादत आह

षष्ठीति । (कै)

एवं च झल्ग्रंशेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः ॥ आदिशब्दस्य नाद्यवयववाची असम्भवादित्याह

समीप इति । (कै)

झलादिविशेष्यस्य संयोगस्योपसर्जनत्वेऽपि सौत्रत्वाद्वृत्तिः । न च

शङ्का (भा)

इत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः । आदिग्रहणसामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तेः ॥ वस्तुतस्तु "प्रत्येकं संज्ञेति" पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति भाष्ये

---

१ अ६ । पा४ । सू१४० ॥

**कथं ज्ञात्वेति** ॥ (भा)

तमेवालाभं व्याचष्टे

**संयोगेति** । (कै)

एवं चान्वर्थसंज्ञाविरोधात्

[1]**प्रत्येकं वाक्यपरिसमाप्ति-** (भा)

न्यायो नाश्रयितुं शक्यते इति व्यर्थं

**सहेतौ-** (कै)

ति भावः । किं च श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षण-माश्रयितव्यं विशेषणत्वमेवोचितम् । "तत्त्वे सम्भवति उपलक्षण-त्वस्यान्याय्यत्वात्" । किं च आद्यन्तग्रहणसामर्थ्याद् द्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः । बहुवचनान्तेनापि सम्भवादि-त्याहुः ॥ वस्तुतोऽन्वर्थसंज्ञा चिन्त्या । तदाश्रयणे घटपटौ संयुज्येते यचेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रती-तेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्ता-वनिष्टापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव न्यायः । अत एव भगवता "गर्गदण्डन"न्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं न तु महासंज्ञया इत्यलम् ॥

ननु

**अविशेषेण** (भा)

---

१ "प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । तद्यथा । वृद्धिगुणसंज्ञे प्रत्येकं भवतः" ॥ इत्यत्रैव भाष्ये ॥

इत्यस्य द्वयोर्बहूनां चेति नार्थोऽस्याविशेषस्याग्रे वक्ष्यमाणत्वान्मस्जौ दोषदानासङ्गतेश्चात आह

द्वयोरित्यस्येति॥ (कै)

अत एव भाष्ये

[1]समुदाये संयोगादिलोप (भा)

इति वक्ष्यति। तत्र युक्तिमाह

यथेति (भा)

भाष्ये॥ "पूर्वं धातुरुपसर्गेण"त्याश्रित्य क्वचित्। क्वचिच्च वाक्यसंस्कार-पक्षाश्रयेण दोषोपन्यासः॥

हल इति जाताविति। (कै)

वस्तुतो हलौ च हलश्चेत्येकशेषः।

[2]स्वरिताद् (पा)

इति सूत्रे "अनुदात्तानाम्" इत्यत्र भाष्ये तथैव वक्ष्यमाणत्वात्॥

परे अनन्तरा इति। (कै)

[3]तस्मादित्युत्तरस्य (पा)

इत्युपस्थितेरिति भावः॥ "चन्द्रीयतेः" सनोऽभिधाने "यथेष्टं नामधातुषु" इति द्वितीयैकाचो द्वित्वं नकारसहितस्यैव। आद्यवयवाचः परत्वाभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम्॥

---

१ कस्मात्र विशेषः। समुदाये संयोगादिलोपो मस्जेः। समुदाये संयोगादिलोपो मस्जेर्न सिध्यति। अत्रैव भाष्ये॥

२ स्वरितात्संहितायामनुदात्तानाम्। अ १। पा २। ३९॥

३ अ १। पा १। सू ६७॥

## बहूनां चाविवरत्वे इति। (कै)

"बहूनां चानन्तरत्वे" इति क्वचित् पाठः॥ नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसंज्ञा स्यात् तयोर्मध्ये वर्णशून्यछिद्राभावादिति चेन्न। वर्णशून्यकालव्यवायमात्रवारणे फलाभावात् सामर्थ्येन सवर्णकालव्यवायोऽपि व्यावर्त्त्यत इत्यदोषः॥

## द्विर्वचनवदिति। (कै)

## एषाम् इति (भा)

बहुवचनादिति न भ्रमितव्यम्।

## [1]तस्य

सूत्रे "हल" इतिवत् सत्त्वात्। "अन्तरा"शब्देन विग्रहेऽपि तत् सत्त्वाच्च॥ अन्यथा द्वयोर्नस्यात् किन्त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः। संसर्गविप्रयोगावेव भाष्ये दर्शयति

## द्वयोश्चैवेति। (भा)

## विद्यते (भा)

इत्यन्तं दृष्टान्तार्थम्॥ "अवत्सा धेनुरि"त्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः॥ "अन्तराविद्यत" इति "न विद्यत" इति वा यत् तद् द्वयोरेवेत्यर्थः॥

## नियताऽवधिरुपतेति। (कै)

---

[1] अ१। पा३। सू९॥

अवधित्वं हि अन्यासहितत्वे एव तयोर्नियमेन भवति। अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिरवधित्वविवक्षायामेव च द्वितीयेति भावः। यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम्॥ नियतत्वमन्यासहितत्वं तद्विशिष्टेन याऽवधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः। अन्यथा अवधित्वविवक्षायां द्वितीया तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन

**नियतेति** (कै)

कथनमधिकं स्यादिति बोध्यम्॥

**युक्तग्रहणादिति।** (कै)

न च तदभावे "अन्तरान्तरेण" शब्दाभ्यां द्वितीयापत्तिः। तयोरव्ययत्वेन विशेषाभावात्। न च प्रथमाबाधनेन

**[1]सपूर्व्वायाः प्रथमाया** (पा)

इत्यस्याप्रवृत्त्यर्थम्। व्यवस्थितविभाषया तस्य सुपरिहरत्वात्॥ तस्माद्

**युक्त-** (कै)

ग्रहणं सम्बन्धविशेषस्य प्रतिपादनाय अवधित्वस्य प्रतियोगित्वस्य वा। तेन प्रयोगमन्तरेणेत्यपि सिद्धम्। एवं च सम्बन्धमात्र विवक्षाया षष्ठ्येवेति भावः॥ ननु भाष्ये

**द्वयोरिति** (भा)

षष्ठीद्विवचननिर्द्दिष्टस्य द्वित्वाद्

---

१ अ ८। पा १। सू २६॥

**यान् हीति** (भा)

बहुवचननिर्देशोऽनुपपन्न इति चेन्न। प्रकृते "द्वयोरि"त्यनेन न केवलौ वर्णौ निर्दिष्टौ तथा सति तयोरेवावधित्वे द्वितीयापत्तिः। किन्त्वन्यसहितावपि। अत एव षष्ठी। एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्त्तिहलां बहुत्वात् तदुपपत्तिः।

**अनन्तरा** (कै)

इत्यनेन च न विद्यतेऽन्तरा यौ वर्णौ तौ यौ च समुदायावन्तरा न विद्येते तौ च गृह्यन्ते एकशेषादिति न दोषस्तत्सर्वमभिप्रेत्याह

**यदा द्वयोरिति।** (कै)

द्व्यवयवकसमुदाययोरित्यर्थः॥

**यान्** (भा)

वर्णान् द्वयोः समुदाययोरित्यर्थक-

**षष्ठ्या प्रतिनिर्दिशतीति-** (भा)

भाष्यार्थ इति भावः॥

**अनन्तरा** (कै)

इत्यस्याच पक्षे व्यावर्त्यं दर्शयन् पूर्वोक्तमेवार्थं दृष्टान्तेनोपपाद-यितुमाह

**[1]यदा हि बह्वनामिति।** (कै)

---

१ यदा बह्वनामिति। ख॥

न च स्रष्टेत्यादौ रेफसकारयोर्वर्णयोरन्तरा कस्यचित्सत्त्वेऽपि सरौ रषौ चेतिसमुदायौ तयोस्त्वन्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम्। वर्णयोरन्तरा विद्यमानत्वेनानन्तरत्वाभावात्। सर्वविधानन्तरत्वस्यैव[1] तन्निमित्तत्वादित्याहुः॥

[2]अनुषङ्गो (कै)

नकारस्तल्लोपः

[3]अनिदिताम् (पा)

इत्यनेन॥

[4]बहूनामपीति (कै)

न्यायतः सूत्रात् सम्भवमात्रेणेदमुक्तम्। न तु फलोदाहरणमस्य न्याय्यमस्ति। ध्वनितं चेदम्

[5]अङ्गेन संयोगादिम् (भा)

इति ग्रन्थेन भाष्ये॥ ननु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्प्रत्युत्थानमत आह

कार्येति। (कै)

द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम्। एकस्याचो

१ निमित्तत्वादित्याहुः। क। ख। ग। ङ॥

२ "तच्चानुषङ्गलोपार्थमवश्यं वक्तव्यम्" इति कैयटे॥

३ अ ६। पा ४। सू २४॥

४ "बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः" इति कैयटे॥

५ "अङ्गेन संयोगादिं विशेषयिष्यामः" इति वक्ष्यत्यत्रैव॥

बह्ववयवत्वं युगपद्विरुद्धं च। एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् ॥

ननु पदान्तरेण व्यवधानादासत्त्यभाव इत्यत आह

[१]पाठेति। (कै)

शब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात् तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः ॥

पदधात्ववयवेति। (कै)

[२]संयोगादे- (पा)

रित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः ॥ अयमाशयः। अङ्गादेरादावन्ते वा व्यञ्जनत्रयाभावात् त्रयाणां फलाभावात् संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यादिति। यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नान्यस्येति

अङ्गेन संयोगादिं विशेषयिष्याम (भा)

इत्यनुपपन्नं तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामः॥ अङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाऽऽश्रयणमित्यर्थ इति न दोषः। एवं च "बहूनामपी"त्याश्रयणे फलाभाव इति स्पष्टमेवोक्तम्। क्लिष्टकल्पनया [३]तादृशसंयोगानयनन्तु न। अनभिधानादित्याशयः। अदादिषु

---

१ "पाठक्रमादार्थक्रमो बलीयान्" ॥

२ संयोगादेरातो धातोर्यण्वतः। अ ८। पा २। सू ४३ ॥

३ 'ख' पुस्तके "न" इति नास्ति तत्त्वमुद्रम् ॥

"घस स्वप्ने" इत्येव पाठो न तु "घस, मस्ति स्वप्न" इति॥

एतद्भाष्यप्रामाण्याद्

¹जक्षित्यादि-

सूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम्॥

**व्याख्यानान्तरमिति। (कै)**

पाठक्रमाबाधायैवं व्याचष्टे

**न प्राप्नोतीति (भा)**

अत्र इति शब्दो यस्मादर्थ उत्तरान्वयी यस्मादङ्गेन संयोगादिर्विशेष्यतेऽङ्गावयवः संयोगो गृह्यते इत्यर्थः। एवं च बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्माद्

**एत्वं न प्राप्नोतीति (भा)**

यदपि तदप्यसत्॥ यतोऽविशेषेण संज्ञोच्यते इति शेष इति तत् क्लिष्टं शेषपूरणात्। इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च।

**एवं तावत् सर्वमाङ्गं परिहृतम् (भा)**

इत्यस्यास्वारस्याच्च॥

**हल इतीति। (कै)**

तद्धि असावित्यादौ

---

१ अ६। पा१। सू६॥

[1]स्कोरिति (पा)

सलोपवारणायावश्यकमिति भावः ॥

नचेति । (कै)

आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः ॥ प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितो हल्त्वेव प्रतियोगित्वेनाश्रीयत इति बोध्यम् ॥ भाष्ये

[2]उवोषेति (भा)

प्रसङ्गोच्चारितम् । तस्य विकल्पितामुकत्वात् । 'उवोखेति' कवर्गद्वितीयान्तो वा पाठः ॥

[3]इयायेति । (कै)

इण् ल् इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति गुरुमत्त्वन्तु न । नचेयङि कृते गुरुमदिजादित्वादाम् स्यादिति वाच्यम् । लिड् धातुसन्नियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः ॥

[4]कुलम् (कै)

अत्र गृहम् ॥

---

१ अ ८ । पा २ । सू २९ ॥

२ "इयेष उवोष इजादेश्च गुरुमतोऽनृच्छ इयाम् प्रसज्येत" इति भाष्ये ॥

३ "गुरुमद्वचनम् इयाय इत्यादिनिवृत्त्यर्थं स्यात्" इति कैयटे ॥

४ "एवं कश्चित् पृच्छति । अनन्तरे एते ब्राह्मणकुले इति । स आह नानन्तरे वृषलकुलमनयोरन्तरेति" इति भाष्ये ॥

**ब्राह्मणकुलमपीति।** (कै)

तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः॥ भाष्ये

**अनयोरन्तरेति** (भा)

षष्ठ्युपादानादव्यवहितयोरवधित्वसूचनात् [1]तत्तद्रूपेणाग्रहणबोधनाद् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये॥

**भिन्नजातीयेति।** (कै)

**[2]तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति** (भा)

भाष्येणेत्यर्थः॥

**[3]ग्रामशब्दोऽयम्** (भा)

इत्यस्य

**[4]तद्यः सारण्यक** (भा)

इत्यस्य चाविरोधायाह

**केचिदिति।** (कै)

अन्यायश्चानेकार्थत्वमिति तदाशयः। "सामान्यं" च ग्रामशब्दत्वादि॥

---

१ तद्रूपेण। क॥

२ "व्यवहितेऽप्यनन्तरशब्दो दृश्यते। तद्यथा। अनन्तराविमौ ग्रामावित्युच्यते तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्ति" इत्यत्रैव भाष्ये॥

३ "ग्रामशब्दोऽयं बह्वर्थः" अत्रैव भाष्ये॥

४ "अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते। तद्यथा। ग्रामो लब्ध इति। तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत् प्रयुज्यते" इत्यत्रैव भाष्ये॥

अन्ये त्विति। (कै)

व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः॥

तच्चेति। (कै)

निरूपकभेदाच्छक्तिभेद इति भावः॥

एकेति। (कै)

समवायैकत्वनये "रसो रूपवान्" इत्यादिप्रयोगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः। तदर्थसम्बन्धेन शक्यग्रहात्। तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः॥

तच्च यदेति। (कै)

एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम्॥

ग्रामशब्दोऽयं बह्वर्थ इति (भा)

तु मुख्यार्थमेव। अत्र सर्वार्थनिरूपितवृत्तीनां वर्त्तते इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः। तत्र वर्त्तनक्रिया अस्तिक्रियायाः कर्त्रौ शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः॥ वाटपरिक्षेपो नाम शालासमुदाय रक्षणाय सर्वतो मार्गप्रतिरोधकं यत् परितः क्षिप्यते तदुच्यते॥ सारण्यकससीमकवृत्तिस्तत्र न गृह्यते इत्याह

शुचाविति। (कै)

सीमनीति च॥ (कै)

---

# मुखनासिकावचनोऽनुनासिकः।१।१।८॥

[१]प्राण्यङ्गत्वादिति। (कै)

एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम्॥

[२]अर्थ इति। (कै)

अभिमतोऽर्थ इत्यर्थः॥ सौत्रत्वादिति कुतो नोक्तमित्यत आह

प्रसङ्गेनेति॥ (कै)

[३]अबाधकत्वेति। (कै)

पक्षे तु (कै)

इत्यनेनाबाधकत्वस्वीकर्त्तृवृत्तिमतमसङ्गतमित्युक्तम्। भाष्यकृदसम्मत-रूपापत्तेः॥

[४]बाधकान्येव निपातनानीति (भा)

[५]सर्वादि- (पा)

सूत्रे भाष्योक्तेः॥

१ प्राण्यङ्गत्वात् समाहारद्वन्द्वे क्लीबत्वेन भाव्यम्॥ कै॥

२ अवचनमिति नञ्समासाश्रयणे अर्थो न सङ्गच्छत इति प्रश्नः। कै॥

३ अबाधकत्वपक्षे तु भाष्यमेव। कै॥

४ बाधकान्येव हि निपातनानि भवन्ति (१।१।२७) भाष्ये।

५ अ।१।पा१।आ२७॥

**अस्मिन् पक्ष इति ।** (कै)

आङ्‌रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्‌रहितै-तत्पद्वचनपदाभ्यां समासस्यानभिधानमेवेत्याहुः ॥

ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयोगस्तत्रासङ्गतोऽत आह

**[1]यो हीति ॥** (कै)

**सहायेति ।** (कै)

अव्युत्पन्नो द्वितीयशब्दः सहायवाचीत्यर्थः ॥

[2]शाकपार्थिवादित्वाद् उत्तरपदलोपे शब्दानित्यत्वापत्तिरत आह

**तत्रेति ।** (कै)

परन्त्विदं चिन्त्यम् । भाष्यकृता एवं रीत्या तद्प्रत्याख्यानात् ॥

**मुखस्य चेति ।** (कै)

उपशब्दस्य सामर्थ्यादिति भावः ॥ यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनः । मुखनासिकया वचन इति वा तत्पुरुषोऽपि वक्तुं शक्यस्तथापि कर्मणि तस्य बाहुलकलभ्यत्वात् करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये ॥ तत्रान्ययोर्नासिकाशब्द-सामानाधिकरण्यात् स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि

१ यो हि ईमदुच्यते स उच्यत एव । कै ॥

२ वर्णो वर्णेन । अ २ । पा १ । सू ६९ ॥ एतत् सूत्रस्थवार्त्तिकम् ॥

[1]नद्यृतश्च (पा)

इति कबापत्तिरत आह

पदसंस्कारेति॥ (कै)

भागस्य मुखेनोच्चारणाननुभवादाह

तच्चेति। (कै)

[2]तस्यादित (पा)

इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः। ये तु तत्तद्देशावच्छिन्नवाय्वाद्यभिघातस्य तत्तद्वर्णजनकत्वात् स्थानानां करणत्वमेव। स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य। अत एवोत्तरसूत्रे भाष्ये

[3]अस्यन्त्यनेन वर्णानित्यास्यमिति (भा)

करणे व्युत्पत्तिर्दर्शितेति वदन्ति। तन्मते प्रासादवासिदृष्टान्तासङ्गतेराह

आस्येन चेति। (कै)

एतेन कण्ठादिकन्तु स्थानं नासिका तु करणमिति मन्दोक्तमपास्तम्। अत एवात्र सूत्रे हरिणा

---

१ अ ५। पा ४। सू १५३॥

२ अ १। पा १। सू ३१॥

३ "किं पुनरास्यम्। लौकिकमास्यम्। ओष्ठात् प्रभृति प्राक् काकलकात्। कथं पुनरास्यम्। अस्यन्त्यनेन वर्णानित्यास्यम्। अन्नमेतदास्यन्दते इति वा आस्यम्" (१।१।९) भाष्ये॥

"स हि वर्णो न मुखेनैव नापि
नासिकयैव चात्मवृत्तिं लभते
किन्तु वायुनाऽनुपरतशक्तिनाऽ-
न्यतरकरणमभिहत्याऽ-
न्यतरकरणेऽभिहन्यमाने आत्म-
व्यक्तिं लभते" (हरिः)

इत्युक्तम्। यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयाऽन्यतमसदृशो वर्णः। "आदितश्चत्वारो वर्णा" इति विवरणेऽपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या। अत एवायोगवाहत्वप्रतिपादक-

हयवरट् (५)

सूत्रस्थभाष्याविरोधः॥

न्यायानवतारेति। (कै)

कचटतपानामेव (भा)

इत्येवकारोऽयथैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः॥

अप्रतिपत्तिरिति। (कै)

अत्र [1]"विष्णोर्ञम" इति वक्तुं [2]शक्यम्।

[3]यरोऽनुनासिके (पा)

---

१ विष्णोर्यम इति। क। विष्णो ञम इति। ग॥

२ विष्णोर्ञम इति वक्तुं युक्तम्। ख॥

३ अ८। पा ४। सू ४५॥

इत्यत्र त्वप्रतिपत्तिः। तत्र "अभि अम्बा" [1]इत्युक्तेः सकलेष्टसिद्धेः॥

चकारलोपेति। (कै)

निष्ठावत्वकुत्वयोरसिद्धत्वात्पचेः

[2]अनुदात्तोपदेशवनति (पा)

इत्यनेनेति भावः॥

ननु [3]प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत् सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह

---

१ इत्युक्तेः सकलेष्टसिद्धेः। क। इत्युक्ते सकलेष्टसिद्धिः। ख। इत्युक्ते सकलेष्टासिद्धेः। सम्। ग। इ॥

२ अ ६। पा ४। सू ३७॥

३ अथ मुखग्रहणं किमर्थम्। नासिकावचनोऽनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत। मुखग्रहणे पुनः क्रियमाणे न दोषो भवति। अथ नासिकाग्रहणं किमर्थम्। मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत। नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति। मुखग्रहणं शक्यमकर्तुम्। केनेदानीमुभयवचनानां भविष्यति। प्रासादवासिन्यायेन। तद्यथा। केचित् प्रासादवासिनः। केचिद् भूमिवासिनः। केचिद् उभयवासिनः। ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन। ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन। ये उभयवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च। एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः केचिदुभयवचनाः। तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन ये उभयवचना गृह्यन्ते एव ते मुखग्रहणेन नासिकाग्रहणेन च। भवेदुभयवचनानां सिद्धम्॥

**अयमिति । (कै)**

योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः॥ अनुनासिकशब्दस्य च रूढिशब्दत्वम्। तस्य क्रियाशब्दत्वन्तु वक्तुमशक्यम्॥ अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य त्रमङ्गानेषु निरूपयितुमशक्यत्वाद् विनिगमनाविरहेण युगपदुभयोर्व्याप्तेः[१]। एतेन अनु पश्चान्नासिकां गत इत्यर्थको नासिकानुगत इति प्रयोगोऽपि परास्तः। यथा कथञ्चिद् योगोपादाने तु रूढिरेव फलितेति दिक्॥

---

# तुल्यास्यप्रयत्नं सवर्णम् ।१।१।९॥

**तत्पुरुष इति । (कै)**

तुल्यास्यशब्दयोः

**[२]मयूरव्यंसकादित्वात्**

पूर्वपदार्थप्रधानस्तत्पुरुषः। आस्यप्रयत्नशब्दयोश्च "साधनं कृते"त्यनेन समासः॥ ननु स्थानादिकं न तुलया संमीयते अत आह

**व्युत्पत्त्यर्थमेवेति॥ (कै)**

**किं मुखमिति । (कै)**

---

१ व्याप्तेः। ग॥

२ मयूरव्यंसकादयश्च। अ २। पा १। सू ७२॥

अतद्धितान्ततद्धितान्ताख्यशब्दविषयकसन्देह इत्याशयः॥ तद्धि-तान्तमपि लौकिकमेव न वैदिकमित्यत आह

**पशुरिति ॥ (कै)**

**झटिति । (कै)**

पदश्रवणमात्रेणेत्यर्थः ॥

**निमित्तवशात् (कै)**

अवयवार्थवशात् ॥

**जातिस्फोटेति । (कै)**

**वर्णान् इति (भा)**

वर्णपदं बोधकपरं तत्र जातेर्बोधकत्वे तस्या नित्यत्वादभिव्यक्ति-रसनम् । तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः। अत एव

**वर्णानिति (भा)**

बहुवचनं संगच्छते। एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसंगतिः स्पष्टैव ॥ कचित्तु

**व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । (कै)**

**जातिस्फोटपक्षे तूत्पत्तिः (कै)**

इति पाठः। अयमेव साम्प्रदायिकः पाठः॥ एकैव व्यक्तिर्वाचिका। कत्वादिकन्तु ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा सा च नित्येति व्यक्ति-स्फोटवादस्तदाभिव्यक्तिः स्पष्टैव ॥ बहुवचनं त्वेकस्यैव बहुरूपत्वादा-रोपित बहुत्वमादाय नेयम् ॥

**व्यक्तयोऽनन्ता जन्याश्च तत्र**

**जातिरेव शक्तेति**

जातिस्फोटवादस्तदोत्पत्तिरित्यर्थः ॥

[1]**अन्येष्वपीति** ।

दृशिग्रहणाद्धात्वन्तरादपि स इति भावः ॥ ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह

**भावे इति** ॥ (कै)

**नङ्** । (कै)

[2]**यजयाच**

इत्यनेन ॥

ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानञादिनिवृत्त्यर्थमास्यपदोपादानं स्यादत आह

**नासिकापीति** । (कै)

एवं चास्यग्रहणे कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्ह्रस्वाकारादीनां सावर्ण्यानापत्तिः ॥ तज्जनकवायुसंयोगादीनामपि तुल्यत्वात् ॥ अनवधारणगर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः ।

एवं च नासिकाया बाह्यत्वेऽपि न क्षतिः । अत एव

---

१ अन्येष्वपिदृश्यते ॥ अ ३ । पा २ । सू १०१ ॥

२ यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ अ ३ । पा ३ । सू ९० ॥

[1]मुखनासिकेति- (भा)

सूत्रे

[2]मुखं च नासिका चेति (भा)

[3]मुखद्वितीया नासिकेति (भा)

च विग्रहप्रदर्शनं भाष्ये। न ह्यवयवावयविविषये एवं प्रयोगः सचेतसाम्। सहस्तो देवदत्त इत्यादौ विद्यमानवाची सह शब्दः। अत एव

[4]मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत (भा)

इति भाष्ये एव शब्दः सङ्गच्छते। अन्यथा यमादीनां ङादीनां च मुखवचनत्वात् तदसङ्गतिः स्पष्टैव। आस्यानन्तर्गतत्वे तु न दोषः। मुखमात्रवचनत्वाभावात्। प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत्॥ कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरम्॥

---

१ अ १। पा १। सू ८॥

२ किमिदं मुखनासिकावचन इति। मुखं च नासिका च मुखनासिकम्। मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः। भाष्ये॥

३ अथवा मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः। अथ किमिदमावचनमिति। ईषद्वचनमावचनम्। किं चिन्मुखवचनं किं चिन्नासिकावचनम्। मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः। उक्तं भाष्ये॥

४ मुखनासिकेति सूत्रे भाष्ये उक्तम्॥

ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् ॥ एवकार-स्याप्यर्थः। दृष्टान्तोऽप्येकांशेन बोध्य इति ॥

नन्वेवमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह

**विसर्जनीयस्येति। (कै)**

ततश्चान्येषां कण्ठादिस्थानमेवेति भावः॥ [1]उरस्यमतेऽप्याह

**सावर्ण्याभावेऽपीति ॥ (कै)**

ननु इदानीमेव किं नोच्यतेऽत आह

**नास्येति ॥ (कै)**

**द्वन्द्वे प्रयत्नस्यास्येनाविशेषणाद् (कै)**

इत्यस्योपयोगश्चिन्त्यः ॥

**अचेति। (कै)**

एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः॥ ऊर्क् अन्नं तस्माज्जात

**ऊर्गजः॥ (कै)**

**आस्ये इति। (कै)**

देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः॥ न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम्। अनुनासिकाकारादिषु कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते इत्यनुभवेन

---

१ विसर्जनीयस्यैकीयमतेन उरस्यत्वात् सावर्ण्याभावेऽपि न दोषः। इति कैयटः॥

[1]वृद्धिरादैच् (पा)

सूत्रस्थाद्

[2]भेदकत्वाद् गुणस्येति

वाच्यम् आनुनासिक्यसंग्रहार्थं तद्यथा

एकोऽयमात्मा

इत्यादिभाष्यकैयटात् तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य क्लृप्तत्वात् । आदिष्वपि तथैवेत्यभिमानात् । देशपदेन ताल्वादिस्थानमेवोच्यते इति जवगडादिषु न दोषः ॥ भाष्ये

प्रयत्नविशेषणमिति (भा)

देशप्रयत्नमितिद्वन्द्वस्तु सौत्रत्वात् साधुरिति भावः ॥

स्पृष्टेत्यादि ॥ (कै)

आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते । तेषां चास्यान्तर्गतत्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम् ॥

---

१ अ १ । पा १ । सू १ ॥

२ भेदकत्वाद्गुणस्येति वक्तव्यम् । किं प्रयोजनम् । अनुनासिक्यं नाम गुणः । तद्भिन्नस्यापि ग्रहणं यथा स्यात् । किं च कारणं न स्यात् । भेदकत्वाद् गुणस्य । भेदका गुणः । कथं पुनर्ज्ञायते भेदका गुणा इति । एवं हि दृश्यते लोके । एकोऽयमात्मा उदकं नाम तस्य गुणभेदादन्यत्वं भवति अन्यदिदं शीतमन्यदिदमुष्णमिति । वृद्धिरादैज् इति सूत्रे भाष्ये ।

आस्ये (कै)

इत्यस्य यत्कार्यं तज्जनक इति शेषो वा॥

भाष्ये

[1]ते ह्यापिता इति। (भा)

सवर्णसंज्ञा (भा)

स्वनिमित्तत्वेन वाह्यान् प्रयत्नान् जहातीति तथा ते स्वनिमित्तत्वं "ह्यापिता" इत्यर्थः॥

विवारसंवारौ (भा)

कण्ठबिलस्य विकाससङ्कोचौ विवृतः कण्ठो यैः श्वासोऽनुप्रदीयते यैरित्यर्थः॥

[2]एके। (भा)

उक्तवाक्ययोः प्रथमोपात्ताः॥

[3]नादः (भा)

वर्णोत्पत्त्यनन्तरभावी॥

---

१ सन्ति हि आस्याद्वाह्याः प्रयत्नाः। ते ह्यापिता भवन्ति। तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति। के पुनस्ते। विवारसंवारौ श्वासनादौ घोषवदघोषता अल्पप्राणता महाप्राणतेति। अत्रैव भाष्ये॥

२ तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदाना अघोषाः। एके अल्पप्राणा अपरे महाप्राणाः॥

३ तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः। एके अल्पप्राणाः अपरे महाप्राणाः॥

# अनुः

अणनुरूपः शब्दः ॥

## [1]यथा तृतीया इति । (भा)

अनेन तेषामल्पप्राणत्वं बोधितम् ॥

देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह भाष्ये

## आनुनासिक्यमेषामधिको गुण इति । (भा)

अयं भावः । अत्र देशपदेन ताल्वादिस्थानमुच्यते स्थानशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते। तत्र यद्यपि अकारादीनां गुणमात्र जनिका नासिका स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेस्तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकयाऽभिव्यक्तिरितिविनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात् तेषां नासिकाऽपि स्थानम्। न चैवं त्वं करोषीत्यादौ चरितार्थं परसवर्णशास्त्रं सय्यँन्तेत्यादौ न प्रवर्त्तेत। उक्तरीत्या यादीनां नासिकास्थानलाभावेन स्थानत आन्तर्याभावादिति वाच्यम्

## [2]स्थानेऽन्तरतमे

इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तेर्गर्भस्रावात्। अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव। एवं हि उत्पादकसामग्री-

---

१ यथा तृतीयास्तथा पञ्चमाः। आनुनासिक्यवर्जम् ॥

२ अ १। पा १। सू ५० ॥

भेदात्कङयोरिव स्वरूपभेदस्यैवापत्तौ [1]अभेदकगुणपक्षेऽपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः । एवं च

## यावत्स्थानसाम्ये सवर्णसंज्ञेति

सिद्धान्ते नासिकारूपदेशभेदात् कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम् । नासिकाया आस्यान्तर्गतत्वेऽपि

## [2]मुखनासिकेति- (पा)

सूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यात् अत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम् । अन्यथाऽत्र 'स्थाने' एतत्कथनवैयर्थ्यापत्तिः । आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम् । नचेदं प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु । अनुनासिकयकारादीनां आदिभिः सावर्ण्यं च व्यावर्त्यम् । तत्फलं च "तञ् ञुङ्वे" "तन्नमती"त्यादौ

## [3]अनुस्वारस्य ययी- (पा)

त्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम् । अनु-

---

१ ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा । देवदत्ता मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति । तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति । उभयमिदं गुणेषु उक्तं भेदका अभेदका इति । किं पुनरत्र न्याय्यम् । अभेदका गुणा इत्येव न्याय्यम् । ( १। १। १। ) भाष्ये ॥

२ अ१ । पा१ । सू ८ ॥

३ अ८ । पा ४ । सू ॥ ५८ ॥

स्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयोर्ङनयोरेव प्रवृत्तेः। अनुनासिकयादीनां तु उक्तरीत्या न नासिकास्थानमित्यदोषात्। इदमेव ध्वनयितुं

गुण- (भा)

इत्युक्तम्। गुणपदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते। एवं च तत्सादृश्याद् अत्रापि गुणशब्दप्रयोगः॥ अत एव बाह्यप्रयत्नानुपक्रम्य "आमोऽनुनासिका न ह्वावि"ति शिक्षायामुक्तम्। अत एव

उदात्तादिभिः सहैकादश बाह्यः
प्रयत्नाः (कै)

इति कैयटो वक्ष्यति॥

उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात्। अत एव

एवमप्यवर्णस्य [1]संज्ञा न प्राप्नोति।
बाह्यं ह्यास्यात् स्थानमवर्णस्य।
एवमपि व्यपदेशो न प्रकल्पते।
आस्ये येषां तुल्यो देश इति। (भा)

भाष्यं स्वरसतः सङ्गच्छते। अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव। आस्येन देशविशेषणाभावाच्च-

---

१ भाष्ये "सवर्णसंज्ञा" इत्यस्ति॥

दोष इत्येव वक्तव्ये "सर्वमुखे" त्यादि समाधानस्यापि निर्दलत्वा-पत्तिश्च ॥

**एके** (भा)

इत्यनेन सर्वमतं तु कण्ठस्थानमिति ध्वनयति ।

**व्यवहितस्येति ।** (कै)

यद्यपि 'रूढिर्योगापहारिणी' तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः ॥

**ताल्वादीति ।**

शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः ॥ एतेन ताल्वादिषूर्ध्वाधोभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यपास्तम् ॥ आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् ॥ ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह

**[1]जिह्वाया अग्रे-** (कै)

त्यादि ॥

**प्रत्येकं त्विति ।** (कै)

प्रत्येकनिरूपित सादृश्यग्रहणनिरासार्थमित्यर्थः ॥ यद्यपि तुल्यपदेनापि प्रत्येकव्यापारनिरासः सुकरस्तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः । तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थं

१ जिह्वाया अग्रोपाग्रमध्यमूलानि वा । कैयटः ॥

[१]स्थानं करणं चेति (भा)

भाष्ये करणपदेन वायुसंयोगोऽपि प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्य्यम् ॥ अत एव यावत् स्थानैक्यपरेण

नैतौ तुल्यस्थानौ (भा)

इति भाष्येण न विरोध इति दिक् ॥ भाष्ये

[२]प्रारम्भो यत्नस्येति । (भा)

अत्र

यत्नस्येति (भा)

निर्द्धारणे षष्ठी जातावेकवचनम् ॥

आरम्भ इति (भा)

कर्मणि घञ् ॥ यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्व्वमारभ्यमाण इत्यर्थः ॥ अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम् । शब्दप्रयोगेच्छयोत्पन्ननाभिप्रदेशात् प्रेरितो वायुर्वेगान्मूर्धपर्य्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्व्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन् करोति । तत्र ये तत्तत्स्थानानामभिघातका

१ नहि लौकिकमास्यम् । किं तर्हि । तद्धितान्तमास्यम् । शरीरावयवाद् यत् । किं पुनरास्ये भवम् । स्थानं करणं च ॥

२ एवमपि प्रयत्नोऽविशेषितो भवति । प्रयत्नश्च विशेषितः । कथम् । नहि प्रयतनं प्रयत्नः । किं तर्हि । प्रारम्भो यत्नस्य प्रयत्नः ॥

यत्नास्ते आस्यान्तर्गततत्तत्कार्य्यकारित्वात् "आस्ये प्रयत्ना" इत्युच्यन्ते "आभ्यन्तरा" इति "प्रारम्भ" इति च। गलविवरादिविकाशादिकरास्त्वास्यवहिर्भूतदेशे कार्य्यकरत्वाद्वाह्याः॥ एवं मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात् प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पवायुं प्रेरयति कश्चिदधिकमिति तस्य प्रयत्नस्य वायुप्रेरणारूपकार्य्यमास्यवाह्यदेशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ता "अइउण" सूत्रे भाष्ये। [1]"मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्व्वं स्पृष्टतादयः पश्चान्निवृत्ते प्राणाख्ये" इत्यन्वयः कैयटे। अत एव

[2]"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयत-" (पा—शि)

इति न शिक्षया विरोध इति दिक्॥

भाष्ये

**यदि प्रारम्भ** (भा)

इत्यत्र "यदी" त्यस्य यद्यपीत्यर्थः॥

---

१ अत्र पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादशप्रयत्ना उत्पद्यन्ते। कै॥

२ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते तेषां विभागः पंचधा स्मृतः॥६॥

पाणिनीयशिक्षा॥

[1]अकारेणेति। (कै)

ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये "गव्यमि"त्यत्र

[2]यस्येति (पा)

लोपप्रसङ्ग इत्यभिमानः॥

प्रश्लिष्टेति। (कै)

[3]"प्रश्लिष्टौ" इत्यस्य प्रकर्षेण श्लिष्टौ मिलिताविलर्थः। ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः॥

विभागोऽत्रेति। (कै)

एवं च पूर्ववत् तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः। भाष्ये एतदुत्तरं

[4]विवृततरावर्णौ (भा)

इति। एवं च तद्द्वारा एतयोरपि विवृततरत्वेन प्रयत्नभेदाद्भेदेन न सावर्ण्यमाकारस्य ततोऽपि विवृततरत्वात् तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः॥

---

१ "एवमपीति" भाष्यप्रतीकमुपादाय "सन्ध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात् सवर्णसंज्ञाप्राप्तिरिति प्रश्नः" इत्युक्तम्॥

२ अ ६। पा ४। सू १४८॥

३ एवमप्यवर्णस्यैङोश्च सवर्णसंज्ञा प्राप्नोति। प्रश्लिष्टावर्णावेतौ। अत्रैव भाष्ये॥

४ अवर्णस्य तर्हि ऐचोश्च सवर्णसंज्ञा प्राप्नोति। विवृततरावर्णावेतौ। भा-॥

[1]एतयोरेवेति। (भा)

यत्किञ्चित्स्थानसाम्ये सवर्णसंज्ञा इत्यभिमानः॥

[2]क्वचित्। (कै)

[3]अदसोऽसेर्दादु दो मः (पा)

इत्यादौ॥ भाष्ये

नैतौ तुल्यस्थानौ इति। (भा)

[4]तोर्लि (पा)

इति परसवर्णरहित-

[5]तद्वानासाम् (पा)

इति निर्देशाद् यावत्स्थानसाम्यमत्रविवक्षितमिति भावः॥ यत्तु "एषां समुदितं स्थानम्" इति। तन्न।

[6]"——दन्त्योष्ठ्यो वः स्मृतो बुधैः।
ए ऐ तु कण्ठ्यतालव्यौ——"॥ (पा—शि)

---

१ एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति। अत्रैव भाष्ये॥

२ भाष्यमानेनापि क्वचित् सवर्णग्रहणादर्शनात्॥

[3] अ ८। पा २। सू ८०॥

४ अ ८। पा ४। सू ६०॥

५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः। ४। ४। १२५।

६ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः।
ए ऐ तु कण्ठ्यतालव्यावो औ कण्ठोष्ठजौ स्मृतौ॥१८॥
पाणिनीयशिक्षा॥

इति शिक्षायां प्रत्येकं

[1]तत्र भव (पा)

इत्यधिकारस्थयद् अनापत्तेः । "दन्तोष्ठ्य" इति पाठस्त्वसङ्गतः । शरीरावयवसमुदायस्य शरीरावयवत्वाभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः । शरीरे मे वेदनेत्यप्येवमेवेति दिक् ॥

[2]उदात्तादीनां तर्हि इति (भा)

यावत्स्थानैक्यवद् यावत्प्रयत्नैक्यविवक्षणादितिभावः ॥ "स्वशब्दा" उदात्तादिशब्दाः । एवं चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः ॥

भाष्ये

[3]उदात्तादीनां सवर्णसंज्ञा न प्राप्नोति (भा)

इत्यस्य "आस्येन"

[4]प्रयत्नोऽविशेषितः (भा)

इत्यस्य च समाधानान्तरमाहैकदेशी ।

---

१ अ ४ । पा ३ । सू ५३ ॥

२ नैतौ तुल्यस्थानौ । उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति । अभेदका उदात्तादयः । भा ॥

३ "उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति" इति पाठोऽस्त्युपलब्धभाष्यपुस्तके ॥

४ अविशेषितः । "आस्येन इत्यर्थ" इति कैयटः ॥

**अथवा किं न एतेनेति ।** (भा)

"नो"ऽस्माकमेतेन प्रारम्भोयत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन "किम्" इत्यर्थः । क्लिष्टत्वादितिभावः ॥

**बाह्यप्रयत्नभेदेऽपीति ।** (कै)

एवमुदात्तादिभेदेऽपि भविष्यतीत्यपि बोध्यम् । यद्यपि सवर्ण-संज्ञाया न प्रयत्नभेदगर्भत्वं तथापि ज्ञापकादेतदर्थसिद्धिरित्याह

**[1]झरो झरीति ॥** (पा)

भाष्ये

**[2]सत्येव हि भेदे इति ।** (भा)

यत्किञ्चित्प्रयत्नभेदे सत्येवेत्यर्थः ॥

**कुत एतदिति ।** (भा)

सूत्राचरैस्तदलाभ इति प्रश्नः । समाधत्ते

**भेदाधिष्ठाना हि इति ।** (भा)

यत्किञ्चित्प्रयत्नभेदेत्यर्थः ॥ तच्च ज्ञापकमाह

**यदि हीति ।** (भा)

**सवर्णसंज्ञावचनम्** (भा)

इत्यस्य सवर्णपदोच्चारणमित्यर्थः । संज्ञा तु

---

१ झरो झरि सवर्णे । अ ८ । पा ४ । सू ६५ ॥
२ सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् । भाष्ये ॥

[1]अणुदित् सवर्णस्य (पा)

इत्याद्यर्थमावश्यकेति बोध्यम् ॥

भेदादिति । (कै)

बाह्यप्रयत्नभेदादित्यर्थः ॥ नन्वेवं यत्किञ्चित्स्थानैक्यादैकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात् प्रयत्नांशे यावत्प्रयत्नसमानत्व-त्यागेऽपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात् ।

[2]यजुष्येकेषाम् (पा)

इत्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च । यत्तु तुल्य-त्वस्य भेदघटितत्वात् सवर्णसंज्ञाभेदाधिष्ठानेत्यर्थ इति । तन्न । तेन सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परं भेदलाभेऽपि वर्णानां यत्किञ्चित्प्रयत्नभेदस्य ततोऽलाभात् । स्थानानामन्ततस्तत् तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥ भाष्ये

यदि तर्हि सति भेदे (भा)

इत्यादि सिद्धान्ति वचः ॥

शकारच्छकारयोरिति । (भा)

तस्मात् प्रारम्भो यत्नस्येति आवश्यकमिति भावः ॥ ननु "निश्छद्म"-त्यत्र हलः परत्वाभावात् कथं लोपप्राप्तिरत आह

---

१ अणुदित्सवर्णस्य चाप्रत्ययः । अ १ । पा १ । सू ६९ ॥

२ यजुष्येकेषाम् । अ ८ । पा ३ । सू १०४ ॥ "युष्मत् तत् ततक्षुषु परतः पक्षे सस्य मूर्धन्यो भवति" इत्यर्थः ॥

[1]अनचि चेति ॥ (पा)

तत्रैकदेशी प्रौढ्या समाधानमाह

एवं तर्हीत्यादि ॥ (भा)

स्वाङ्गवाच्येवेति । (कै)

[2]अमूर्द्धेत्यादि- (पा)

पर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरवधारणार्थेति भावः । "संज्ञायाम्" इत्यनुवृत्तेर्न दोष इत्यन्ये ॥ नन्वेवं भिन्नस्थानानामपि स्यादत आह

तद्धितान्तास्येति । (कै)

आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः ॥

एकत्वं विवक्ष्यत इति । (कै)

तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभववृत्तित्वलाभ इत्यन्ये। त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्व्वनिपातापत्तेः पूर्व्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद् भाष्ये तृतीय आश्रितः ॥

रेफोष्मेति । (कै)

"रेफोष्मणां सवर्णा न सन्ति" इत्युक्तेरिति भावः ॥

[3]तस्यावचनम् (भा)

इति वार्त्तिके तच्छब्देन कस्य परामर्शोऽत आह

---

१ अ ८ । पा ४ । सू ४७ ॥

२ अमूर्द्धमस्तकात् स्वाङ्गादकामे । अ ६ । पा ३ । सू १२ ॥

३ तस्यावचनं वचनप्रामाण्यात् ॥

[1]तस्येत्ययमिति । (कै)

तस्यावचनम् (भा)

इत्यत्र षष्ठीतत्पुरुष इति भावः। एवं च "स्यो न विभक्तिरि" तिलुगभावः। वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्य शब्दस्य परामर्श इति वक्तुं युक्तम् ॥

रेफस्यापीति। (कै)

रेफोष्मणामित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः। तत्र रेफांशे तुल्यास्यप्रयत्नासम्भव एव ऊष्मसु तु

[2]नाज्झलौ (पा)

इति निषेधादिति बोध्यम्। एवं च व्यावर्त्याभावेन सवर्णसंज्ञा-वचनसामर्थ्याद् यस्य तस्येति लभ्यत इति भावः॥ ननु "सवर्ण" इति संज्ञाशब्दस्य कथं सम्बन्धिशब्दत्वमत आह

तुल्यास्येत्यादि। (कै)

स्वार्थभिन्नप्रतियोगिकसम्बन्धनिमित्तः शब्दः सम्बन्धिशब्द इति भावः॥ परेतु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दौ इत्यर्थौ भाष्यस्य सवर्णशब्दो हि प्रदेशेऽपि सवर्णपदवत्परो न तु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य सम्बन्धिशब्दत्वं दुरुप-पादमुपक्रमोपसंहाराभ्यां चैवमेवोचितम्। उपक्रमे हि

तुल्यास्यं च तुल्यप्रयत्नं च

---

१ तस्येत्ययमनुकरणशब्दः। तस्येत्यस्यावचनमित्यर्थः। कै ॥

२ अ १। पा १। सू १० ॥

**सवर्णसंज्ञं भवति** (भा)

इत्युक्तमित्याहुः ॥

**ऋकारऌकारयोरिति ।** (भा)

अत्र

**[1]ऋत्यक** (पा)

इति प्रकृतिभावः । वार्त्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः ॥ सावर्ण्यप्रतियोग्यनिर्देशादाह

**अत्र चेति ॥** (कै)

भाष्ये

**होतृऌकारो होतॄकार इति ।** (भा)

ऌकारशब्दो देवतावाचीत्येके । विवृतस्य ऌकारस्य दीर्घस्याभावादॄकारो दीर्घ उदाहृत इति बोध्यम् ॥

**नैतदस्तीति ।** (भा)

सवर्णसंज्ञाया इति शेषः ॥ नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह

**तत्रेति ॥** (कै)

भाष्ये तदुच्चनद्वयारम्भेऽपि सवर्णसंज्ञावश्यिकीत्याह

**तत् सवर्णे इति ॥** (भा)

**अज्माचस्येति ।** (कै)

अनज्व्यावृत्त्यर्थमक इति वर्त्तते । सवर्णसंज्ञाभावात् सवर्णे इति नानुवर्त्तते इति भावः ॥ खण्डयति

---

१ अ ६ । पा १ । सू १२८ ॥

[1]यदेतदिति (भा)

भाष्ये ॥

सवर्णे इतीति। (कै)

आद्य वार्त्तिके सवर्णग्रहणमनुवर्त्तत इति भावः ॥

तेन ऌतीति। (कै)

सिद्धान्तेऽपि व्यवस्थितविभाषयाऽनभिधानेन वा होतॢकारे पूर्ववार्त्तिकं गम्ऌकारे चोत्तरवार्त्तिकं न प्रवर्त्तते। एवं कॄ इति दीर्घस्य ऌकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः ॥

रूपद्वयमिति। (कै)

ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः ॥

तत्रासंहितायामिति। (कै)

[2]समासे संहिता नित्या। असमासे तु ईदृशं रूपं दुर्लभम्। होतृशब्दे विभक्तिश्रवणापत्तेः। होतृशब्दस्य नपुंसके सम्बुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम्। भाष्ये तु

---

१ यदेतत् सवर्णदीर्घत्वे ऋतीति ऌतदृत इति वक्ष्यामि। भाष्ये॥

२ "संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्येतु सा विवक्षामपेक्षते"॥ अत्रैकपदशब्देन अखण्डमपदम्। अत एव नित्यासमास इति चरितार्थम्। अत एवाग्ने अग्ने इत्यादौ पदत्वे संहिता अनित्यैव। अखण्डत्वं च पदत्वाभाववदुत्तरखण्डत्वं तेन राजीयतीत्यादौ न दोषः। अन्यथा तत्र पक्षे प्रवेकादेशोऽपि न स्यादिति बोध्यम्॥

**होतृ ऌकार** (भा)

इति दीर्घप्रवृत्तियोग्येदृशोच्चारणम् ॥ इति स्थिते इति शेषः। एवं "शाकले होतृ ऌकार" इत्यपि चिन्त्यम्। सवर्णत्वविधायक-वचनाभावे एतद्विचारसत्त्वेन तत्र

**ऋत्यक** (पा)

इत्यस्याप्राप्तेः ।

**[1]इकोऽसवर्णे** (पा)

इत्यपि

**[2]न समास** (वा)

इति निषिद्धम्। नित्यग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥ सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह भाष्ये

**तन्न वक्तव्यमिति** ॥ (भा)

इतर आह

**अवश्यमिति** ॥ (भा)

**अर्द्धतृतीयेति ।** (कै)

तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह

---

१ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । ६ । १ । १२७ ॥

२ "न समासे" इति सिद्धान्तकौमुद्यामस्ति। वार्त्तिकपाठे तु "सित् (नित्य) समासयोः शाकलप्रतिषेधः" इत्यस्ति ॥

**ईषत् स्पृष्टेति।** (कै)

विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः॥

**ताभ्यामिति।** (कै)

असावर्ण्यादिति भावः॥ भाष्ये वचनद्वयप्रत्याख्यानवाद्याह

**ऋकारस्येत्यादि॥** (भा)

**सत्यचत्वे इति।** (कै)

अयोगवाहेषु पाठादिति भावः॥

**नाच् कार्य्यमिति।** (कै)

तस्य प्लुतसंज्ञा। तत्स्थाने प्लुतस्येति भावः। अत्र पक्षेऽपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्व-ऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः। पक्षयोस्तुल्यफलता चेति बोध्यम्। तदेव ध्वनयन् पृच्छति भाष्ये

**[1]किं पुनरत्रेति॥** (भा)

**ऋकार इति।** (कै)

विवृत इत्यर्थः॥

**ऌकार इति।**

ईषत्स्पृष्ट इत्यर्थः॥ भाष्ये

**दीर्घत्वं चैव ह्येति।** (भा)

ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः। तद्व्याचष्टे

---

१ किं पुनरत्र ज्यायः। सवर्णसंज्ञावचनमेव ज्यायः॥

अपिचेत्यादिना ॥ (भा)

खल्वल्कार इति। (भा)

दीर्घल्कार इत्यस्याप्युपलक्षणम् ॥ वचनस्य कार्यदर्शनादाह

व्याख्यास्यामीति ॥ (कै)

अन्ये तु "लण्" सूत्रस्थाकारस्यानुनासिकत्वे

[1]अतो ल्रान्तस्य (पा)

इत्यत्र भगवान् पाणिनिर्लकारं नोच्चारयेत्। प्रत्याहारेणैव निर्वाहात्। तस्मादपूर्वं वचनं कार्य्यमित्येव भाष्याशय उचित इत्याहुः ॥

आन्तरेति। (कै)

रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः ॥ सवर्णसंज्ञावादी तदभाववादिनं प्रति तवाप्यावश्यकं तदित्याह

तवावश्यमिति ॥ (भा)

लकारास्याण् लपर इत्येतत् ॥

साक्षादिति। (कै)

[2]रषाभ्याम् (पा)

इति वचनादित्यर्थः ॥ नन्वत्र लकाराभाव इत्यत आह भाष्ये

वर्णैकदेशा इत्यादि ॥ (भा)

---

१ अ ७। पा २। सू २॥

२ रषाभ्यां नो णः समान पदे। ८। ४। १॥

अग्रहणपक्षे त्विति। (कै)

[1]"प्रक्लृप्यमानमि"त्यत्र "क्लृप्यमानम्" इत्यत्र चेति भावः। आद्ये

[2]इत्यत्र (पा)

इति द्वितीये

[3]ऋवर्णान्नस्येति (वा)

प्राप्तिः॥

भेदेनेति। (कै)

"ओण्ट" "गम्लृ" इति भेदेनानुबन्धनिर्देशः॥

[4]नाग्लोपिशास्वृदिताम् (पा)

[5]पुषादिद्युताद्य्लृदित (पा)

इति च भेदेनोपादानमित्यर्थः॥

---

१ इह तर्हि "रषाभ्यां नो णः समानपदे" इत्यत्र ऋकारग्रहणं चोदितम्। मातृणां पितृणामित्येवमर्थम्। तदिहापि प्राप्नोति। क्लृप्यमानं पश्येति। अथासत्यामपि सवर्णसंज्ञायामिह कस्मान्न भवति प्रक्लृप्यमानं पश्येति। चुटुतुलशर्व्यवाये नेति वक्ष्यामि। अपर आह। त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये नेति वक्ष्यामीति॥

२ अ ८। पा ४। सू २९॥

३ रषाभ्यां नो णः समानपदे (८।४।१।) एतत् सूत्रस्थवार्त्तिकम्। रषाभ्यां णत्व ऋकारग्रहणम्॥

४ अ ७। पा ४। सू २॥

५ पुषादिद्युताद्य्लृदितः परस्मैपदेषु। अ ३। पा १। सू ५५॥

# नाज्झलौ ।१।१।१०॥

अकारेत्यादि । (कै)

एवं च हरिरित्यादौ दीर्घः प्रयनमित्यादौ यणापत्तिरिति भावः॥

अत एवेति । (कै)

पूर्व्वसवर्णदीर्घनिर्देशादित्यर्थः । किं चैवं सति

[1]अकः सवर्णे (पा)

[2]झरो झरि सवर्णे (पा)

इत्यस्यासङ्गतिरित्यपि बोध्यम् ॥

भेदाधिष्ठानत्वादिति । (कै)

ऐक्ये हि तुल्यास्यप्रयत्नत्वासम्भव इति भावः ॥

सवर्णग्रहणेन (भा)

इति भाष्ये सवर्णग्राहकेण

[3]अणुदित् (पा)

सूत्रेणेत्यर्थः ॥

अच हि सूत्रे इति । (कै)

"उच्चारितस्यैव प्रत्यायकताम"इत्यपूर्व्वपक्षी न जानाति "प्रत्याहारेषु

१ अकः सवर्णे दीर्घः । अ ६ । पा १ । सू १०१ ॥

२ अ ८ । पा ४ । सू ६५ ॥

३ अणुदित्सवर्णस्य चाप्रत्ययः । अ १ । पा १ । सू ६९ ॥

जातिग्रहणम्" इति च न जानाति॥ ननु सति सवर्णत्वे इकारः शकारं गृह्णीयात् तदेव च न

**नाज्झलौ** (पा)

इति निषेधादत आह

**स्वात्मनीति।** (कै)

यद्यपि "स्वाध्यायोऽध्येतव्य" इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तर-मन्यत्र निषेधेऽपि स्ववाक्यर्थबोधात् प्राक् स्वघटकपदार्थोपस्थिति-वेलायां स्ववाक्यार्थरूपसावर्ण्याभावज्ञानाभावान्नाचेकारशकारयो-स्तद्भावबोधनमिति भावः॥

**[1]अपवादस्यैवासम्पत्त्येति।** (कै)

अपवादस्य

**नाज्झलौ** (पा)

इत्यस्यासंपत्त्या प्राग्बोधाभावेन स्वविषयेऽप्राप्तौ तद्घटकपदोपस्थितयो-रिकारशकारयोर्नापवादविषयत्वमित्यर्थः॥

**बहुलेति।** (कै)

**[2]मयूरव्यंसका-** (पा)

दित्वात् [3]"सुप्सुपे"ति वा समास इत्युचितम्॥ ननु कथं शस्य हित्वं

---

१ "अपवादत्वस्यैवासम्पत्त्या" इति कैयटेऽस्ति॥

२ मयूरव्यंसकादयश्च। अ २। पा १। सू ७२॥

३ सह सुपा। अ २। पा १। सू ४॥ इत्यत्र 'सुपा' इति योग-विभागेनेत्यर्थः॥

[1]अनचि चेति (पा)

[2]शरोऽचीति (पा)

वा निषेधापत्तेरत आह

शरोऽचीति ॥ (कै)

ननु प्रयत्नभेदेनानच्त्वे सूत्रमेव व्यर्थं स्यादत आह

सूत्रेति ॥ (कै)

भाष्ये

[3]ईषदित्येवेति । (भा)

"एङैचोः" परस्परसावर्ण्याभावाय विवृततरत्वव्याख्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान्। किं च दीर्घप्लुताकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ॥

---

१ अ ८। पा ४। सू ४७॥ २ अ ८। पा ४। सू ४९॥

३ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्। अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति। किं कारणम्। अज्झल्त्वात्। अच्चैव हि शकारो हल् च। कथं तावदच्त्वम्। इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्। हलषु चोपदेशाद्धल्त्वम्। तत्र को दोषः। तत्र सवर्णलोपे दोषः। तत्र सवर्णलोपे दोषो भवति। परशृतानि कार्याणि। झरो झरि सवर्णे इति लोपो न प्राप्नोति। सिद्धमनच्त्वात्। सिद्धमेतत्। कथम्। अनच्त्वात्। कथमनच्त्वम्। स्पृष्टं करणं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। विवृतमूष्मणाम्। ईषदित्येवानुवर्त्तते। स्वराणां च विवृतम्। ईषदिति निवृत्तम्। अत्रैव भाष्ये ॥

**वाक्यापरिसमाप्तेर्वेति।** (भा)

अन्यथा

**नाज्झलौ** (पा)

इत्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तत्र पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः॥ अनिष्पादमुपपादयति

**अस्मिन् हीति॥** (कै)

**सूत्रे निष्पन्ने इति।** (कै)

जनितवाक्यार्थबोधे इत्यर्थः॥

**प्रवर्त्तते इति।** (कै)

एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः। तदेव च लक्ष्यसंस्कारकमिति भावः॥

**निष्पत्त्यवस्थायाम्।** (कै)

वाक्यार्थबोधावस्थायाम्॥

**सवर्णत्वेषु निष्पन्नेषु।** (कै)

तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः॥

**नापि स्वात्मनीति।** (कै)

अनिष्पत्तेरिति भावः॥

**अज्ञानिष्पत्त्या।** (कै)

अज्ञस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या॥ भाष्ये

[1]तावत् । (भा)

प्रथमम् ॥

उपदेशोत्तरकालेति । (भा)

ज्ञातस्य संज्ञाविधानादिति भावः ॥

प्रत्याहारोत्तरकाला सवर्णसंज्ञा (भा)

इत्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणं "तदुत्तरकालमणुदिद्"-इत्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः । अपरिसमाप्तिश्च सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसम्भावनोत्थिताऽप्रामाण्यसम्भावनासत्त्वादिति तात्पर्य्यम् ॥ यत्तु

नाज्झलौ (पा)

इत्यतः प्राक्

[2]तुल्यास्य (पा)

इत्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावाद्

---

१ वाक्यापरिसमाप्तेर्वा । वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् । किमिदं वाक्यापरिसमाप्तेरिति । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकाला इत्संज्ञा । इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । अत्रैव भाष्ये ॥

२ अ १ । पा १ । सू ९ ॥

## अणुदित् (पा)

इत्यस्य वाक्यार्थबोध इत्यर्थ इति। तन्न। अभावज्ञाने प्रतियोगि-ज्ञानस्य कारणतया तुल्यास्येत्यतः प्राग् निषेधवाक्यार्थभावो न तु विपरीतमित्यदोषादिति दिक् ॥

## सिद्धमिति। (कै)

अचत्याच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञाना-भावादिकारआकारयोः सवर्णत्वज्ञानेऽ"पणुदित्" सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावानेकारेणाच आकारग्रहणमिति भावः॥ ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन् प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च

## नाज्झलौ (पा)

इत्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात्। अस्मदादीनां बोधस्तु तत्तात्पर्य्यज्ञव्याख्यातृपरम्परया लक्षणया भविष्यतीति आकारयोः प्रतिषेधः प्राप्नोति एवमकारयोरपीति चेन्न। ज्ञानसत्त्वेऽपि तदभि-प्रायेण प्रयोगे तात्पर्य्यग्राहकाभावात्। करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च। अत एव [1]"हलन्त्य" सूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये। अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्यान्योन्याश्रयाभावात् तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ तत्पर्य्यन्तानुधावनमनर्थकं

१ हलन्त्यम्। अ १। पा ३। सू ३॥

स्यात् । मम तु पाणिनेस्तथा व्यवहाराभावान्नदोषः । उक्तार्थे ज्ञापकमप्युपन्यस्यति

[१]एवमौकारोऽपीति । (कै)

अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम् । तत्र तात्पर्य्यग्राहका

[२]वेलासु (पा)

इत्यादिनिर्द्देशाः प्रागुक्तं भाष्यं चेति बोध्यम् ॥

प्रदर्शनाय । (कै)

बोधनाय ॥ भाष्ये

[३]यद्देतदिति । (भा)

तद्बोधवेलायां वाक्यपरिसमाप्तेरिति भावः ॥

[४]एकत्रेति । (कै)

"तुल्यार्थानां विकल्प" इति न्यायादित्यर्थः ॥

---

१ एवमौकारोऽप्यचेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति कुमारी शेते इत्यत्र सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्य्यते ॥

२ कालसमयवेलासु तुमुन् । अ ३ । पा ३ । सू १६७ ॥

३ नैष दोषः । यदेतदकः सवर्णे दीर्घ इत्यत्र प्रत्याहारग्रहणम् । तत्र इकार ईकारं गृह्णाति शकारं न गृह्णाति । भा ॥

४ एकत्र हि साध्ये हेतुविकल्पो भवति इह तु साध्यभेदः । सिद्धेरणच्त्वं हेतुः । अनच्त्वस्य वाक्यापरिसमाप्तिः ॥

[1]मा वा भूद् । (भा)

इत्येतत् सूचितप्रतिज्ञाया आश्रयमाह

[2]अस्तु वेति ॥ (कै)

ननु "व्यञ्जनपरस्यैकस्यानेकस्य वा नोच्चारणे विशेष" इति न्यायात् कथं भेद इत्यत आह

श्रुतिकृतमिति ॥ (कै)

भाष्ये

[3]असतिलोपे त्रिशकारमिति (भा)

वदन् प्रष्टव्यः किं द्विशकारकं न स्यादिति तदाशय उत त्रिशकारं स्यादिति । आद्ये आह

असत्यपीति । (भा)

द्विषकारं भवत्येवेत्यर्थः । द्वितीये आह

---

१ एतच्च समर्थितम् । कथम् । अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा मा वा भूत् । भा ॥

२ अस्तु वा ग्रहणमिकारेण शकारस्येति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वा शब्द इत्यर्थः ॥

३ ननु चोक्तं परभूतानि कार्याणि । झरो झरि सवर्ण इति लोपो न प्राप्नोति । माभूल्लोपः । ननु च भेदो भवति । सति लोपे द्विशकारम् । असतिलोपे त्रिशकारम् । नास्ति भेदः । असत्यपि लोपे द्विशकारमेव । कथम् । विभाषाद्विर्वचनम् । एवमपि भेदः । असति लोपे कदाचित् द्विशकारं कदाचित् त्रिशकारं सति लोपे द्विशकारमेव । स एष कथं भेदो न । स्यात् यदि नित्यो लोपः स्याद् विभाषा तु स लोपः । यथा भेदस्तथास्तु । अत्रैव भाष्ये ॥

**एवमपीति ।** (भा)

विभाषा द्विर्वचनेऽपीत्यर्थः । एवमपीत्यर्थेन भेद एवेत्युक्त्वा तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यं किमुच्यते नित्यो लोपः स्यादिति अतस्छित्त्वा भिन्नकर्तृकत्वेन योजयति ॥

**स एष इति ।** (भा)

त्रिप्रकारमिष्टमेवेति तात्पर्य्यम् ॥

**[1]झयो ह इति ।** (भा)

इदं वृत्तिरीत्या । भाष्यरीत्या तु

**[2]वावसान** (भा)

इत्यत इति बोध्यम् ॥

**इति कालोपनामकशिवभट्टसुतसतीगर्भज-नागोजिभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥**

---

१ झयो होऽन्यतरस्याम् । अ ८ । पा ४ । सू ६२ ॥
२ वावसाने । अ ८ । पा ४ । सू ५६ ॥

# ईदूदेद् द्विवचनं प्रगृह्यम् ।१।१।११॥

व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा गुणान्तरयुक्तग्रहणाय वा स्यात् । तत्र नाद्य इत्याह

[1]ईदूतोरिति । (कै)

एवं च

[2]अणुदित् (पा)

इत्यस्य प्राप्त्यभावाद् न तद्बाधक-

[3]तपर- (पा)

सूत्रप्रवृत्तये तपरत्वमित्यर्थः ॥ "तपर"सूत्रेऽण्ग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाभावान्न द्वितीय इत्याह

उदात्तादीनामिति ॥ (कै)

---

१ "किमर्थमिति" भाष्यप्रतीकमुपादाय "ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम् । उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां ग्रहणार्थमपि नोपपद्यते । जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति प्लुतानां चेष्यत एवेति इच्छाव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः" इत्युक्तम् ॥

२ अ १ । पा १ । सू ६९ ॥ ३ अ १ । पा १ । सू ७० ॥

ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात् तत्पक्षे हि "तपर"सूत्रं नियमार्थमेवेत्यत आह

**जातीति॥ (कै)**

**प्लुतानां चेष्यत एवेति। (कै)**

एतच्चाग्रे भाष्ये एव स्फुटम्॥

**इष्टव्याघातमिति। (कै)**

जातिपक्षे ईदूदंशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः॥

**भेदकाश्च गुणा इति। (कै)**

"भेदकत्वात् स्वरस्य" इति वार्त्तिकोक्तकारणविषये भेदकपक्षोऽस्तीत्यभिमानः। इदं प्रयोजनम् ईदूतोरेव नत्वेदंशे "अणुदित्" सूत्रेणैव सिद्धेः॥ ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं तत् कुतः प्लुतानां न प्राप्नोतीत्यत आह

**व्यक्तिपक्षेति॥ (कै)**

ईदूदंशे इदम्। एदंशे तु तपरत्वादेव दोष इति बोध्यम्॥ ननु इतिशब्दादिसमभिहारे कार्य्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात् पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेऽपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह

**शास्त्रेति। (कै)**

प्रवृत्तेऽपि शास्त्रेऽसिद्धवचनेन तत्प्रवृत्तिबुद्ध्यभावेन प्लुतबुद्ध्यभावाद् द्विमात्रविषयाया बुद्धेस्त्रिमात्रे सत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः। एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तन्न स्यात्। न च स्थानिवत्त्वम्

[1]**अनल्विधौ** (पा)

इति निषेधात्। प्लुतस्यान्यवृत्तिधर्मत्वात्। एवं च "आगच्छतमग्नी" इत्यादौ

[2]**अणोऽप्रगृह्यस्य** (पा)

इत्यनुनासिकः स्याद् इत्यपास्तम्॥ ननु प्राधान्यात् कार्य्यासिद्धत्वमेव स्यादत आह

[3]**तथाहीति॥** (कै)

[4]**उत्सर्गः** (कै)

---

१ स्थानिवदादेशोऽनल्विधौ। १। १। ५६॥

२ अ ८। पा ४। सू ५७॥

३ तथाहि वक्ष्यति असिद्धत्ववचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं चेति। कै॥

४ "असिद्धः प्लुतः" इति (भा)। शास्त्रासिद्धत्वाश्रयणाच्च प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषयाबुद्धिः प्रवर्त्तते। तथाच वक्ष्यति। "असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च" ("ईदूदेद् द्विवचनं प्रगृह्यम्" इति सूत्रस्थकैयटे कौस्तुभे च एवम्बिधभाष्यवार्त्तिकपाठोऽस्ति। "षत्वतुकोरसिद्धः" "पूर्वत्रासिद्धम्" (८। २। १) इत्येतत् सूत्रद्वयस्थभाष्यग्रन्थे एवम्बिधपाठोऽपि दृश्यते। तद्यथा। "षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थंच") "षत्वतुकोरसिद्धः" (६। १। ८६) इत्येतत् सूत्रस्थं वार्त्तिकमिदम्। उत्सृज्यते निवर्त्यते आदेशेनेत्युत्सर्गं स्थानी। स लक्षणं निमित्तं यस्य कार्य्यस्य तुगादेस्तस्य प्रवृत्त्यर्थमित्यर्थः। तथाचैकरूप्यार्थं सर्वत्र शास्त्रासिद्धत्वमेवेति भावः॥

स्थानी ॥

**सामान्येनेति।** (कै)

तदुत्सर्गेऽपीत्यर्थः॥ ननु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह

**सोत्सर्गमिति।** (कै)

तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः॥ प्रगृह्यत्वहेतुके प्रकृतिभावेऽपीत्यन्वयः॥

**प्रकृतिभाव एवेति।** (कै)

प्लुतप्रकृतिभाव इत्यर्थः॥ भाष्ये

**[१]एतस्य** (भा)

इत्यस्य स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः॥

**[२]कार्य्यार्थत्वादिति।** (कै)

तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः॥

---

१ सिद्धः प्लुतः स्वरसन्धिषु। कथं ज्ञायते सिद्धः प्लुतः स्वरसन्धिष्विति। यदयं प्लुतः प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति। कथं कृत्वा ज्ञापकम्। सतो हि कार्यिणः कार्येण भवितव्यम्। किमेतस्य ज्ञापने प्रयोजनम्। अप्लुतादप्लुत इत्येतन्न वक्तव्यं भवति। किमतो यत् सिद्धः प्लुतः स्वरसन्धिषु। संज्ञाविधावसिद्धः। तस्यासिद्धत्वात् तत्काला एव भवन्ति। संज्ञाविधौ च सिद्धः। कथम्। कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। अत्रैव भाष्ये॥

२ कार्य्यार्थत्वाद्गुणानां कार्यस्य च प्राधान्यात् प्रधानदेशत्वस्य न्याय्यत्वादित्यर्थः। कै॥

**प्रतिषिद्धे इति ।** (कै)

अप्लुतवद्भावेन बाधिते इत्यर्थः ॥ भाष्ये

**प्रगृह्यप्लुतप्रतिषेधेति ।** (भा)

प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः ॥ प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह

**अन्येनेति ।** (भा)

प्रगृह्यः प्रकृत्येत्यनेनेत्यर्थः ॥ नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह

**यथेति ॥** (कै)

[१]**न पुनस्तपरत्वादिति ।** (कै)

तद्वक्ष्यति भाष्ये

**दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति इति ॥** (भा)

**प्लुतानां तु इति ।** (कै)

तपरत्वाभावे इत्यर्थः ॥ तपरत्वे तु "तपर"सूत्रस्य जातिपक्षेऽनण्यपि नियमार्थत्वान्न स्यादिति भावः ॥ ईत्वादि इत्याद्यनतिरिक्तं मन्यते ॥

---

१ ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति न पुनस्तपरत्वात् । अयमत्राशयः । आकृतिपक्ष आश्रयिष्यते । दीर्घोच्चारणाच्च प्रयत्नाधिक्याद्ध्रस्वानां न भविष्यति प्लुतानां तु प्रवर्त्तिष्यते इति ॥

[1]आकृतिरिति । (कै)

विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगताया अपि न ग्रहण-मिति भावः ॥ भिन्नभिन्नव्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् ॥ एत्वजातेस्तु प्लुते सत्त्वात् तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च ॥ नन्वेवं भाष्ये

अनण्त्वाद् (भा)

इति हेतुरसङ्गतोऽत आह

आकृतिपक्षेऽपीति । (कै)

ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यते इत्यर्थः। जातिप्राधान्ये फलाभावाद् व्यक्तिद्वारा कार्य्यसम्बन्धाश्रयणे गौरवाच्च तथा युक्तत्वाच्च तद्विशिष्टव्यक्तिग्रहणेऽप्यणत्वाभावान्न तौ ग्राहकाविति भावः ॥ भाष्ये

तस्माद्दीर्घाणामेव तपराणामिति । (भा)

---

१ आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति तथा दीर्घोच्चारण-सामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां न स्यात् । यथा स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीत्याकृतिपक्षेऽपि विशिष्टैव दीर्घा व्यक्तिर्गृह्यत इति । तथा च अनण्त्वादीदूतौ ग्राहकौ न स्याताम् । अत्रैव कैयटे ॥

गुणान्तरयुक्तसंग्रहायासन्देहाय चेत्यर्थः॥ कर्मधारयभ्रमं व्युदस्यति

[१]प्लुतो भावीति। (कै)

यद्यप्याश्रयात्सिद्धत्वेनापि सिद्ध्यति तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः॥

प्रकृत इति। (कै)

प्लुतशब्देन बोधित इत्यर्थः॥

[२]बुद्ध्येति। (कै)

शास्त्रीये कार्य्येऽसिद्धत्वं नचायं व्यवहारः शास्त्रीयं कार्य्यमिति भावः॥

कार्य्यकालपक्षमाश्रित्येति। (कै)

अयं भावः। तत्र पक्षे संज्ञाशास्त्राणां न पृथग्बोधकत्वम्।

[३]पूर्वत्रासिद्धमिति (पा)

चातिदेशः कार्य्यार्थः। कार्य्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य। किं च।

---

१ "प्लुतभावीति" भाष्यप्रतीकमुपादाय "प्लुतो भावी यस्य स प्लुतभावी स्थानी प्रकृतः। तस्यैव प्रकृति भावः" इत्युक्तम्॥

२ ननु प्लुतस्यासिद्धत्वात् स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते। नैष दोषः। प्लुतोऽस्य भावीति। बुद्ध्या प्रकल्पनमेतत्॥

३ अ ८। पा २। सू १॥

[1]पूर्वत्रासिद्धम् (पा)

इत्यस्याधिकारत्वेन पूर्व्वत्रेदमसिद्धमिति तदर्थः। तत्र कार्य्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम्। एवं च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यापि तद्दृष्ट्याऽसिद्धत्वेन प्लुतशास्त्रेऽनुवृत्त"पूर्व्वत्रासिद्धमिति" अत्र पूर्व्वग्रहणेन "ईदूदेद्"

अदसो मात् (पा)

इत्यस्य ग्रहीतुमशक्यत्वमिति। यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्य्यबोधकत्वात् तत्प्रतिप्लुतासिद्धत्वबोधनं शक्यमेव। एतेन कार्य्यकालपक्षेऽपि पाठकृतपूर्व्वत्वाक्षतिरित्यपास्तम्॥ भाष्ये

यत्सिद्धे प्रगृह्येति। (भा)

प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्य्यमित्यर्थः। यत्प्रगृह्यकार्य्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत्॥

---

१ पूर्वत्रासिद्धमधिकारः। पूर्वत्रासिद्धमित्यधिकारोऽयं द्रष्टव्यः। किं प्रयोजनम्। परस्य परस्य पूर्वत्र पूर्वत्रासिद्धत्वज्ञापनार्थम्। परः परो योगः पूर्वं पूर्वं योगं प्रति असिद्धो यथा स्यात्। अनधिकारे हि समुदायस्य समुदायेऽसिद्धत्वविज्ञानम्। अनधिकारे हि सति समुदायस्य समुदाये असिद्धत्वं विज्ञायेत। तत्र को दोषः। तत्रायथेष्टप्रसङ्गः। तत्रायथेष्टं प्रसज्येत। गोधुङ्मान्। गुडलिण्मान् इति। घत्वढत्वयोः कृतयोः "झयः" इति वत्वं प्रसज्येत। तस्मादधिकारः। तस्मादधिकारोऽयं द्रष्टव्यः। भा ८। २। १॥

## यथोद्देशेति। (कै)

नन्वत्र पचेऽग्नी इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावाद् अज्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेन्न। संज्ञायाः कार्य्यार्थतया पुनः प्रवृत्तौ कार्य्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुलभत्वात्। एतदेव ध्वनयता प्लुतस्यासिद्धत्वात् तत्काला एव भवन्तीत्येवकारः प्रयुक्तः। प्लुतात् प्राक् संज्ञायां च यत्काला एवेति तदर्थं इत्यलम्॥

## प्रणीयते। (कै)

बोध्यते॥

## ईदादय इति। (भा)

प्राथम्याद्

## [1]अदसो मात् (भा)

इत्यनेनैकरूप्याच्चेति भावः॥

## तदेति। (कै)

अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः॥

## अथेति। (कै)

संज्ञाया आनन्तर्यादेन विधिरित्यस्यानुग्रहाच्चेति भावः॥ भाष्ये

---

१ अ १। पा १। सू १२॥

[१]अन्त्यस्येति। (भा)

द्विवचनान्तस्य वर्णस्येत्यर्थः ॥

---

१ अत्राह भगवान् महाभाष्यकारः। कथं पुनरिदं विज्ञायते ईदादयो यद्द्विवचनमिति। आहोस्विदीदाद्यन्तं यद्द्विवचनमिति। कश्चात्र विशेषः। ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः।*। ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य प्रगृह्यसंज्ञाविधेया। पचेते इति पचेथे इति। वचनाद्भविष्यति। अस्ति वचने प्रयोजनम्। किम्। खट्वे इति। माले इति। अस्तु तर्हीदाद्यन्तं यद्द्विवचनमिति। *ईदाद्यन्तं द्विवचनमिति चेदेकस्य विधिः।*। ईदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञाविधेया। खट्वे इति। माले इति। नवाऽऽद्यन्तवत्त्वात्। न वा एष दोषः। किं कारणम्। आद्यन्तवत्त्वात्। आद्यन्तवदेकस्मिन् कार्य्यं† भवतीत्येवमेकस्यापि भविष्यति। अथवा एवं वक्ष्यामि ईदाद्यन्तं यद्द्विवचनान्तमिति। ईदाद्यन्तं‡ यद्द्विवचनान्तमिति चेल्लुकि प्रतिषेधः।*। ईदाद्यन्तं द्विवचनमिति चेल्लुकि प्रतिषेधो वक्तव्यः। कुमार्य्योरगारं कुमार्य्यगारम्। वध्वोरगारम्। वध्वगारम्। एतद्धीदाद्यन्तं§ श्रूयते द्विवचनान्तं च भवति प्रत्ययलक्षणेन। सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य।*। यदयमी दूतौ च सप्तम्यर्थे इत्यर्थग्रहणं करोति तज्ज्ञापयत्याचार्य्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति। तत्तर्हि ज्ञापकार्थमर्थग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। ईदादिभिर्द्विवचनं विशेषयिष्यामः। ईदादिवि-

---

* ईदाद्यन्तमिति चेदेकस्य विधिः। ईदाद्यन्तमिति चेदेकस्य प्रगृह्यसंज्ञाविधेया। किल्हरणमुद्रापित भाष्य पुस्तके एवंविधपाठोऽस्ति ॥

† भवतीत्यकस्यापि भविष्यति। इति पाठोऽपि तत्रैवास्ति ॥

‡ ईदाद्यन्तं द्विवचनान्तं —। इति तत्रैवास्ति ॥

§ एतद्धीदाद्यन्तं च किल्हरण-मु-पुस्तके ॥

गौणस्येति। (कै)

जघन्यत्वसामान्यात् लाक्षणिकमपि गौणपदेन गृह्यते इति भावः॥ प्रथमोपस्थितेदूत्परित्यागेन एकारान्तोदाहरणदाने बीजमाह

ईदूतोरिति॥ (कै)

नाश्रितमिति। (कै)

वार्त्तिककृतेति शेषः॥

तदन्तविधिरिति। (कै)

अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमादायेति भावः॥

---

शिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति। ईदाद्यन्तं यद्द्विवचनं तदन्तमीदाद्यन्तमिति। एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येताम्। शुक्लाग्त्तां वस्त्रे*। अत्र प्राप्नोति। अत्र †हीदादिर्न च द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन। अत्राप्यकृते शीभावे लुग्भविष्यति। इदमिह संप्रधार्यम्। लुक् क्रियतां शीभाव इति किमत्र कर्त्तव्यम्। परत्वाच्छीभावः। नित्यो लुक्। कृते‡ शीभावे प्राप्नोत्यकृतेऽपि। अनित्यो लुक्। अन्यस्य कृते शीभावे प्राप्नोत्यन्यस्याकृते। शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। शीभावोऽप्यनित्यः। न हि कृते लुकि प्राप्नोति। उभयोरनित्ययोः परत्वाच्छीभावः। शीभावे कृते लुक्। अथापि कथं चिन्नित्यो लुक् स्यात्। एवमपि दोषः। वक्ष्यत्येतत् पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थमिति। इदं चापि प्रत्ययग्रहणमयं चापि संज्ञाविधिः। अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः। तस्मादस्तु स एव मध्यमः पक्षः॥

---

* इत्यत्र -। किल्हरण-मु-पुस्तके॥

† "च" नास्ति। किल्हरण-मु-पुस्तके॥

‡ कृतेऽपि शीभावे -। किल्हरण-मु-पुस्तके॥

इत्ययं तृतीयः पक्ष इति । (कै)

व्यपदेशिवद्भावानाश्रयणमस्य बीजम् ॥

तदन्तविध्यभावोऽत्र नोक्त इति । (कै)

ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमित्येतत्पचासम्भवरूपो दोषो नोक्त इत्यपि बोध्यम् ॥

आदेशेनेति । (कै)

एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः ॥

प्रकृतिभावेनेति । (कै)

अन्यथाऽनुपपद्यमानेनेत्यर्थः ॥ एवं हि सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वापत्तिरसाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिरतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसम्मतम् । अतो वृत्तौ सङ्ख्यानवगमेप्यनेकार्थप्रतीत्या तथा विग्रहे बाधकाभाव इति बोध्यम् ॥

सुतरामिति । (कै)

अकरणात् करणं गुरु तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः ॥

ईदादिभिरिति (भा)

भाष्ये । श्रुतस्य श्रुतेन सम्बन्धो न्याय्य इति भावः ॥

साक्षात् । (कै)

द्विवचनमनपेक्ष्य ॥

समुदायस्य । (कै)

प्रत्ययान्तस्य ॥ नन्वत्र पक्षे न द्विवचनेनेदादिर्विशेष्यत इति कथमौदादि च द्विवचनमितीत्यत आह

ईदादीति । (कै)

तदन्तत्वं चास्य व्यपदेशिवद्भावेन बोध्यम् ॥

श्रूयते सूत्र इति । (कै)

यत् श्रूयते सूत्रे द्विवचनं तदीदाद्यन्तमिति भाष्ये योजनेत्याशयः । अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेद् अतुल्यबलत्वात् परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये

शीभावोऽप्यनित्यः (भा)

इत्युक्तम् । "कृते लुकि" तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याभावादिति भावः ॥

[1]अमी इतीति । (कै)

"खट्वे" इत्यस्याप्युपलक्षणमेतत् ॥

द्वितीय इति । (कै)

प्रत्ययांशे तदन्तविधिसत्त्वेन पदद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् ॥

एतदिति । (कै)

वृत्तिकारोक्तमित्यर्थः ॥

---

१ अमी इत्यत्र ईकार एव द्विवचनं नत्वीकारान्तम् ॥

# अदसो मात् । १ । १ । १२ ॥

[1]अस्मिन्निति । (कै)

मात्पदघटिते इत्यर्थः । यदि तु "अदसो दाद्" इत्युच्यते दात् परस्य पूर्व्वोत्तरसाहचर्य्याद्वर्णभिन्नोऽच् औकारैकाररूप एव तदा न स्याद् दोष इति भावः ॥ इदमेव ध्वनयितुमदसः प्रगृह्यसंज्ञायामिति नोक्तम् ॥ नन्वीत्त्वोत्त्वयोरसिद्धत्वेऽपि

**अदसो माद्** (पा)

इत्यचेदूदिति निवर्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गोऽत आह

[2]च शब्दान्मत्वस्येति । (कै)

एवं चेदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः ॥ नन्वीत्त्वादीनामसिद्धत्वेऽपि तन्निवर्त्तितौकाराद्यभावेन कथमयादिप्राप्तिः किंचायादीन् प्रत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयात् सिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह

---

१ मात्प्रगृह्येति भाष्यप्रतीकमुपादाय "अस्मिन् सूत्रन्यास इत्यर्थः" इत्युक्तम् ॥
२ "ऊत्वस्य च" इति भाष्यप्रतीकमुपादाय च शब्दान्मत्वस्यापि इत्युक्तम् ॥

[1]शास्त्रेति॥ (कै)

नादेशलक्षणमिति। (कै)

प्रकृतिभाव इत्यर्थः। प्रगृह्यत्वं तु अनुनासिकपर्य्युदासेन चरितार्थमिति भावः॥

एकादेशः। (कै)

[2]एङः पदान्तादतीति॥ (भा)

[3]नाजानन्तर्ये इति। (कै)

उत्तरकालप्रवृत्तिके[4] अयादावजानन्तर्य्यादिति भावः। वैपादिकेऽन्तरङ्गे[5] बहिरङ्गपरिभाषाया अप्रवृत्ते[6] "विसर्ज्जनीय" सूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे॥

[7]यथोद्देशेति। (कै)

नन्वाश्रयात् सिद्धत्वेन प्रगृह्यत्वेऽपि मुत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न। एवमपि संज्ञाशास्त्रवैयर्थ्यादन्त्याश्रयणेनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात्॥ भाष्ये

---

१ शास्त्रस्यासिद्धत्वाच्च स्थानिलक्षणमेव कार्य्यं प्राप्नोति नादेशलक्षणमित्ययादिप्रसङ्गः। कै॥

२ अ ६। पा १। सू १०९॥

३ नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः। परिभाषेन्दुशे – ५२॥

४ "उत्तरकालप्रवृत्तिके" इति नास्ति ख पुस्तके॥

५ असिद्धं बहिरङ्गमन्तरङ्गे। परिभाषेन्दुशे – ५१॥

६ अ ८। पा ३। सू ३४॥

७ यथोद्देशं संज्ञापरिभाषम्। परिभाषेन्दुशे – २॥

[1]यत् सिद्धे इति । (भा)

न च तत्र पूर्व्वसूत्रेणैव सिद्धिः । अदिवचने तदप्रवृत्तेः । पूर्व्व-सूत्रविषये यथोद्देशस्यैव भाष्यकृताऽङ्गीकाराच्च ॥ नन्वीदाद्युपजीव-नायात्र कारणमित्यत आह

न चेति । (कै)

"हे अमुक अमुका" इत्यादौ तु अदस इत्यावर्त्त्य न विद्यते दस्य स्थाने सो यस्य तादृशादस इत्यर्थेनानुनासिकः खमतेऽपि भवत्येवेति भाष्याशयमाहुः । तादृशानामनभिधानमेवेत्यन्ये ॥

प्रकरणोत्कर्षेणेति । (कै)

संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥

सर्वेति । (कै)

प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः ॥ भाष्ये

[2]विप्रतिषेधाद्वेति । (भा)

---

१ यत्सिद्धे प्रगृह्यसंज्ञाकार्य्यं तदर्थमेतत् स्यात् ॥ अणोऽप्रगृह्यस्यानुनासिक इति । नैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत् प्रयोजनं स्यात् तत्रैवायं ब्रूयात् । अणोऽप्रगृह्यस्यानुनासिकोऽदसोनेति ॥

२ विप्रतिषेधाद्वा । अथवा प्रगृह्यसंज्ञाक्रियताम् अयादयो वेति प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते । पूर्वा च प्रगृह्यसंज्ञा परेऽयादयः । परा प्रगृह्यसंज्ञा करिष्यते । सूत्रविपर्यासः कृतो भवति । एवं तर्हि परैव प्रगृह्यसंज्ञा । कथम् । कार्यकालं संज्ञापरिभाषम् ॥

अन्तरङ्गत्वान्मूत्वादौ कृते पदान्तरसमभिव्याहारे अयादिभ्यः परत्वात् संज्ञासिद्धौ तत्सामर्थ्यान्मूत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धमाश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः ॥

ननु[1] "प्रगृह्यसंज्ञाऽभिनिवर्त्तमाने"त्यादि वक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतदित्यत आह

**दृष्टेति ॥** (कै)

भाष्ये

**परैवेति ।** (भा)

पूर्व्वं पाठेऽपि तत्र वाक्यार्थबोधाभावेनेति भावः ॥

**कथमिति ।** (भा)

पाठकृतं स्वगतं पूर्व्वत्वमनपगतमिति प्रश्नः । उत्तरयति

**कार्य्यकालमिति ।** (भा)

तत्पक्षे संज्ञायास्तस्य प्रदेशदेश एवार्थबोधस्तदुत्तरं च विरोधोपस्थितिस्तत्कार्य्यज्ञानं चेति तत्तत्र परत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति भावः ॥ परैवेत्येवकारेण पाठकृतं पूर्व्वत्वं विद्यमानमपि विप्रतिषेधसूत्रप्रवृत्तौ न नियामकमिति सूचितम् । परिभाषाणां तु तत्पक्षेऽपि तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये विप्रतिषेध सूत्र प्रवृत्तौ पाठकृतमेव तन्नियामकमिति तात्पर्य्यम् । आकडारस्थम-

---

१ प्रगृह्यसंज्ञाऽभिनिवर्त्तमानाऽयादीन् बाधते । अयादयोऽभिनिवर्त्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्ति ॥

पदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्र परया पूर्व्वबाधसिद्धिः ।

[1]य्वङः सम्प्रसारणम् (पा)

इति सूत्रस्थं[2] भसंज्ञायाः कार्य्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः ॥ परेतु

परैव (भा)

इत्यस्य संज्ञापदेन तत्कार्य्यं प्रकृतिभाव उच्यते इति भावः ॥ आशयानभिज्ञस्य प्रश्नः ।

कथमिति । (भा)

एकदेशिन उत्तरं

कार्य्यकालम् (भा)

इत्यादीत्याहुः ॥ एतेन कार्य्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव । अन्यथा

[3]ङमो ह्रस्वादचि (पा)

इत्यादौ त्रिपादीस्थे कार्य्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात् तत्र

---

१ अ ६ । पा १ । सू १३ ॥

२ अत्र भाष्यम् । अनुकारेणाहं विशेषयिष्यामः । अनाकारम् । अनकारान्तस्यानो योऽकार इति । एवमप्यनस्तद्वा अनस्तद्वा इत्यत्रापि प्राप्नोति । एवं तर्हि कार्य्यकालं संज्ञापरिभाषं यत्र कार्य्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति तत्रोपस्थितमिदं भवति यचि भमिति ॥

३ ङमो ह्रस्वादचि ङमुण्नित्यम् । ८ । ३ । ३२ ॥

[1]तस्मादित्युत्तरस्य (पा)

इत्येवेति सिद्धान्तासङ्गतिरुभयोरप्येकदेशस्थत्वेन परत्वासम्भवादित्यपास्तम् ॥

[2]द्वाभ्यामिति। (कै)

"योग" इति कर्मणि घञ्। "द्विकार्य्य" शब्दस्य "[3]पात्राद्यन्तत्वाद्" अस्त्रीलिङ्गस्य योगशब्देन

[4]कर्तृकरणे कृतेति (पा)

समासः। ईदूतोः प्रगृह्यसंज्ञेत्यस्य तत्कार्य्यं प्रकृतिभाव इत्यर्थः ॥

कदाचिदिति। (कै)

एवं च प्रकृते केवलासम्भवरूपः स इत्यर्थः ॥ केवल द्विकार्य्ययोगो न सर्व्वथा विप्रतिषेध इत्याह

तथाहीति ॥ (कै)

ईत्त्वमूत्त्वं चेति। (कै)

---

१ अ १। पा १। सू ६७ ॥

२ "द्विकार्य्ययोगो हि विप्रतिषेधः" इति महाभाष्यप्रतीकमादाय "द्वाभ्यां कार्य्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः" इत्युक्तम् ॥

३ पात्राद्यन्तस्य न (वा)। वार्त्तिकपाठे तु "पात्रादिभ्यः प्रतिषेधो वक्तव्य" इति पाठोऽस्ति। अपथं नपुंसकम्। २। ४। ३०। एतत् सूत्रस्थवार्त्तिकम् ॥

४ कर्तृकरणे कृता बहुलम्। अ २। पा १। सू ३२ ॥

तद्विघातेन संज्ञाभावे तत्कार्य्यप्रकृतिभावविघातः स्पष्ट एवेति भावः। केचित्तु संज्ञाकार्य्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः । वाक्यसंस्कारपक्षे मूलादितः पूर्व्वमेवायादिप्राप्त्या मूलाद्युत्तरं[१] च संज्ञायां तत्प्राप्त्या [२]युगपत् प्राप्त्यभावात् । तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनकमूलादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेध इति वार्त्तिकार्थस्तमपि दूषयति भाष्ये

**एवमपीति ॥** (भा)

**कार्यित्वेनाश्रयणादिति ।** (कै)

तत्सामर्थ्यादयादीन् प्रत्यपि सिद्धत्वमित्यर्थः । यथोद्देशे इदम् ॥

**[३]कथं कार्य्यकालम्** (भा)

इति तु प्रकृतिभावायादिविप्रतिषेधविषयमिदानीं तु स नेति स्पष्टमेव ॥

**असिद्धत्वाभावादिति ।** (कै)

ईत्त्वादीनामसिद्धत्वाभावादित्यन्वयः । सामान्यत एवासिद्धत्वाभावबोधनमित्यर्थः ॥

**तेषाम् ।** (कै)

ईत्त्वादीनाम् ॥

---

१ 'च' इति नास्ति 'इ' पुस्तके ॥

२ "युगपत्प्राप्ति" इति "ख" पुस्तके नास्ति ॥

३ "कथम् । कार्य्यकालं संज्ञापरिभाषम्" इत्युक्तं भाष्ये ॥

परत्वादिति । (कै)

ईत्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः ॥

व्याख्यानान्तरमिति । (कै)

प्रगृह्यत्वकार्य्यप्रकृतिभावेनायादीनां विप्रतिषेधपरमेव भाष्यम् ॥

[१]सतोः (भा)

इत्यस्य युगपत्प्राप्तयोरित्यर्थः ॥ वाक्यसंस्कारपक्षे ईत्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः कृते त्वीत्वादावस्येति न तयोर्युगपत्प्राप्तिरिति भावस्तदाह

[२]नचात्रेत्यादि ॥ (भ)

[३]अत्र । (भा)

[४]अयादिप्राप्तिकाले ॥ असत्त्वे हेतुः ।

[५]उभयमप्यसिद्धमिति। (भा)

"पूर्वत्रासिद्धेने"ति शेषः ॥ परिहरति ।

---

१ "सतोर्हि विप्रतिषेधो भवति" इत्यत्रैवोक्तं भाष्ये ॥
२ "नचात्रेत्वोत्त्वेस्तः" अत्रैवोक्तम् ॥
३ "अत्र" इति पूर्वोक्तभाष्यस्य 'अत्र' शब्दो बोद्धव्यम् ॥
४ आयादिप्राप्तिकाले । ख । इ ॥
५ "उभयमप्यसिद्धम्" अत्रैवोक्तं भाष्ये ॥

[1]आश्रयादिति । (भा)

पदसंस्कारपक्ष एवात्राश्रीयत इति भावः । एवं चोभयोर्युगपत् प्राप्तिः । प्रागृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वाद्यादीन् प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति क्लेशः ॥ परे त्वनुक्ते- दादिविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तम् । पक्षान्तरैरपि परिहारकरणादित्याहुः ॥

[2]रोः सुपीत्यस्यानन्तरमिति । (कै)

न चैवं

[3]हशि च (पा)

इत्यस्यैतदुत्तरत्वाद्

[4]रोरीति (पा)

इत्यस्याऽसिद्धत्वाऽऽपत्तौ मनोरथासिद्धिः ॥

[5]ढो ढे लोपः (पा)

[6]रो रि (पा)

इत्यनयोः

---

१ "आश्रयात् सिद्धत्वं च यथा रोरुत्वे। आश्रयात् सिद्धत्वं भविष्यति। तद्यथा। रुरुत्वे आश्रयात् सिद्धोभवति। किं पुनः कारणं रुरुत्वे आश्रयात् सिद्धो भवति। इत्याद्यत्रैवोक्तम् भाष्ये ॥

२ रोः सुपि। अ ८। पा ३। सू १६ ॥

३ अ ६। पा १। सू ११४ ॥ ४ ६ अ ८। पा ३। सू १४ ॥

५ अ ८। पा ३। सू १३ ॥

[1]यरोऽनुनासिक (पा)

इत्यतः पूर्वं पाठः कार्य्य इत्याशयात्॥ अनुनासिकपर्य्युदासेन चारितार्थ्यमाशङ्क्याह

**यथोद्देशेति॥** (कै)

**एतद्।** (कै)

[2]"वचनसामर्थ्याद्वा" इति वार्त्तिकं तद्व्याख्यानभाष्यं चेत्यर्थः॥ पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह

**अथवेति।** (भा)

वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्याद्यादीन् प्रत्यपि सिद्धत्वं ज्ञाप्यते इति कार्य्यकालेऽपि न दोषः। किं च यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात् तद्दृष्ट्या [3]मौत्वस्य सिद्धत्वेन संज्ञाया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव। प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेन। एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः॥ भाष्ये [4]"योगविभागाद्वा" इति वार्त्तिकं व्याचष्टे

**अथवेति॥** (भा)

---

१ अ ८। पा ४। सू ४५॥

२ "अथवा प्रगृह्यसंज्ञावचनसामर्थ्याद्यादयो न भविष्यन्ति" इत्यत्रैव भाष्ये॥

३ ईत्वस्य। ख॥

४ "अथवा योगविभागः करिष्यते" इत्यत्रैवोक्तम्॥

[1]"अदस" इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र [2]"माद्" इत्यस्य विशेषणानापत्तिरत आह

सम्बन्धेति ॥ (कै)

[3]यत् तत्सिद्ध इति । (भा)

मूले इति शेषः । यत्र कार्ये मूलं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः ॥

अपरो यदसिद्धे इति (भा)

यत्र मूलमसिद्धं तदित्यर्थः ॥ ननु समस्तत्वात् समुदायानुवृत्तिः स्यात् तत्कथमेतो निवृत्तिरत आह

ईदूतोरेवेति ॥ (कै)

नान्यथेति । (कै)

सिद्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः ॥ भाष्ये [4]"मार्थादीदाद्यर्थानां वा" इति वार्त्तिकं व्याचष्टे

अथवाहेति ॥ (भा)

नन्वेवं सति "अदे" "अदौ" इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मौलमूलयोः कृतयोरौकारादीनामप्रगृह्यत्वादेतदैयर्थ्यम् अल्विधि-

---

१ "अदसो माद्" इत्यत्र ॥

२ "ततो मात् । माच्च परे ईदादयः प्रगृह्यसंज्ञाभवन्तीति" इत्युक्तम् भाष्ये ॥

३ एको यत् तत्सिद्धे प्रगृह्यकार्यं तदर्थः । इत्यत्रैवोक्तं भाष्ये ॥

४ "अथवाहायमदसो मादिति न च ईत्त्वोत्त्वे स्तः । नापि मकारः । तत एव विज्ञास्यामः । मार्थादीदाद्यर्थानामिति" इत्यत्रैवोक्तं भाष्ये ॥

त्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनादोषात् ॥

द्वितीयेति । (कै)

द्वितीयपदस्थेऽचि यत्किञ्चित्कार्य्यं तत्रासिद्धत्वं नेत्यर्थः। अन्ये तु [1]"अथवा वचनसामर्थ्यादि"त्यादिभाष्ये भाष्यकृत एवोक्तिरत एव साम्प्रतपुस्तकेषु वार्त्तिकापाठ इत्याहुः॥ अन्ये तु अन्ये

[2]उक्तं वा (भा)

इत्यस्य वार्त्तिकत्वं मत्वा कोशे वार्त्तिकपाठो भ्रष्ट इत्याहुः ॥

सिद्धे इति । (भा)

प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना स प्रयोजनं नेति सामर्थ्यात् तान् प्रत्यपि तौ सिद्धाविति भावः ॥ विशेष्याऽसन्निधाने कथं तदन्तविधिरत आह

---

१ अत्रैवोक्तं भाष्ये ॥

२ उक्तं वा । किमुक्तम् । अदस ईत्त्वोत्त्वे स्वरे बहिष्पदलक्षणे* सिद्धे वक्तव्ये प्रगृह्यसंज्ञायां चेति । अत्रैव भाष्ये ॥ स्वरितो वानुदात्ते पदादौ ( ८ । २ । ६ ) इति सूत्रव्याख्यानावसरे भगवता एतद् वार्त्तिकद्वयमुक्तम् । तथा च वार्त्तिकम् । अदस ईत्त्वोत्त्वे स्वरे बहिष्पदलक्षणे । भा – वा । अदस ईत्त्वोत्त्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र । प्रगृह्यसंज्ञायां च । भा – वा । प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र ॥

---

* "अदस ईत्त्वोत्त्वे स्वरे बहिष्पदलक्षणे प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये इति" इति पाठः किल्हर्नमुद्रापितभाष्यपुस्तकेऽस्ति ॥

पूर्वसूत्र इति। (कै)

अर्थाधिकारादिति भावः॥

शब्दमात्रमिति। (कै)

एवं च विशेष्याभावान्न तदन्तविधिरिति भावः॥

---

# शि।१।१।१३॥



प्रत्यक्षमेवेति। (कै)

एवं च "दृष्टेति" भाष्यस्य दृष्टैवेत्यर्थः॥

युष्मे इति। (कै)

[१]सुपां सुलुग् (पा)

इति विभक्त्यादेशः शेशब्द इत्यर्थः। शेस्त्वासावर्थवाँश्च तस्य ग्रहणादित्यर्थः। शक्तिग्रहनिरपेक्षप्रतीतिकत्वेनान्तरङ्गत्वम्॥ अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम्॥ शब्दान्तरैरप्रत्यायनादसाधारणत्वम्॥ अप्रादुर्भावोऽप्रतीतिः॥ [२]मत्वर्थीयो लोमादिशः॥

आनर्थक्यमिति। (कै)

प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रवृत्तेति भावः॥

---

१ सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः। ७।१।३९॥

२ लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१००॥

# निपात एकाजनाङ्। १। १। १४॥

**आनर्थक्यादिति।** (कै)

अर्थवत्त्वानिश्चयादित्यर्थः॥ तत्र हेतुः।

**कल्पितरूपत्वादिति॥** (कै)

ततः किं तत्राह

**कल्पनाया इति।** (कै)

अत एव केचिच्छतिपमन्ये शप्तिपौ वदन्ति तच्चैयतोऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः॥ ननु निपातग्रहणाभावे "एकाजि"ति वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न। बहुव्रीहिरित्याशयात्। [1]गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः। पर्युदासेनैवाजूपत्वे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वात्। न्यायानित्यत्वाच्च। एतेन सत्यभिधाने "अनिरिरभवद् ईश्भवद्" इत्यादौ प्रगृह्यत्वं न स्याद् गौणमुख्यन्यायादितिपरास्तम्। अत एव

[2]**आद्** (पा)

इत्यत्रैव च्व्यन्तप्रतिषेध आरब्धः॥

[3]**अन्वयेति।** (कै)

१ गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्ययः। परिभाषेन्दुशे – १६॥

२ अ ७। पा ३। सू ११८॥

३ अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः॥

व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः। तस्यैव चासम्भवाच्च-प्रवृत्त्युपयोगित्वादिति भावः। वस्तुतोऽनर्थकनिपातेऽप्यस्य प्रवृत्तेः [1]"ओत्" सूत्रे भाष्ये वक्ष्यमाणत्वाद्द्योतकार्थवत एव ग्रहणमिति न नियमः। प्रश्नाशयस्तु "अनाङ्" इति पर्युदासाद् अप्रत्ययस्य ग्रहणमिति॥ उत्तराशयस्तु पर्युदासेन तथाश्रयणे न मानम्। निपातग्रहणादेव तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति॥ [2]"अ आगच्छ" इत्यत्रापि [3]प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथञ्चिदुदाहरणत्वं यदि सवर्णदीर्घे तथा बोधः॥

[4]एकग्रहणेति। (कै)

स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावेनैकग्रहणं विनापि कर्मधारयार्थलाभादिति भावः॥ अन्तरङ्गत्वे हेतुमाह

वर्त्तीति॥ (कै)

भाष्ये

इह कस्मादिति। (भा)

अजन्तो निपात इत्यर्थ इति प्रश्नः॥

१ अ १। पा १। सू १५॥ २ अततेर्डः। अ+आगच्छ। आगच्छ॥
३ "न प्लुते" इत्यस्ति "इ" पुस्तके॥
४ अत्राह भगवान् भाष्यकारः। एकाजिति किमर्थम्। प्रेदं ब्रह्म प्रेदं क्षत्रम्। एकाजित्युच्यमानेऽत्रापि प्राप्नोति। एषोऽपि ह्येकाच्। एकाजिति नायं बहुव्रीहिः। एकोऽज् यस्मिन् सोऽयमेकाच् एकाजिति। किं तर्हि। तत्पुरुषोऽयं समानाधिकरणः। एकः। अच्। एकाच् एकाजिति॥

## अजेव य इति। (भा)

निपातेनाज्विशेषणादित्यर्थः॥

## किं वक्तव्यमिति। (भा)

[१]निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः॥

## यदि हीति। (भा)

अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः॥

## प्रगृह्यसंज्ञायामिति। (कै)

ननु षान्तस्य प्रगृह्यत्वे [२]"एकदेशविकृत" न्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न। प्रकृतिभावेऽप्यसिद्धत्वात्॥ अथ निपातस्य विशेष्यतयाऽजन्त इति व्याख्यानेऽप्यज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाजूपव्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति

## [३]एवमपीति (भा)

भाष्ये॥

## अन्यतरनिवृत्त्येति। (कै)

निपातस्य विशेषणत्वे तदन्तपरिभाषाऽप्रसक्तिरेवनिवृत्तिः। विशेष्यत्वे त्वजितिविशेषणसामर्थ्यात् तदन्तस्यैव ग्रहणे मुख्याजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः॥

---

१ निपातेनाविशेषणात्। इ। निपाते वाज्विशेषणात्। ख॥

२ एकदेशविकृतमनन्यवत्। परिभाषेन्दुशे — ३८॥

३ अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते विपर्ययस्तु न भवतीति विशेषाभावात् प्रश्नः॥

**विपर्ययः । (कै)**

निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः केवलाचो निवृत्तिरिति ॥

**इति विशेषाभावादिति । (कै)**

अत्र कारणाभावादित्यर्थः ॥ [1]"संज्ञा" [2]"येन विधिः" इति ॥ "अतिदेशः" [3]"आद्यन्तवदिति" ॥

**लाघ्यमिति । (कै)**

"उङ् शब्दे" इत्यत [4]आवश्यके ण्यदनभिधानान्नेति भावः ॥

**यदि तर्हीति । (कै)**

एवं च "इयमिह भवती"ति भाष्यमनुपपन्नमिति भावः ॥ ननु पूर्वं प्रवर्त्य पश्चात्परित्यागापेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह

**अथवेति ॥ (कै)**

ननु एकग्रहणाभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं तत्राह

**संज्ञाया इति ॥ (कै)**

**गुणत्वादिति । (कै)**

संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद् गुणत्वम् ।

---

१ भाष्ये द्वयोः परिभाषयोरिति । पारार्थ्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ ॥ २ येन विधिस्तदन्तस्य । १ । १ । ७२ ॥

३ आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥

४ ओरावश्यके । ३ । १ । १२५ ॥

नहि यागः पश्वर्थोऽपि तु यागार्थः पशुः। "ग्रहं सं मार्ष्टी"त्यादौ तु ग्रहार्थत्वात् संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसंख्या विवक्षितेति भावः॥ परे तु संज्ञा स्वकार्य्यद्वारा संज्ञ्युपकारिका न तु संज्ञी संज्ञोपकारकः। अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षितमिति मीमांसकमर्य्यादैव ज्यायसी भाष्यसंमता च इतीदं चिन्त्यम्। तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः॥

## जातिग्रहणम् (भा)

इत्यस्य तज्जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थः। अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसंगतिरेव प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्व्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च॥

## इहेत्यादि। (कै)

अत्रेदं चिन्त्यम्। समुदायसंज्ञयाऽवयवानामननुग्रहान्नात्र द्विर्वचनन्यायः। नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणं स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेव एकैकत्र सूत्रचारितार्थ्यादिति। तस्मात् तितउशब्दैकदेशे अउशब्दानुकरणे उक्तसमुदायानुकरणे वाऽनितिपरे निपातसंज्ञके ऽउ अकरोदित्यादौ प्रगृह्यत्वं स्यात्। तद्वारणायैकग्रहणमिति तत्त्वम्॥ भाष्ये

## दम्भेरिति। (भा)

"दम्भेः" सनि

[1]दम्भ इच्च (पा)

इतीत्त्वे

[2]सनीवन्त- (पा)

इतीडभावपक्षे इक् समीपो नकारो न ततो झलादिः सन्परः यतश्च भात्परः सन् न स इक् समीप इति

[3]हलन्ताच्च (पा)

इति कित्त्वाऽभावे

[4]अनिदिताम् (पा)

इति नलोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं सनश्च तस्मात् परत्वमिति कित्त्वे धिप्सतीतिसिद्धिरित्यर्थः। अनेन सामीप्यमव्यवहिते एवेति सूचितम् ॥

[5]प्रदर्शनाय। (कै)

---

१ अ ७। पा ४। सू ५६ ॥ २ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। ७। २। ४९ ॥ ३ हलन्ताच्च। १। २। १० ॥

४ अनिदितां हल उपधायाः क्ङिति। ६। ४। २४ ॥

५ ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय महाभाष्यकारः पृच्छति "अनाङ् इति किमर्थम्। आ उदकान्तात्। ओदकान्तात्। इह कस्मान्न भवति। आ एवं नु मन्यसे। आ एवं किल तदिति। सानुबन्धकस्येदमाकारस्य ग्रहणमननुबन्धकश्चायमाकारः। क्व पुनरयं सानुबन्धकः। क्व निरनुबन्धकः।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं* विद्याद्वाक्यस्मरणयोरङित्" ॥ (भा)

---

* "एतमातं ङितं विद्यात्" इत्यत्र "विन्द्याद्" इति पाठोऽपि क्वचिद् भाष्यपुस्तकेऽस्ति ॥

इह एतच्छब्देन पूर्व्वमनिर्दिष्टत्वादेनमित्यस्य एनादेशो न कृत इति कश्चित्। तन्न। अन्वादेशश्च कथितानुकथनमात्रं नत्विदमेव कथितस्येदमनुकथनमिति भाष्य कृता वक्ष्यमाणत्वात्। तस्माद् यत्किञ्चिद्विधाय वाक्यान्तरेण यदुपदिश्यते सोऽन्वादेशः। इह तु ईषदर्थादौ यो वर्त्तत इति वृत्तिर्नविधेया। किं तु परिचायकतामात्रेणोपात्ता। अतो न एनादेशः॥ एतेन "नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय" इत्यपि व्याख्यातम्॥ भीरुत्वस्य विधेयत्वाविवक्षणात्। सिद्धस्यैव हेतुत्वेनानुवादादिति दिक्॥ ईषदर्थे। आ उष्णम्। ओष्णम्॥ आङ् ईषदर्थे इति कुगतीति सूत्रे वार्त्तिककृता ङिद्यवकृतः (तत्रोक्तम्। "आङ् ईषदर्थे। आङ् ईषदर्थे इति वक्तव्यम्। आ कडारः। आ पिङ्गलः।" [कुगतिप्रादयः। २। २। १८।])। क्रियायोगे। आ इतः। एतः। प्रादिषु ङित्पठितः॥ मर्य्यादाभिविधौ चेति समाहारद्वन्द्वे आगमशासनस्यानित्यत्वान्नुमभावः। मर्य्यादया सहिते अभिविधाविति मध्यमपदलोपी वा समासः॥ मर्य्यादायाम्। आ उदकान्तात्। ओदकान्तात्॥ अभिविधौ। आ अहिच्छत्रात्। आहिच्छत्रात्॥

"विना तेनेतिमर्य्यादा सह तेनेत्यभिविधिः"

आङ् मर्य्यादाभिविध्योरिति च ङिन्निर्दिष्टः॥ पूर्व्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते। आ एवं नु मन्यसे। नैवं पूर्व्वममंस्थाः॥ सम्प्रत्येवं मन्यस इत्यर्थः। वाक्यारम्भसूचनाय आकार इत्यपरे। तथा स्मृतेः सूचक आकारः प्रयुज्यते। ततः स्मृतोऽर्थो निर्दिश्यते। आ एवं किल तत् इति। अत्र च वाक्यस्मरणयोरङिदित्यनैव तात्पर्य्यम्। अतो वाक्यस्मरणाभ्यामन्यत्र ईषदर्थाद्यभावेऽपि ङित्वं बोध्यम्। तेन "आ मे न्यस्य रजसो यदभ्र आँ अपो वृणान" इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वेन "आङोऽनुनासिकश्छन्दसि" ( ६। १। १२६। ) इति प्रवर्त्तते इति षष्ठे हरदत्तादयः॥

प्रदर्शनं कारयितुमित्यर्थः। किञ्चिद्विधानायोपात्तस्यान्यविधानाय पुनरुपादानमन्वादेशः प्रकृते च विधानद्वयाभावाद् "एतम्" इत्येनादेशो न कृत इत्याहुः॥

विना तेनेत्यादि। (कै)

यथा [1]"आ काशीं वृष्टो देव" इत्यादौ काशीमभिव्याप्य काशीं वर्जयित्वेति वार्थः॥

---

# ओत्।१।१।१५॥

दर्शनादिति। (कै)

वेदे चादीनां पादपूरणार्थानां च लोकेऽपीत्यादिः॥

अर्थभेदाभावेऽपि। (कै)

तन्नानात्वाभावेऽपि। अथवा अनर्थका निपातसमुदाय एवार्थवान् इति भावः। "उ" शब्दोऽत्र निरनुबन्धकः। तेन

[2]उञ (पा)

इत्यनेन सिद्धिरिति न भ्रमितव्यम्॥

पर्य्युदासे त्विति। (कै)

वस्तुतः पर्य्युदासेऽपि दोषः। आङ्भिन्नस्याशास्त्रीयत्वात्। न च स्वाश्रयमाङ्भिन्नत्वम्। आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मप्रयुक्तकार्य्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात्।

[1] "आकाशि–" इति पाठोऽप्यस्ति॥ [2] अ १। पा १। सू १७॥

न चान्तवत्त्वमेव दुर्लभं शास्त्रीयकार्य्याभावादिति वाच्यम् । तच्चापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्य्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति बोध्यम् ॥

## तस्याश्चेति । (कै)

प्रगृह्येषु पदपाठे इति शब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

भाष्ये

## [1]ओतश्चेति । (भा)

पूर्वसूत्रवच्चाप्यधिकाराद्गौणमुख्यन्यायस्याप्रवृत्तिरित्याशयः ॥

## प्रतिषिद्धार्थत्वादिति । (कै)

प्रतिषिद्धसंज्ञाकं पदं प्रतिषिद्धपदेनोच्यते ॥

## परत्वादिति । (कै)

"निषेधाश्च बलीयांस" इत्यस्य तु नायं विषयः । तस्य पूर्वेण सह पाठात् तन्निषेधकत्वादिति भावः ॥

## प्रतिपदोक्तस्येति । (कै)

न च [2]"प्रतिषिद्धार्थोऽयमारम्भ" इति पूर्वभाष्यासंगत्याऽचैतत् परि-

१ ओतश्चिवप्रतिषेधः । ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः । अदः । अभवत् । अदोऽभवत् । तिरोऽभवत् । न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति । अत्रैव भाष्ये ॥

२ अथवा* प्रतिषिद्धार्थोऽयमारम्भः । ओ षु यातं मरुतः । ओ षु यातं† वृहती शक्करी च । ओ चित्सखायं सख्या‡ ववृत्याम् । अत्रैवोक्तं भाष्ये ॥

* प्रतिषेधार्थोऽयमारम्भः । इति पाठोऽप्यस्ति ।

† इवती च शक्करी च । इति पाठोऽप्यस्ति । इवती च शक्करी । ख ॥

‡ ववृत्त्या । सम् ॥

भाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम्। अस्यैकदेश्युक्तित्वात्। तद्ध्वनयन् भाष्ये आह

**एवमपीति ॥** (भा)

ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह

**यस्य हीति ॥** (कै)

**प्रधानत्वात्।** (कै)

अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात्। तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम् ॥ गौणमुख्यन्यायबीजं दर्शयितु माह

**तच्च स्वं रूपमिति ॥** (कै)

प्राथम्यमेवोपपादयति

**[1]गौणे हीति।** (कै)

आरोपाय हि पूर्व्वं तदुपस्थितिरावश्यिकीति भावः ॥

**मुख्यार्थारोपेणेति।** (कै)

आरोपितसिंहत्ववान् मानवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः ॥ मुख्यस्यैव ग्रहणे युक्त्यन्तर माह

**अनियतश्चेति।** (कै)

सिंहशब्दस्य माणवकबलीवर्द्दादिषु प्रयोगादिति भावः ॥ एतेन वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम्। अनयैव तस्यापि वारणात्।

---

१ गौणे ह्यर्थे शब्दः प्रवर्त्तमानो मुख्यार्थारोपेणैव प्रवर्त्तते। अनियतश्च गौणोऽर्थः ॥

[1]ह्वावामश्च (पा)

इत्यादेस्तज्ज्ञापकस्य [2]लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तद्प्रवृत्तौ मानाभावाच्च॥ नचेयमपि अर्थवत्परिभाषामूलकत्वात् तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्त्ततां तत्रैवार्थोपस्थितेः सत्त्वादिति वाच्यम्। निपात इति विशिष्टरूपोपादानसत्त्वात्। निपातसंज्ञा हि चादिपदोपस्थितचादीनां सति सम्भवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणं न तु गौणार्थकानामिति भावः। एवं च कार्य्यकालपक्षेऽपि च्व्यन्ता निपाता इत्यस्याचानुपस्थितिरेतत्परिभाषावशात्। विशिष्टरूपपदेन सार्थवद्रूपमेवोच्यते॥ प्रकृते गौणत्वमुपपादयति

जाड्यादिनेति॥ (कै)

आरोपे बीजमाह

प्रकृतेः कर्तृत्वमिति। (कै)

एवं च गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः। यत्र च योगैश्वर्यशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः॥ ननु "सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत" इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तम्।

---

१ अ ३। पा २। सू २॥

२ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। परिभाषेन्दुशेखरे – १४४॥

[1]वृत्ताविति। (कै)

एवं च व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः॥ प्रकृतेरेव कर्तृत्वे हेतुमाह

संघीभवन्तीति। (कै)

ननु

[2]शब्दाश्रये च (भा)

इति भाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते स च। सर्वनामस्थानाम् असम्बुद्धिप्रातिपदिकस्यौत इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह

स्वार्थ इति। (कै)

स्वार्थादिप्रयुक्तकार्य्येण पूर्णस्य पदस्यार्थप्रतिपादनाय प्रयोगः। पदार्थान्तरान्वये बाधप्रतिसन्धाने गौणार्थप्रतीतेरिति भावः। आक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावाच्च॥

गौणापेक्षयेति। (कै)

मुख्यशब्दस्य गौणापेक्षया सम्बन्धिशब्दत्वाद् गौणाभावे गौणस्य बुद्ध्यसन्निधाने मुख्यव्यपदेशस्य मुख्यपदस्याभावादित्यन्वयः॥ एवं च

शब्दाश्रये च (भा)

इति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये

---

१ गोऽभवदित्यत्र वृत्तौ प्रकृतेः कर्तृत्वं संघीभवन्ति ब्राह्मणा इति बहुवचनदर्शनात्॥ २ शब्दाश्रये च वृद्ध्यात्त्वे। भा॥

इत्यर्थः । पद्व्यपदेशरहितस्य कार्यित्वेनाऽऽश्रयणमिति फलितमिति तात्पर्य्यम् ॥ ननु द्वितीयादेः कर्मत्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासम्बन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात् प्रत्येकं प्रवर्त्तते ततश्च पूर्व्वमेव गौणत्वादात्वं न स्याद् अत आह

तत्रेति ॥ (कै)

श्रौतः क्रियासम्बन्ध इति । (कै)

द्वितीयाश्रुत्यनुपपत्त्या कल्पित इत्यर्थः । विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वयः इति ततः प्राग्गुणे साक्षात्परम्पराभाधारत्वेन द्रव्ये च साक्षात् सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः ॥

वाक्यीयान्यायात् । (कै)

आकाङ्क्षादिमूलकशक्त्या ॥

पश्चात् । (कै)

विभक्त्युत्पत्त्यनन्तरम् ॥

एवमिति । (कै)

द्वितीयादेः सामान्यतः क्रियासम्बन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकान्वयः पश्चादेव । एवं च कर्मणोरेव विशेष्यविशेषणभावो न तु विशिष्टस्य कर्मत्वमिति भावः । यत्तु "विभक्त्यर्थस्य क्रियाकारकसम्बन्धरूपत्वेन तयोः सम्बन्धबोधः श्रुतिकृत" इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोध एवं गां वाहीकमानये-

त्यादावपीति कैयटार्थं व्याख्याय दूषयन्ति। गां वाहीकं पाठये-त्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासम्बन्ध एवासम्भवी तत्र पूर्व्वमेव गौणत्वावगतेरात्वाद्यनापत्तिरिति तदेतेन परास्तम्। विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्राति-पदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च। तादृशबोध-द्वयस्य कल्पने गौरवाच्च। अनुभवाभावाच्च। किं च अपदस्याप्रयो-गेण बोद्धृभिः सर्व्वत्र पदस्यैव गौणार्थत्वग्रहेण "अत्वं त्वं सम्पद्यते अमहान् महान् भूतः तद्भवति" इत्यादौ भाष्यप्रयोगे त्वाद्यादेश-दीर्घादीनां करणेन चास्य न्यायस्य पदकार्य्यमात्रविषयत्वमुपात्त-विशिष्टरूपविषयत्वं चेत्यपि बोध्यम्। अत एव

[1]अत इञ् (पा)

इत्यादेः अङ्गिरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः। किं च [2]"गामित्युक्ते

---

१ अ ४। पा १। सू ९५॥

२ पदार्थादन्यस्यानुपलब्धिरिति चेत् पदार्थाभिसम्बन्धस्योपलब्धिः।*। पदार्थादन्यस्य अनुपलब्धिरिति चेदिदमुच्यते। पदार्थाभिसम्बन्धस्योप-लब्धिर्भवति वाक्ये। इह देवदत्त इत्युक्ते कर्त्ता निर्दिष्टः कर्म क्रिया-गुणौ चानिर्दिष्टौ। गामित्युक्ते कर्मनिर्दिष्टं कर्त्ताक्रियागुणौ चानि-र्दिष्टौ। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्टः। शुक्लामित्युक्ते गुणो निर्दिष्टः कर्तृकर्मणी क्रिया चानिर्दिष्टा। इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टं भवति। देवदत्त एव कर्त्ता नान्यः। गौरेव कर्म नान्यत्। अभ्याजिरेव क्रिया नान्या। शुक्लामेव न कृष्णामिति। एतेषां पदानां सामान्ये वर्त्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः॥ भा – १ – २ – ४५॥

सर्वा क्रिया प्रसक्ते"त्याद्यर्थवत्सूत्रस्थभाष्यस्वरसात् [1]"संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति" इति वृद्धिसूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मधुकण्ठ्याख्यैव तस्योचिता। प्रयोक्ताऽपि पदान्येवार्थे मुख्ये गौणे वा [2]प्रयुयुक्षति न तु प्रातिपदिकादिक्रमेणेति सूच्यते

पदकार्य्येष्विति ॥ (कै)

सामानाधिकरण्यादितीदमुपलक्षणं पठनादिक्रियान्वयादित्यपि बोध्यम् ॥

---

# उञ ऊँ। १। १। १७-१८॥

प्रसङ्ग इति। (कै)

एवं चात्र [3]ऊँ आदेशः प्राप्नोतीति भावः ॥

संज्ञासिद्धिरिति। (कै)

[4]"निपात एकाज्" इत्यनेनेत्यर्थः। स्थानिवद्भावेन तु नैतल्लभ्यम्। एकादेशस्यान्यवृत्तिधर्मत्वात्। एकादेशस्थान्यस्याचवृत्तिधर्मस्तु ना-

---

१ संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति। तद्यथा। आहर पात्रम्। पात्रमाहरेति। भा–१–१–१ ॥

२ अत्र ग्रन्थकर्त्तुरेव प्रमादो यत् परस्मैपदम् ॥

३ आदेशस्यायमनुनासिक इति निर्देशादेवश्यक्षम्। तथा च वक्ष्यप्रातिशाख्यम्। "उकारस्येति कारयोग युक्तो रक्तो एक्तो द्राघितः प्लावलेन" इति। रक्तसंज्ञोऽनुनासिकः ॥

४ अ १। पा १। सू १४ ॥

र्थम् । "उञ" इति समुदायेऽपि सत्त्वात् । तेनान्तादिवद्भावेन तादूप्यातिदेशेऽपि न दोषः ॥ भाष्ये

यद्युञ इति । (भा)

सामान्येन ज्ञापकमिति भावः । वत्वाभावपक्षे ऊँ आदेशो न स्यादित्यपि दोषो बोध्यः ॥

नित्यैवेति । (कै)

आदेशाभावपक्ष इत्यर्थः ॥

न तु वितीति । (कै)

न च उ इतीत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात् पक्षे "वितीति" भविष्यतीति वाच्यम् । मयः परत्वे "किम्वितो"त्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात् । शाकल्यानुवृत्तिसामर्थ्यान्निपातेति प्रगृह्यत्वाभावे मय इति वत्वस्यासिद्धत्वेन [1]"इको यणचि" इति वत्वेऽनुस्वारापत्तेः । "उ इति" इत्यतः सानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः । अन्ये तु अनेन प्रकरणात् प्रगृह्यत्वस्य ऊँ आदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे "ऊँ इति विति" इति सिद्ध्यति न तु "उ इति"। अतो योगविभागः । सत्यपवादे विशिष्टे ऊँ आदेशे हि असति निपातेति प्रगृह्यत्वं स्यात् । अप्रवर्त्तमानापवादस्योत्सर्गबाधकत्वाभावात् । अत एव [2]"पारे मध्ये" इत्यव्ययीभावाभावे उत्सर्गः

१ अ ६ । पा १ । सू ७७ ॥

२ पारे मध्ये षष्ठ्या वा । अ २ । पा १ । सू १८ ॥

षष्ठीसमासो भवतीति वाच्यम्। प्रगृह्यपदस्य सर्वत्र साक्षादुद्देश्य-सम्बन्धस्य कृत्स्नेनाच विधेयविशेषणत्वे मानाभावात् सह विधानेन वाक्यभेदस्याप्यभावात् स्थानिवद्भावेन च ऊँ इत्यस्य प्रगृह्यकार्य्यं बोध्यम्। एवं च पक्षे प्रगृह्यत्वाभावेऽप्यस्य तात्पर्य्यान्नितदभावे निपात इत्यस्य प्रवृत्तेरित्याहुः॥

## प्रगृह्यस्येति। (कै)

अनुवर्त्तमानप्रगृह्यपदस्यादेशेन सम्बन्धे उञ्माचस्य नित्यं प्रगृह्य-संज्ञकस्य ऊँ भावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधा-नस्य वैयर्थ्यापत्तेरनुवर्त्तमानं प्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य-स्थानिना सम्बध्यत इति भावः॥

## द्वे एवेति। (कै)

न च "उ इती"ति रूपमपि निरनुबन्धकोकारमादाय सिद्धम्। सानुबन्धकप्रतीत्यनापत्तेः। मयः परत्वे "किम्विति" इत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च। वस्तुतस्तु "उञ" इत्यस्याचानुवृत्तस्यार्थाधिकारादप्रगृह्यपरतैव। "प्रगृह्यम्" इतिचादेशविशेषणमेव। तथैव भाष्यस्वरसादिति "ऊँ इति" "उ इति" च रूपे स्यातां न तु "वितीति" तदर्थं विकल्पानु-वृत्तिः। "ऊँ" इति दीर्घोच्चारणात् प्रगृह्यपदस्याच सम्बन्ध इति सर्वमवदातम्॥

## किमर्थो योगविभागः। (भा)

प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्याद् एवं च "ऊँ इति" "वितीति" च रूपे ते चैकयोगेऽपि सिद्धात

इति प्रश्नः। एवं चैकयोगे वितीति न सिद्ध्यतीति प्राचीनकैयट-लेख एवेति बोध्यम्॥

शाकल्येति। (कै)

एवं च योगविभागसामर्थ्याच्छाकल्यानुवृत्तिसामर्थ्याच्च न यथाश्रुतं किन्तु विकल्पमात्र तात्पर्य्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः। एवं च शाकल्यमत एव विकल्पः फलितस्तदाह भाष्ये

[1]शाकल्यस्य विभाषेति॥ (भा)

शाकल्यमते ऊँ आदेशविकल्पे यत् फलति तद्दर्शयति

प्रगृह्यसंज्ञाऽऽदेशश्चेति। (कै)

तन्मते पर्य्यायेणोभयं सिद्ध्यतीत्यर्थः॥ ननु "प्रगृह्यम्" इत्यस्य प्रथमान्तस्य कथम् "उञ" इत्यनेन षष्ठ्यन्तेनान्वयः इत्यत आह

यद्यपीति॥ (कै)

फलरूपतयेति। (कै)

फलं संज्ञाया बोध्यतया संज्ञिनः। तेन च तद्बोधकं पदं लक्ष्यते। तद्रूपतया। तत्समानविभक्तिकतयेत्यर्थः॥ [2]"द्विवचनाद्यभिधेयः"

---

[1] ऊँ वा शाकल्यस्य। शाकल्यस्याचार्य्यस्य मतेन ऊँ विभाषा यथा स्यात्। ऊँ इति उ इति। अन्येषामाचार्य्याणां मतेन विति। अत्रैव भाष्ये॥

[2] तत्र यद्यपि पूर्वसूत्रे फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयः। तथापीहोञ इति षष्ठीनिर्देशात् स्वरूपपदार्थकः सम्पद्यते। अत्रैव कैयटे॥

इति बहुव्रीहिः। प्रगृह्यशब्दवद्भिन्नं द्विवचनादीति बोधः। प्रगृह्यशब्दवत्त्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम्॥

**स्वरूपपदार्थक इति। (कै)**

उक्तो वाचकं प्रगृह्यपदमित्यर्थादिति भावः। वस्तुतः पूर्वचापि शब्दपर एव शब्दार्थयोरभेदात् सामानाधिकरण्यं पटः शुक्ल इतिवत्। प्रकृते तु पटस्य शुक्ल इत्यत्रेवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः। केचित्तु प्रदेशे वृद्धिपदाभिन्ना आदैच् इति उपस्थितिः। संज्ञावाक्ये तु तथा शाब्दबोधः। द्विवचनाद्यभिधेय इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः। षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति॥

---

# ईदूतौ च सप्तम्यर्थे।१।१।१९॥

ईकारोकारात्मकसप्तम्या असम्भवं मत्वाह

**सप्तमीसहेत्यादि। (कै)**

तात्पर्यानुपपत्त्या च लक्षणेति भावः॥

**सप्तम्यां वेति। (कै)**

"सप्तमीति" पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः। असन्दिग्धिकवचनापेक्षयेदं व्याख्यमिति तात्पर्यम्॥

**लुप्तायामपीति । (कै)**

न तु [1]"लुमतेति" निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थोऽपीति भावः ॥ ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे [2]"प्रत्ययलक्षणेन" सिद्धं "सोमो गौरीति" तत्राह

**संज्ञेति ॥ (कै)**

**सप्तम्या एवेति । (कै)**

सप्तमीपदस्य लुप्तसप्तम्यन्तत्वे सप्तमीसहचरितत्वाल्लाक्षणिकत्वे च न मानमिति भावः । यद्यपीकारोकारसप्तम्योरसम्भव एव तत्र मानं तथापि [3]"वचनाद्" इत्यादिना तदच्युतीत्यत्र तात्पर्य्यम् ॥

**असत्याश्च कार्य्याभावादिति । (कै)**

प्रगृह्यसंज्ञाकार्य्यं हि सन्धिकार्य्याभावफलकप्रकृतिभावः । लुप्ते षष्ठ्यर्थे प्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्य्याप्राप्त्या प्रकृतिभावानुपयोगात् तत्कार्य्याभाव इत्यर्थः । तदेवाह

**प्रत्ययनिमित्तमित्यादिना ॥ (कै)**

**पूर्व्वसवर्ण इति । (कै)**

स च [4]"सुपां सुलुग्" इत्यनेन ॥

---

१ न लुमताङ्गस्य । अ १ । पा १ । सू ६३ ॥

२ प्रत्ययलोपे प्रत्ययलक्षणम् । अ १ । पा १ । सू ६२ ॥

३ नचास्ति सप्तमी ईदूतौ । तत्र वचनाद्भविष्यति । वचनाद्यत्र दीर्घत्वम् । नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । यत्र सप्तम्या दीर्घत्वमुच्यते । दृतिं न शुष्कं सरसी शयानमिति । अत्रैव भाष्ये ॥

४ सुपां सुलुक्पूर्व्वसवर्णाच्छेयाडाड्यायाजालः । अ ७ । पा १ । सू ३९ ॥

एकादेशमिति। (कै)

"परत्वाद्" [1]"वार्णादाङ्गस्य बलीयस्त्वाच्च" इति भावः। एवं च्यन्ते गोरीत्यादौ लुक आवश्यकत्वेन तदर्थम् अर्थग्रहणमिति तात्पर्य्यम्॥

सर्वत्रैवेति। (कै)

ननु "ययी"त्यादिभ्यो ङौ दीर्घे "तनू" इत्यादौ ओः सुपोः पूर्व्वसवर्णादेशे च ईदूदन्तसप्तमीसम्भवात् कथमेतदिति चेन्न। "ईदूत्सप्तमी प्रगृह्यम्"। "अदसः"। एच्च द्विवचनम् इत्येव सिद्धे सूत्रान्तरे "ईदूतौ सप्तमी"ति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयात्नदोष इति केचित्। तन्न। "न चास्ति सप्तमी ईदूतौ" इति भाष्यासङ्गतेः। तस्मादेतद्भाष्यप्रामाण्यात् तेषामनभिधानमिति तात्पर्य्यम्॥

सरः शब्दादिति। (कै)

सरस् शब्दस्यासुन्नन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययाद्

दृतिं न शुष्कं सरसी शयानम् (भा)

इत्यत्र "सरसी" इत्यस्यान्तोदात्तत्वं बोध्यम्॥

निराकर्त्तुः संशयार्थो यदि शब्दोऽनुपपन्न इत्यत आह

सम्भावनायामिति। (कै)

शास्त्राणि चेत् प्रमाणं स्युरितिवदसन्दिग्धे सन्दिग्धवद् वचनमिति भावः। "सरसी" शब्दो यदि ङीषन्तस्तदाऽन्तोदात्तत्वं न्यायसिद्धम्। असुन उगन्तत्वाद् ङीबन्तत्वे तु स्वरव्यत्ययादेव

---

१ वार्णादाङ्गं बलीयो भवति। परिभाषेन्दुशे — ५६।

तत्त्वम् । एवं च ततो लुकैवोक्तप्रयोगसिद्धेः [1]"इयाड्" इति वार्त्तिके ईकारादेशो न विधेय इति भाष्याशयः । तस्मात् पूर्वोक्तरीत्या वचनसामर्थ्याल्लुकेऽपि सिद्धिः । सप्तमीसहचरितत्वं च "प्रत्ययलक्षणेन" बोध्यम् ॥

## संज्ञायामितीति । (कै)

अत एवाग्रे भाष्ये "अजहत्स्वार्था वृत्तिरिति" संगच्छते । न च वाक्येन संज्ञाऽनवगमादस्य नित्यसमासत्वे "वाप्यामश्व" इति विग्रहो नोचित इति वाच्यम् । वाक्यात् संज्ञिनोऽनवगमेन नित्यसमासत्वेऽपि न तद्विधायके वा ग्रहणासम्बन्ध इति समासाघटकी-भूतानां तद्विषये विग्रहाभावे मानाभावात् । ध्वनितं चेदं [2]"द्वि-तीयतृतीये"ति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यते ॥

## सप्तमीसहचरितमिति । (कै)

[3]"प्रत्ययलक्षणेनेति" भावः ॥

## वर्णवदानर्थक्यादिति । (कै)

[4]"संज्ञायाम्" इति समासेऽस्य रूढिशब्दत्वादवयवार्थाप्रतीतेरिति

---

१ इयाडियाजीकाराणामुपसंख्यानम् । (सुपां सुलुक्—७ । १ । ३९ । एतत्सूत्रस्थवार्त्तिकम् ) इयाडियाजीकाराणामुपसंख्यानं कर्त्तव्यम् । दार्विया परिस्रन् । इया । डियाच् । सुक्षेत्रिया सुगात्रुया । डियाच् । ईकार । दृतिं न शुष्कं सरसी शयानम् । तत्रैव भाष्ये ॥

२ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । २ । २ । ३ ॥

३ प्रत्ययलोपे प्रत्ययलक्षणम् । १ । १ । ६२ ॥

४ अ २ । पा १ । सू ४४ ॥

भावः । [1]वाप्यामश्व इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां "रथेन तरति" इत्यादिविग्रहप्रदर्शनवद्बोध्यम् । अत एव

"अजहत्स्वार्था तु तत्रैव यत्रूढिर्विरोधिनि"

इति हर्युक्तम् ॥ भाष्ये

**अथाजहत्स्वार्थायामिति ।** (भा)

[2]"सुप्सुपा" इति समासेन केवलयौगिकेत्यर्थः ॥

**प्रधानार्थमपीति ।** (कै)

अवयवपदशक्तिसमुदायशक्तिसहकारेण गृहीतशक्तिकादापीपदात् स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः । तत्र समुदायशक्तिः संसर्गांश एव तदाह

**स्वार्थसंसृष्टस्येत्यादि ॥** (कै)

**विवेकानवगमात् ।** (कै)

पृथगनुपस्थितेरित्यर्थः ॥

पांसूदकं मिश्रितं यथा संसृष्टमेव ज्ञानविषयो न तु पृथक् तथा समासात् संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः ॥ "यावान्" इत्यस्य विवरणं "केवल" इति । केवलं विवृणोति ।

**असंसृष्ट उद्भूत इति ।** (कै)

"असंसृष्टत्वं" विशेषणाविशिष्टत्वम् । "उद्भूतत्वम्" इतराविशेषणत्व-

---

१ "वाप्यामश्वो वाप्यश्व" इति भाष्ये ॥

२ "सह सुपा" ( २ । १ । ४ । ) इति योगविभागात् समासः ॥

मिति बोध्यम्॥ [1]समुदायरूपोऽर्थः पूर्वपदार्थविशिष्ट उत्तरपदार्थो-ऽभिधीयतेऽभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः॥ अर्थग्रहणसामर्थ्यात् सप्तम्यर्थमात्रपर्य्यवसन्नार्थग्रहणमिति भावः॥ "गौरी" इत्यादौ तु अस्त्येव गौर्य्यादिपदानां सप्तम्यर्थपर्य्यवसन्नत्वम्। समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव सप्तम्यर्थ-पर्य्यवसन्नत्वरूपत्वात्। न चार्थग्रहणेऽपि गौरीत्याद्यसिद्धिः सप्तम्यर्थे इकाराद्यभावात् ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्याभावादिति वाच्यम्। सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात्॥

---

# दाधा घ्वदाप्। १। १। २०॥

## दाधाशब्दयोरिति। (कै)

[2]प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः॥

---

१ अत्र भाष्यम्। समुदायार्थोऽभिधीयते।

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते॥१॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्॥२॥

२ तत्र दारूपाश्चत्वारः। डुदाञ्। प्रणिददाति। दाण्। प्रणियच्छति। दो। प्रणिद्यति। देङ्। प्रणिदयते। धारूपौ द्वौ। डुधाञ्। प्रणि-दधाति। धेट्। प्रणिधयति वत्सो मातरम्॥

## दोदेङ्धेटामेजन्तानामिति। (कै)

एषां चाच [1]"प्रकृतिवदनुकरणं भवति" इति न्यायाद् [2]"अशिति" इति प्रसज्यप्रतिषेधाश्रयणाच्चाऽऽत्वमिति भावः। अत्र च पक्षे [3]लक्षण-प्रतिपदोक्तपरिभाषा [4]"निरनुबन्धकपरिभाषादीनां न प्रवृत्तिः। सर्वेषां स्वरूपेणैवानुकृतत्वात्। दारयतिधारयत्योश्च नातिप्रसङ्गः। तयोरनुकरणे आत्त्वासम्भवेनेह इष्ट इत्यनयोरनुपात्तत्वात्। दीङोऽपि नेह ग्रहणम्। एज्विषयाभावेन तदनुकरणे आत्त्वासम्भवादिति बोध्यम्॥ ननु "आत्त्वभूतानाम्" इत्यस्य जातात्त्वानामित्यर्थे दाणादीनां संज्ञा न स्याद् निष्ठायाः पूर्वनिपातश्च स्यादत आह

## भवतेरिति। (कै)

प्राप्तात्त्वानामित्यर्थः॥

## प्रमाणाभावादिति। (कै)

प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे सम्भवति अनुपस्थितैजन्तानुकरणे प्रमाणाभाव इत्यर्थः॥

## गौरवाच्चेति। (कै)

---

१ परिभाषेन्दुशे – ३६। एषा "ष्णियो दीर्घाद्" (८। २। ४६) इति सूत्रे भाष्ये स्पष्टा॥

२ "आदेच उपदेशेऽशिति" (६। १। ४५) इत्यत्र "अशिति" इति प्रसज्यप्रतिषेधः। तथाच भाष्यम्। "अस्तु तर्हि प्रसज्यप्रतिषेधः शिति नेति"॥

३ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। परिभाषेन्दुशे–११३॥

४ निरनुबन्धकग्रहणे न सानुबन्धकस्य। परिभाषेन्दुशे – ८१॥

दीङ्मृजादावात्त्वे कृते प्रणिदातेत्यत्र [1]“नेर्गदने”ति णत्वाप्राप्तेश्चेत्यपि बोध्यम् ॥ एकशेषस्य सर्वदाधारूपाणामानन्त्येन ज्ञानासम्भवाद्दुर्ज्ञेयत्वेऽप्याह

सामान्येति ॥ (कै)

ननु समाहारद्वन्द्वे दाधमिति स्यादन्यत्र दाधाविति स्यादत आह

पृथक् पदमिति । (कै)

ओ हले यले लोपे च निर्विसर्गं साधु । विज्ञातानां

[2]दो दद् घोः (पा)

इति सूत्रे घेणिवृत्त्यर्थदाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा वार्त्तिके [3]“प्रिदर्थम्” इत्युक्तम् ॥

[4]भारद्वाजीयैस्तु तावद्विवेकासमर्थान् प्रति “विज्ञातार्थम्” इत्यप्युक्तम् ॥ “प्रणिदाता” इत्यादौ लाक्षणिकत्वं स्फुटयति

द्यतेर्ङो वेति ॥ (कै)

“प्रकृतय” इत्यस्य सापेक्षत्वादाह

ईत्वादेरिति ॥ (कै)

षष्ठीसमासः कर्मधारयो वा उभयथाप्यव्याप्तिरिति प्रश्नः ।

---

१ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ॥

२ अ ७ । पा ४ । सू ४६ ॥

३ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् । भा – वा ॥

४ भारद्वाजीयाः पठन्ति । घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् । भा ॥

दाधाः प्रकृतय इति । (कै)

दीयत इत्यादावीत्त्वादिः ॥

दाणिति । (कै)

"आत्त्वभूता" इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते । तद्वि-लक्षणास्त्वनात्त्वभूता इति भावः ॥

प्रत्यासत्त्येति । (कै)

एवं च "एषाम्" इति नापूर्वमिति भावः । एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यते इति तात्पर्य्यम् ॥ नन्वेकवाक्यत्वे दारयत्याद्येकदेशानर्थकव्यावृत्त्यर्थमेव तत् स्यान्न त्वन्यरूपप्रापकमत आह

एतद्द्वितीयमिति । (कै)

[1]अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ सिद्धायामर्थग्रहणानुवृत्ति-र्वाक्यभेदार्थैवेति भावः ॥ भाष्ये

प्रीणातीति । (भा)

यथा पितृभ्यः प्रीणातीत्यादौ ॥

ननु तयोभयाप्त्याय प्रकृतिग्रहणद्वये कर्त्तव्येऽचैव करणं युक्त-मत आह

तदुभाभ्यामिति । (कै)

घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाविशेषादुभयप्रकृतिर्गृह्यत इति । प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः ॥

---

१ अर्थवद्ग्रहणे नानर्थकस्य । परिभाषेन्दुशे – १४ ॥

आत्वविधानादिति । (कै)

एज्विषये इकारान्तानामात्वविधानादिति भावः ॥ भाष्ये

एवं क्रियमाणेऽपीति । (भा)

णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः । यद्यपि [1]लक्षणप्रतिपदोक्तपरिभाषया [2]मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङोऽग्रहणवारणाय [3]"गामादाग्रहणेष्वविशेषः" इत्युक्तेर्माग्रहणे तद्प्रवृत्तिर्मा माने इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्य्यम् ॥

सामान्येति । (कै)

एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया परिभाषाद्वयापेक्षया चेत्यर्थः ॥

निरनुबन्धकेति । (कै)

स च "दो अवखण्डने" इत्ययम् ॥

धेटोऽपीति । (कै)

अन्यथाऽस्य लाक्षणिकत्वाद् ग्रहणाऽप्रसक्तिः । यत्तु "सानुबन्धकत्वादिति" । तन्न । निरनुबन्धकस्य धा इत्यस्याप्रसिद्धत्वात् । ये तु दा विषयमेव तज्ज्ञापकं मन्यन्ते तन्मते धेडंशे ज्ञापकान्तरमाह

---

१ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् । परिभाषेन्दुशे–११३ ॥

२ मीनातिमिनोतिदीङांल्यपि च । ६ । १ । ५० ॥

३ परिभाषेन्दुशे – ११४ ॥

[1]दो ददिति ॥ (कै)

समानत्वं नार्थत इत्याह

श्रुतीनामिति । (कै)

तौ चेति । (कै)

एतेनानर्थक्यात् तयोर्घुत्वं नेत्यपास्तम् ॥

पश्चादिति । (कै)

प्रणिदापयतीत्यत्र पुगिवेति भावः ॥

आगमभूतत्वात् । (कै)

आगमस्वरूपत्वात् ॥

अभ्युपगम्येति । (कै)

“अदाप्” इति प्रतिषेधार्थेन दैपः पित्त्वेन “दो दद्” इत्यनेन च परिभाषामात्रानुपस्थानज्ञापनसम्भवादिति भावः ॥

किन्त्विति । (कै)

तयोरेवक्रियावाचित्वादिति भावः ॥ भाष्ये

तद्गुणीभूत इति । (भा)

यमुद्दिश्याऽऽगमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन गृह्यते बोध्यते आगमविशिष्ट इति परिभाषार्थस्तदाह

लब्धात्मकस्येति । (कै)

तेन दाधारोर्व्यावृत्तिः सूचिता ॥ “अपचय” इति दृष्टान्तार्थम् ॥

---

१ अ ७ । पा ४ । सू ४४७ ।

अन्तरङ्गत्वादिति। (कै)

इदं यथोद्देशे। कार्य्यकाले तु पत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम्। वस्तुतः कार्य्यकालपक्षे पूर्वं पुक्प्रवृत्तावपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम्। घुव्यपदेशं न निवर्त्तयति नाथर्थवत्त्वमितीति। स्वविशिष्टे तयोरागमत्वादिति भावः॥

अकाराकारयोरिति। (कै)

रेफविशिष्टयोरित्यर्थः॥

इह त्विति। (कै)

घुसंज्ञासूत्रे इत्यर्थः। अत्रेदं बोध्यम्। अङ्गावयवाकारस्य मुग्विधायक-

[1]आने मुग् (पा)

इति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः। तेन "दिदीये" इत्यादौ णत्वादिकं न। अयमेवार्थो भाष्ये "अर्थवद्ग्रहणेन" ध्वन्यत इत्याहुः॥

प्रयोगेति। (कै)

इदं चिन्त्यम्। आगमवत्प्रत्ययादेरपि प्रयोगसम्पादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः। मूलयुक्तेस्तुल्यत्वात्। अस्य मूलयुक्तित्वाभावे तु कथमवैयर्थ्यापत्तिः। तस्माद् मदुक्तव्याख्यैव ज्यायसी॥ भाष्ये

यन्नित्येष्विति। (भा)

१ अ ७। पा २। सू ८२॥

वियदादिवद् वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः स्वर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः ॥

**दाप्शब्द एवार्थवान् न दाशब्द इति । (कै)**

स तु न दाशब्द इत्यर्थः। एवं च घुत्वाभावे तदवस्थो दोष इति भावः। श्रौतस्थानषष्ठ्यभावात् स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्य्यम्। कूटस्थत्वं व्याचष्टे भाष्ये

**[1]अविचालिभिरिति । (भा)**

तद्विवरणम् "अनपाये"त्यादि। द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः। नन्वेतावतापि स्वपक्षास्थापनाद्वैतत्खिडकत्वमस्य स्यादत आह

**यस्येति ॥ (कै)**

**प्रसङ्गवाचीति । (कै)**

[2]"षष्ठीस्थान" इत्यत्रत्यः। प्रसङ्गस्य बुद्धेरिति भावः ॥

**सन्त एव प्रयोगे नित्या इति । (कै)**

आदेशरूपा इत्यर्थः। बुद्ध्युन्मज्जननिमज्जने यथाक्रममादेशस्य स्थानिनश्च ॥ भाष्ये

**शब्दान्तरैरिति । (भा)**

तद्बुद्धौ प्राप्तायामित्यर्थः ॥

**आदेशास्तर्हीमे इति । (भा)**

---

१ अत्र भाष्यम्। नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। आगमश्च नामाऽपूर्वः शब्दोपजनः ॥

२ षष्ठी स्थानेयोगा। १। १। ४९ ॥

इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशा भविष्यन्तीत्यर्थः॥ "आद्यन्तौ" इत्याद्येकवाक्यतयाऽऽर्द्धधातुकस्याऽऽद्यावयव इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायां इकारादिः साधुरिति बोधः। तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः। [1]"यदागमा" इति न्यायस्य चात्रापि पक्षे सत्त्वात् प्रणिदापयतीत्यादौ न दोषः। ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति ते मान्याः। [2]"अनागमकानाम्" इत्यादि व्यवहारासङ्गतेः। निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनाऽऽगमत्वव्यवहारस्यापि निर्बाधत्वात्। तत्कथमिति प्रश्ने तुल्यन्यायत्वादाह

सर्वेसर्वपदेति। (भा)

यथा [3]"एचः" इत्यादौ अवयवयोः औतस्यान्यादेशभावेऽपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते एवम् अवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणाऽऽदेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति। यथा च तत्र कल्प्यमानस्यान्यादेशभावेन औतावयव-

---

१ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते। परिभाषेन्दुशे – ११ ॥

२ आदेशास्तर्हीमे भविष्यन्ति। अनागमकानां सागमकाः। तत् कथम्।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।

एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥ भा ॥

३ एचः। अ ३। पा ४। सू ८६ ॥

स्थान्यादेशभावस्य न त्यागोऽत एव [1]"अचः परस्मिन्" इत्यादीनामुक्तिसम्भवः। तथाऽप्यपि श्रौतावयवावयविभावस्य न त्याग इति "यदागमा" इत्येतत्प्रवृत्तिरव्याहतैवेति। ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः। स्थानिवदिति श्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके "एचः" इत्यादावेव तत्प्रवृत्तेः। नलच केवलानुमानिके। अत एव "स्थावस्थायामड्" इति पचेऽडादिविशिष्टस्य "अपिबद्" इत्यादौ न पिबाद्यादेशा इति दिक्। तदेतदाह

इड् भवतीत्येतद्द्वारेणेति ॥ (कै)

आगमा अपीत्यर्थ (कै)

इत्यस्य तथेत्यादिः। अत एवाग्रे वक्ष्यति

बुद्धिविपरिणाममात्रं स्थान्यादेशाऽऽगमाऽऽगमिभावद्वारेण क्रियत इति। (कै)

एतेनाऽऽगमा अपीत्येवं सर्वपदव्याख्यायाम् "एकदेशविकारे हि" इति वाक्यशेषविरोध आदेशलोपपादिकाया विकारव्यापकीभूताभावप्रतियोगिलरूपनित्यत्वानुपपत्तेः सकलपद्याटत्तिलादित्यपास्तम् ॥

पद्यमानमिति। (कै)

कार्य्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः॥ "सर्वपद" इत्यत्र घञर्थे कः। सर्वशब्दश्चावयवकात्स्न्र्यवाची ॥

---

१ अ १ । पा १ । सू ५७ ॥

यद्येवमिति। (कै)

एवं चेतदवयवस्यानर्थक्यान्न संज्ञा। पुकः पूर्वं दा इत्यस्य तु न संज्ञा कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुगदृष्ट्याऽसिद्धत्वात् पूर्वमप्रवृत्तेः। न च पुग्विशिष्टस्य दाग्रहणेन ग्रहणम् "यदागमा" इत्यस्याभावात्। पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेति भावः॥

आदेशपक्ष इति। (कै)

बुद्धिविपरिणामपक्ष इत्यर्थः। कल्पितप्रक्रियादशायां तु न कल्पिताऽऽगमत्वादिव्यवहारत्याग इति "यदागमा" इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः॥ [1]सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रयघुत्वं न प्रकृतिग्रहणस्य प्रत्याख्यातत्वात्तन्निबन्धनमपीति गूढाशयः पृच्छति भाष्ये

कुतः पुनरिति॥ (भा)

आशयमविदुष उत्तरं

रूपग्रहणादिति॥ (भा)

इह खलु प्रकृतिग्रहणादिति। (भा)

घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः॥ अथैकदेशी एनं दोषं परिहर्त्तुमाह

नचेयमिति॥ (भा)

तद्व्याचष्टे

एच एवेति। (कै)

१ संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य। परिभाषेन्दुशेखरे – ८५॥

[1]"मीनाति" इत्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति। एवं च साक्षादाप्रकृतिसम्भवे व्यवहितप्रकृतेर्न ग्रहणमिति भावः। अतिफल्गुत्वात्त्वेतन्मते दूषणानभिनिवेशो भाष्यकृत इति द्रष्टव्यम्। यत्त्विदं वार्त्तिकमतं नचैतत्पक्षेऽवदानमित्यादावाद्न्तत्वनिबन्धन-युजाद्यसिद्धिः। तत्र[2] "आकारान्तलक्षणप्रत्ययविधिः" इति वचनेनैव तत्सिद्धेः। भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदिति। तन्न। तादृशवार्त्तिकस्यानुपलम्भाद् विपरीतं [3]"मीनाति" इतिसूत्रे [4]उपदेशवचनं कर्त्तव्यम् णल्घञ्युच्सिद्ध्यर्थमिति वार्त्तिकं तत्रोपदेशे एच इति विरुद्धमित्याशङ्क्य [5]"एज्विषय" इति भाष्यकृता व्याख्यातं न तु भवदुक्तं वार्त्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते। एवं च प्रकृतिग्रहणं घुसंज्ञायां वार्त्तिककारोक्तं दुष्टमेव न तु तदनुरोधेन गुरुभूतवचनान्तरकल्पनाभिनिवेशः कार्य्यः। नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किंचित् फलमित्याहुः॥

---

१ मीनातिमिनोतिदीङां ल्यपि च। अ ६। पा १। सू ५०। मीनात्यादीनामात्त्व उपदेशवचनं प्रत्ययविध्यर्थम्। वा। तत्रैव भाष्ये॥

२ यदपि प्रत्ययविधिरित्याचार्य्यप्रवृत्तिर्ज्ञापयति भवत्येजन्तेभ्य आकारान्तलक्षणः प्रत्ययविधिरिति यदयं ह्वावामश्च (३। २। २।) इत्यणं कबाधनार्थं शास्ति॥ आदेच उपदेशेऽशिति (६। १। ४५।) इति सूत्रे भाष्ये॥ ३ अ ६। पा १। सू ५०॥

४ णल्घञ्युज्विधयस्तर्हि प्रयोजयन्ति (मीनाति ६।१।५०। सूत्रे भाष्ये)॥

५ ते वयं विषयं विज्ञास्यामः। एज्विषय इति। (मीनाति-६।१।५०। सूत्रे भाष्ये)॥

अकित्त्वेति । (कै)

एचो विषयस्याऽन्यथासम्भवादिति भावः ॥

कित्त्वमिति । (कै)

तदभावे सन्नियोगशिष्टत्वादित्त्वमपि नेति कार्य्याभावाद् घुत्वस्याप्रवृत्तिरिति भावः ॥

प्रणिदातेति । (कै)

ननु प्रणिदीयते इत्यत्र नित्यणत्वप्रसङ्गः णत्वविधौ प्रकृतिग्रहणादिति चेन्न । इष्टापत्तेः ॥

अन्येत्वाहुरिति । (कै)

अचारुचिबीजं तु वार्त्तिकभाष्यविरोधाद् न तथा सूत्रतात्पर्य्यमिति ॥

अगुणेति । (कै)

गुणनिमित्तप्रत्ययसंज्ञाभावादित्यर्थः ॥

इत्यस्यैवेति । (कै)

न तु दैपइत्यर्थः । तस्य पकारे श्रूयमाणे आत्त्वायोगादिति भावः ॥ ननु पकारे लुप्तेऽपि कथमात्त्वम् उपदेशकाले एजन्तत्वाभावात् । [1]"नानुबन्धकृतम्" इत्याद्याश्रयणे तु प्रकृतेऽपि न दोष इति चेन्न । [2]"उपदेश" इति षष्ठ्यर्थे सप्तम्यास्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्त्वप्रवृत्तेः । सति तु तस्मिन्नात्त्वम् एजन्तत्वाभावात् । यस्मात् परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति दिक् ॥

---

१ नानुबन्धकृतमनेजन्तत्वम् । परिभाषेन्दुशे – ७ ॥

२ आदेच उपदेशेऽशिति ( ६ । १ । ४५ ) इत्यत्र ॥

**तत्वमिति।** (कै)

[1]**अच उपसर्गात्त** (पा)

इत्यनेनेत्यर्थः॥ भाष्ये

[2]**अनेकान्ता इति।** (भा)

एवं च पकारसत्त्वेपि एजन्तत्वानपायाद्दात्वप्रवृत्तिरिति भावः॥ "तच्चावश्यम्" इत्यादि विघटयितुं भाष्ये

**शक्यं तावदिति।** (भा)

[3]लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्तेऽदाविति निषेधो न शक्यो वारयितुं [4]गामादाग्रहणेऽविशेषात्। "दाप्" इत्यपि पकारोपलक्षितदाग्रहणमेवेति भावः। वान्तपक्षेऽपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्रभेदः॥

**सूत्रन्तर्हीति।** (भा)

"अपिदि"तिन्यासे इत्यर्थः॥ शङ्कते

**नह्ययमिति।** (भा)

उत्तरयति

**भूतपूर्वेति।** (भा)

दात्वं श्रुत्या पकारवैशिष्ट्यं तु अनयेति भावः॥

---

१ अ ७। पा ४। सू ४७॥

२ अनेकान्ता अनुबन्धा इति। परिभाषेन्दुशे – ४।

३ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्। परिभाषेन्दुशे – ११२॥

४ गामादाग्रहणेष्वविशेष इति। अत्रैवोक्तं भाष्ये॥

## इत् संज्ञायामिति । (कै)

उपदेशोत्तरकालं जातायामेवेत्यर्थः ॥

## मेङ इति । (कै)

अन्तरङ्गत्वाद्व्यतीहारनित्यसम्बद्ध एव गृह्यते न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः । केचित्तु माङोऽनभिधानात् क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः ॥

## [१]उदीचां मेङ इति । (कै)

उदीचां म इत्यस्याप्युपलक्षणमिदम् । नचाऽनुबन्धसत्त्वे मे इत्यस्य धातुत्वाभावात् कथमात्त्वम् अनुबन्धलोपे एव धातुत्वमित्यर्थस्य [२]"न धातुलोप" सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम् । आत्त्वविधायके धातोरित्यस्यासम्बन्धात् । गवादिशब्दानामुपदेशाभावान्नात्त्वम् । इरे प्रभृतीनामुपदेशेऽपि तेषामशित्परत्वाभावाद् नात्त्वम् । प्रसज्यप्रतिषेधेऽपिप्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् ॥

## दिवादिष्विति । (कै)

ननु [३]ताच्छीलिके चानशि दायमान इत्यत्र स्वरभेदः । [४]शनि

---

१ उदीचां माङो व्यतीहारे ( ३ । ४ । १९ ) इत्यत्र मेङ इति तु न कृतम् ॥

२ अ १ । पा १ । सू ४ ॥

३ ताच्छील्यवयोवचनशक्तिषु चानश् । ३ । २ । १२९ ॥

४ ञ्नित्यादिर्नित्यम् ( ६ । १ । १९७ ) इत्यनेन ॥

धातोरुदात्तत्वं [1]अपि चानयोऽन्तोदात्तत्वमिति चेन्न । [2]सति शिष्टादपि [3]विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरुभयथाऽप्यन्तोदात्तत्वानपायादिति दिक् ॥

---

# आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥

---

## बहुष्वपीति । (कै)

यद्यप्युत्तरा संख्या पूर्वसंख्याबाधिका । तथापीतरेषां बुद्धिविषयत्वाऽभावे बहुमध्यस्थेऽप्येकत्वाङ्गीकारान्न दोषः । यथा शते पञ्चाशदितीति भावः ॥

---

१ धातोः ( ६ । १ । १६२ ) इत्यनेन ॥

२ सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः इति वाच्यम् । इति कौमुद्यामस्ति । वार्त्तिकपाठे तु "सति शिष्टस्वरबलीयस्त्वं च" इत्यस्ति । अनुदात्तं पदमेकवर्जम् ( ६ । १ । १५८ ) इति सूत्रे पठितम् भगवता ॥

३ अत्र "आत्ममाने खश्च" ( ३ । २ । ८३ ) "अनुदात्तं पदमेकवर्जम्" ( ६ । १ । १५८ ) एतत् सूत्रद्वयस्य भाष्यमेव मानम् । तथाच भाष्यम् । कश्चात्र विशेषो यको वा श्यनो वा । यकि सत्यन्तोदात्तत्वेन भवितव्यम् । श्यनि सत्याद्युदात्तत्वेन । श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम् । कथम् । खशः स्वरः श्यनः स्वरं बाधिष्यते । सति शिष्टत्वात् श्यनः स्वरः प्राप्नोति । आचार्यप्रवृत्तिर्ज्ञापयति सति शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधत इति यदयं तासेः परस्य * लसार्वधातुकस्यानुदात्तत्वं शास्ति ॥

---

* तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः । ६ । १ । १८६ ॥

किमेकस्मिन्नित्यनेनेति। (कै)

तद्धि समाम्नायने अत्र इत्यर्थे आकारस्यादित्वे तस्य वृद्धत्वेन शास्त्रच्छाऽभावार्थम्। दरिद्रातेरिवर्णान्तलक्षणाचोऽभावार्थं च अत्र च स्वरे विशेषः। उपमेये सप्तमीसत्त्वे सप्तम्यन्तादतौ मानमाह

द्वयोरिति। (कै)

आकार पद वाच्येनेति शेषः॥

आधाराऽऽधेयसंबन्धेति। (कै)

आधारत्वाऽऽधेयत्वरूपसम्बन्धप्रतिपादनायेत्यर्थः॥

न गम्येतेति। (कै)

उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः॥

सर्वातिदेशानामिति। (कै)

रूपनिमित्ततादात्म्यशास्त्रव्यपदेशकार्य्यातिदेशानां मध्ये इत्यर्थः॥

प्राधान्यादिति। (कै)

सर्वेषां कार्य्यार्थत्वादिति भावः॥

मुख्ये। (कै)

व्यपदेशिनि॥

गौणे। (कै)

व्यपदेशिसदृशे॥

अस्याद्यन्तवद्भावादिति न वतिः सत्यन्यस्मिन् मुख्याद्यन्तत्वात्।

नापि मतुप्। आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वाऽनपेक्षत्वेन १"सत्यन्यस्मिन्" इत्यस्यायोगादत आह

**आद्यन्ताविति। (कै)**

आद्यन्तशब्दावित्यर्थः। एवं चाद्यन्तवद्भावादित्यस्याऽऽद्यन्तवच्छास्त्रप्रवृत्तेरित्यर्थः॥

**क्वचिदिति। (कै)**

आद्यन्तव्यवहारादिति तदर्थः॥

**सर्वकार्येति। (कै)**

आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्य्यसिद्ध्यर्थं गुर्वपि व्यपदेशिवदिति आद्यन्तवदित्यस्य स्थाने कार्य्यमिति भावः॥

**स तेनेति। (कै)**

**२तेन तुल्यम् (पा)**

इति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्तादतिरिक्त इति बोध्यम्॥ भाष्ये

**तस्मिन् क्रियमाण इति। (भा)**

तस्मिन्नाश्रीयमाण इत्यर्थः॥

**पपाचेति। (भा)**

नन्वत्र धातुरेव प्रथम एकाच् न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न। आदि पर्य्याय-

---

१ सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते। सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते॥

२ अ १। पा १। सू ५९॥

प्रथमलस्य सूत्रेणैवातिदेशसिद्धा तद् न व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात् । "इयाये"त्यादौ तु

[1]द्विर्वचनेऽचि (पा)

इति रूपस्थानिवत्त्वादव्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम् ॥

अवयवषष्ठ्येवेति । (भा)

प्रत्ययांशे इति भावः ॥

एतस्मिन् क्रियमाण इति । (भा)

अवयवषष्ठीत्वे आश्रीयमाण इत्यर्थः ॥

[2]विज्ञानशब्दो व्यवहारवाचीत्याह

[3]व्यवहारादिति ॥ (कै)

तत् फलितव्याख्यानं भाष्ये

[4]अन्तरेणैवेति । (भा)

---

१ अ ५ । पा १ । सू ११५ ॥

२ अवचनाल्लोकविज्ञानात्सिद्धम् । इति भाष्य वार्त्तिकस्थविज्ञान शब्दः ॥

३ वचन निरपेक्षाल्लोकव्यवहारादेव व्यवदेशिवद्भावसिद्धेराद्यन्तवदिति व्यपदेशिवदिति चोभयमपि न सूत्रयितव्यमित्यर्थः ॥

४ अत्र भाष्यम् । अवचनाल्लोकविज्ञानात् सिद्धम् । वा । अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् ॥ तद्यथा । लोके शालासमुदायो ग्राम इत्युच्यते । भवति चैतदेकस्मिन्नप्येकशालो ग्राम इति । विषम उपन्यासः । *ग्रामशब्दोऽयं बह्वर्थः । - - यथा तर्हि वर्णसमुदायः पदं पदसमुदाय ऋगटक्समुदायः सूक्तमित्युच्यते । भवति चैतदेकस्मिन्नप्येकवर्णं पदमेकपदर्गेकर्चं सूक्तमिति । अत्राप्यर्थेन युक्तो व्यपदेशः । पदं नामार्थ ऋङ्नामार्थः सूक्तं नामार्थ इति ॥

---

* हलोऽनन्तराः संयोगः (१ । १ । ७) इति सूत्रव्याख्यानावसरेऽप्येतदुक्तं भगवता ॥

यथा लोके व्यवहारो वचनं विनैव सिद्ध्यति तथा शास्त्रेऽपि वचनं विना सिध्यतीत्यर्थः ॥

**अगादित्यादि ।** (कै)

**[1]इणो गा लुङि** (पा)

**[2]णौ गमिरबोधने** (पा)

इत्यादेशौ ॥

**एकोऽच् ।** (कै)

असहायोऽजित्यर्थः ॥ नन्वेकाचोऽवयविनो द्विर्वचनमिति षष्ठ्यामवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह

**अथवेति ॥** (कै)

काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह

**एवमिति ॥** (कै)

**व्यपदेशः ।** (कै)

भेदनिबन्धनसंबन्धव्यवहारः ॥

**शास्त्रेऽपीति ।** (कै)

लोकाप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः ॥

**पादपर्य्याय इति ।** (कै)

वर्णसमुदायः पदमित्यत्र तु पदशब्दो यथाश्रुत एव ॥

**पदादीनामिति ।** (कै)

एकवर्णं पदमित्यादौ ॥ ननु अर्थस्य पदत्वं कथमत आह

---

१ अ २ । पा ४ । सू ४५ ॥ २ अ २ । पा ४ । सू ४६ ॥

**अभेदेति । (कै)**

तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् ॥ "पदादिभिः"। पदशब्दादिभिः ॥

**प्रथमेति । (कै)**

तस्मात् पूर्व्वस्याभावादिति भावः ॥ मध्यमकार्य्यं तत्सम्बन्धज-सुखादिकम् ॥

**बहुष्वत्वोऽपीति । (कै)**

यथा परशुरामेण रेणुका ॥

**तथा येति । (कै)**

संप्रतिगर्भिणीत्यर्थः ॥ गर्भस्समादाय तत्रापि प्रथमव्यवहार इत्यर्थः ॥ ननु या सूता सा न गर्भेण हृता भवति किं त्वपत्येनेति गर्भेण हृतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह

**अपत्यपर्य्याय इति ॥ (कै)**

तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् । तत्र प्रथमव्यवहारे बीजमाह

**तस्या एवेति ॥ (कै)**

**स्त्र्यन्तरेषु । (कै)**

बहुप्रसववतीषु ॥

**तथाविधस्येति । (कै)**

अविद्यमानपूर्व्वगर्भस्येत्यर्थः ॥ नन्वागमनं विनेदं मे प्रथममागमनमिति व्यवहारासम्भवाद् अनेत्येदं मे प्रथममागमनमित्य-सङ्गतमत आह

बहुव्रत्व इति॥ (कै)

[1]"अनेत्य" इत्यस्यैतः पूर्वमितिशेष इति भावः॥

तथाविधत्वादिति। (कै)

अविद्यमानपूर्वागमनत्वादित्यर्थः॥

परे तु पदऋगादिपदानि अर्थशब्दसमुदायवृत्तीनि तस्य शब्दमात्ररूपवर्णपाद ऋगाद्यवयव इत्येव भाष्यार्थः। न तु शब्दोऽर्थोऽन्यपदार्थ इति तथाऽप्रतीतेः। "एकर्चं सूक्तं पठ" इत्यादिव्यवहारानापत्तेश्च। [2]"एवं चार्थवतो धातुरयमेकोऽज्वर्णरूप इत्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति" इति कैयटोक्तं चिन्त्यम्। एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाऽविषयत्वात्। कैयटरीत्या शुद्धार्थस्याऽन्यपदार्थत्वेऽत्रापि तथैवाऽस्तु। शब्दार्थयोरभेदाच्च शब्देऽपि तत्त्वमिति अत्रापि न व्यपदेशिवद्भावप्रयोजनम्। किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणं तस्य चानर्थकत्वमिति अर्थस्योपादानत्यागावत्यसम्बद्धौ। एतदेवध्वनयता "पदं नामार्थ" इति भाष्ये उक्तम्। धात्ववयवत्वन्तु कैयटोक्तरीत्या वक्तुं शक्यम्। अत एव बहुव्रीहिनिर्देशानुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम्। अत्रापि [3]"अर्थेन" इति भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः। अर्थशब्दोभयवृत्तिपदत्वरूपादीत्याशयः [4]"पदं नामार्थ" इत्यादेर्थोऽपीत्यर्थः॥

---

१ तथाऽनेत्याऽनाजिगमिषुराहेदं मे प्रथममागमनमिति। भा॥

२ अत्रैवोक्तं कैयटेन॥ ३ "अत्राप्यर्थेन युक्त" इति भाष्यस्य॥

४ अत्रैवोक्तम्॥

## यथा तद्दीति । (भा)

यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकाऽवस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकाद्यत्वादिव्यवहारोपपत्तिर्द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्यापि तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । आद्यन्तवद्भावस्य शक्योऽवक्तुमित्यस्य प्रकारान्तरेणापीति शेष इत्याहुः ॥ वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं [1]विकल्पात्मकं वस्तुशून्यमेव ज्ञानमित्यारोपानुपयोग एव लोकव्यवहारवत् तेनापि शास्त्रीयोऽपि व्यवहार इति तत्त्वम् ॥ गोनर्दीयपदं व्याचष्टे

## भाष्यकार इति ॥ (कै)

## अनपेक्षितप्रतियोगिनोः । (कै)

अनपेक्षितपरपूर्व्वयोः ॥ "आद्यन्तयोः" । आद्यन्तरूपार्थयोः ॥ "प्रवृत्तिः" । आद्यन्तशब्दप्रवृत्तिरित्यर्थः ॥

---

१* शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । योगसू-समाधिपा – सू – ९ ॥ अत्र भाष्यम् । स न प्रमाणोपारोही न विपर्य्ययोपारोही च । वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते । तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति । यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते । भवति च व्यपदेशे वृत्तिर्यथा चैत्रस्य गौरिति । तथा

---

* योगसूत्रवृत्तौ नागेशः । शब्दस्य तज्जन्यज्ञानं च ते अनुपातिनी यस्य सः । एवं च बाधा बाधकाभावविशेषेण यदैव तदुभयजनको वस्तुशून्यः प्रत्ययो विकल्प इत्यर्थः । शब्दज्ञानजन्य इत्यर्थ इति मिश्राः । इदमेव भाष्यसंमतं स न प्रमाणान्तर्भूतः । वस्तुशून्यत्वात् । नापि विपर्ययान्तर्भूतः । ज्ञानस्य याथार्थ्ये सति बाधमपास्य याथार्थ्यनिबन्धनो व्यवहारशब्दप्रयोगरूपस्तादृशव्यवहारस्तेनोऽपि दर्शनात्,

**तथाऽपीति ।** (कै)

वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्र नास्तीत्यर्थः ॥

**कथमिति ।** (कै)

भिन्नविभक्तिकयोरसमप्रधानत्वेन साहित्याप्रतीतिरित्यर्थः ॥

**इकारोकारयोरिति ।** (कै)

उपाधिश्चिकीर्षुरित्यादौ ॥ सामान्यापेक्षज्ञापकत्वेऽप्याह

---

प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः । तिष्ठति बाणः स्थास्यति स्थित इति । गतिनिवृत्तौ धात्वर्थमात्रं गम्यते । तथाऽनुत्पत्तिधर्मा पुरुष इति । उत्पत्तिधर्मस्याऽभावमात्रमवगम्यते न पुरुषान्वयी धर्मः । तस्माद् विकल्पितः सधर्मस्तेन चास्ति व्यवहार इति । योगसूत्रभा – सू ९ ॥

---

विपर्ययस्तु नैवं बाधोत्तरम् इदं रजतमिति शब्दप्रत्यययोरभावात् । एवं च विपर्ययलक्षणे शब्दज्ञानानुपातित्वं विशेषणं देयम् । यथा चैतन्यं पुरुषस्य स्वरूपमिति । अन्यथा चितेरेव पुरुषत्वात् । भेदनियतसम्बन्धरूपस्य षष्ठ्यर्थस्याप्रतीत्यापत्तिः ॥ भवति च चैत्रस्य गौरिति यथार्थशब्दवत् अत्रापि षष्ठ्यर्थे इतिसत्ता-स्ततो विवेकिनामपि बोधः । एवं प्रतिषिद्धवस्तुधर्मा निः क्रियः पुरुषः इति शास्त्रेषु प्रतिषिद्धा वस्तुधर्माः सुखादयो यस्येति क्रियारहित इति च तदर्थः । अन्यथाभावस्याधिकरणभावरूपत्वेनाधाराधेयभावानुपपत्तिः । एवं तिष्ठति बाणः स्थास्यति स्थित इति । अत्र गतिनिवृत्तिरभावरूपत्वाद्धात्वर्थत्वेन कल्पिता तथापि भावरूपता तथापि पूर्वापरीभाव इति कल्पना परम्परापूर्वापरीभूतकर्मप्रचयस्यैक-फलावच्छिन्नस्यावगतेः । एवमनुत्पत्तिधर्मा पुरुष इत्यत्रोत्पत्तिधर्मस्याभावमात्ररूपः पुरुषोऽवगम्यते न तु पुरुषान्वयी । अनुत्पत्तिरूपो धर्मोऽस्ति शब्देन तु अनुत्पत्तिधर्मो यस्येत्यर्थकेन विकल्पितः स धर्मः प्रतीयते तन्मूलकश्चायं व्यवहारः पुरुषस्य सर्वधर्मशून्यत्वात् । एवं अपुष्पशशशृङ्गादयोऽपि विकल्पा एव । वैशेषिकाणां मभावाद्यर्थज्ञानविशेषरूप इति दिक् ॥ योगसू – १ पा – सू – ९ ॥

**विशेषणार्थं चेति । (कै)**

अच्छिद्युक्तात् [1]"प्राचामवृद्धात्" इति फिन्॥ अभिवेयाद् [2]"गर्गादियञ्" ॥

**स्वरविधाविति । (कै)**

नन्वस्य स्वरोद्देश्यके विधौ इत्यर्थो वा अथवा स्वरप्राप्तौ इत्यर्थो वा उभयथापि नेह प्राप्तिरिति चेत् । सत्यम् । अत्र सूत्रेऽन्तरापेक्षमेवाऽऽदित्वं गृह्यते । अन्त्यस्याच एव तद्भावत्त्वेनोपस्थितत्वादिति भाष्याशयात् । किं च "स्वैणम्" इत्यादावाद्युदात्तत्वस्यादिति दोषः । ञित्त्वन्तु वृद्ध्यर्थतया सावकाशं बोध्यम् ॥

**क्तिन इति । (कै)**

अनेकाज्भ्यस्तु चिरिजिर्यादिभ्योऽनभिधानात् क्तिन्नभाव इति भावः ॥ ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः सम्भवतीति न दोष इत्यत आह

**सौवर्ये इति ॥ (कै)**

**सेडिति । (कै)**

**[3]सिब्बहुलं लेटि (पा)**

इति सिप् ॥

**[4]इट ईटीति । (पा)**

---

१ प्राचामवृद्धात् फिन् बहुलम् । अ ४ । पा १ । सू १६० ॥

२ गर्गादिभ्यो यञ् । अ ४ । पा १ । सू १०५ ॥

३ अ ३ । पा १ । सू ३४ ॥ ४ अ ८ । पा २ । सू २८ ॥

न च १"यमरमननमाताम्" इत्यत्र "वलादेः" इत्यस्य सम्बन्धे फलाभावात् कथमेतज्ज्ञापकम्। २"रुदादिभ्यः" इति सूत्रे "वलादेः" इत्यस्य सम्बन्धसत्त्वेन मध्येऽपि सम्बन्धस्यैव न्याय्यत्वात्। अत एव सप्तमे भाष्ये "एकाच्त्वौ वलीति च" इत्युक्तम् ॥

३येन विधिरिति। (भा)

तेनैव हि ४"ईदूदेद् द्विवचनम्" इत्यत्र 'तदन्तविधिरिति भावः ॥

अर्थवतेति। (कै)

तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः। इदं चिन्त्यम्। यद्यपि व्यपदेशिवद्भावेन सिध्यति तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भ इति पूर्वग्रन्थविरोधात् सूत्रकारेण तदज्ञानात्तदुदाहरणसम्भवाच्चार्थवतेति चासहायत्वस्यैवोपलक्षणं स-सहायस्य प्रायेणानर्थकत्वात् तच्छब्दाकारस्यासहाय एव। येन सहा-येनाद्यामन्तत्वस्य बहुभ्योऽर्थस्य चोपपत्तिस्तादृशसहायाभावात्। अन्यथाऽऽद्यन्तवद्भावोऽपि न स्यात्। विजातीयकन्यादिसहायसत्त्वेऽ-प्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेऽपि लोक-सिद्धत्वमित्याहुः ॥

इत्थमिति। (कै)

५"एतिस्तुशास्" इति क्यपो विधानादित्यर्थः ॥

---

१ अ ७। पा २। सू ७३ ॥ २ अ ७। पा २। सू ७६ ॥
३ अ १। पा १। सू ७२ ॥ ४ अ १। पा १। सू ११ ॥
५ अ ३। पा १। सू १०९ ॥

# तरप्तमपौ घः । १ । १ । २२ ॥



## प्रकरणोत्कर्षेणेति । (कै)

"प्रकरणे" संज्ञाप्रकरणे । "तत्कर्षेण" गुरुभूतन्यायेनेत्यर्थः ॥

## स्वार्थे इति । (कै)

[1]अनातिशायनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम् । स चानिर्दिष्टार्थत्वात्स्वार्थे तस्य संज्ञाफलं च उच्चैरेवोच्चैस्तरामित्यादौ "[2]किमेत्तिङव्ययघात्" इत्यामसिद्धिरिति भावः ॥

## इत्याहुरिति । (कै)

अत्रारुचि बीजं तु भाष्यानुक्तिः ॥ ननु नायंतरवित्यत आह

## सर्वचयेति ॥ (कै)

ननुतमपाहचर्यात्तद्धित एव तरो गृह्यत इति नास्यवन्ने तरे प्रसक्तिरत आह

## साहचर्यमिति । (कै)

[3]"प्रत्ययाऽप्रत्ययोरि"ति परिभाषाऽपि नाश्रितेति बोध्यम् ॥ "इह" । शास्त्रे ॥

---

१ अतिशायने तमबिष्ठनौ । ५ । ३ । ५५ ॥

२ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५ । ४ । ११ ॥

३ प्रत्ययाप्रत्ययोः प्रत्ययस्य ग्रहणम् । परिभाषेन्दुशे - ११० ॥

**वस्त्वर्थमिति।** (कै)

तात्पर्य्यार्थमित्यर्थः। असन्देह इतिवत्प्रतिषेधस्याभाव इत्यर्थको नञ्समासः। एवं च "अनर्थक" इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः॥ "तरब् ग्रहणम्"। तरप् शब्दः॥ "औपदेशिकम्"। उपदेशप्रयोजक इत्यर्थो भाष्यस्य। तदाह

**उपदेशः प्रयोजनमिति।** (कै)

प्रयोजक इत्यर्थः॥ न चैष "उपदेशे तरप् शब्द" इति भाष्यस्वरसादाह

**तत्र वा भवमिति॥** (कै)

"उपदेशे" इति भाष्ये भव इति शेषः॥

**सर्वेष्वेव सानुबन्धकग्रहणेषु** (भा)

इति भाष्यं प्रकृताभिप्रायं शब्दमात्रग्रहणेऽपि [1]"स्वं रूपम्" इत्यनेन रूपाश्रयणादिति बोध्यम्॥

**यत्रास्येति।** (कै)

यत्रास्यैतद्रूपं तत्र घ संज्ञेत्यर्थः। एवं चोपदेश एव घ संज्ञा प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम्॥

**कार्य्यनिकमिति।** (कै)

[2]"ऋदोरप्" इति सूत्रपर्य्यालोचनावगतत्वेनानुमानिकमित्यर्थः॥

---

१ अ १। पा १। सू ६८॥ २ अ ३। पा ३। सू ५७॥

## स्वार्थिकत्वात् । (कै)

प्रकृत्यभिहितद्योतकत्वात् ॥

## सामानाधिकरण्यः । (कै)

प्रकृत्या समानविषय इत्यर्थः। सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् ॥

## ननु तीर्णैरिति । (कै)

क्तः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् ॥

## सामान्येनेति । (कै)

अनिर्द्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वं "घञबजपः पुंसि" इत्युक्तेः ॥

## महिषीरूपमिवेति । (भा)

नन्विदमसमस्तं समस्तं वा। नाद्यः। उत्तरपदाधिकाराद्रूपशब्दस्य चाऽतथात्वादप्राप्तेः। किं च रूपशब्देनाकृत्यभिधानात् कस्याकृतिरिव महिषीतिसाकाङ्क्षं स्यात् । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्या-द्रूपशब्दस्याप्राप्तेः । विशेषणसमासे तु पूर्व्वनिपातवैपरीत्यापत्तिः । तस्मा-दुपमानगर्भसमासस्य विग्रहवाक्यमिदं स च समासो न[1] "उप-मानानि सामान्यवचनैः" इत्यनेन रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्मावाचकत्वात् । साधारणधर्मो यत्र विसंस्थुलत्वादिः । नापि "[2]उपमितं व्याघ्रादिभिरिति" । रूपशब्दस्योपमेयवाचित्वेन

---

१ अ २। पा १। सू ५५॥ २ अ २। पा १। सू ५६॥

पूर्वनिपातवैपरीत्यापत्तेः । तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह

**इवशब्द इति । (कै)**

**[1]सुप् सुपा (पा)**

इति च ॥

**ह्रस्वत्वं स्यादिति । (कै)**

अप्रत्यययोरपि घत्वे तस्माद्वचर्यादूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः । यद्यपि रूपमित्युक्ते कस्य रूपमित्यस्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥

---

# बहुगणवतुडति संख्या । १ । १ । २३ ॥



संख्यात्वेन प्रत्ययस्य लोकत एव सिद्धेराह

**एकादिकाया इति । (कै)**

[2]"संख्यासंप्रत्ययेति" वार्त्तिके संख्येति संप्रत्यय इत्यर्थः । "एकादिकायाः संख्यायाः संख्याप्रदेशेष्विति" शेषपूरणं बोध्यम् ॥ [3]"संख्ये-

---

१ अ २ । पा १ । सू ४ ॥ २ संख्यासंप्रत्ययार्थम् । भा-वा ॥

३ एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्येत्येष संप्रत्ययो यथा स्यात् । भा ॥

त्येव" इति भाष्यस्य संख्येत्येतच्छब्दाभिन्न इत्यर्थः ॥ १"शब्दार्थप्र-

---

१ * शब्दार्थप्रत्ययानामितरेतराऽध्यासात्सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् । १७ (पातञ्जलदर्शने विभूतिपादे )॥ अत्राह योग-

---

* योगसूत्रवृत्तौ नागेशः ।

गौरितिशब्दो गौरित्यर्थो गौरितिज्ञानं तेषां वक्ष्यमाणात् संकेतरूपाद् अध्यासात् संकरो विवेकाग्रहणं वस्तुतस्तेषां भेद एव अतस्तेषां प्रविभागे भेदे संयमात् साक्षात्कारपर्यन्तात् सर्वभूतानां रुतानि ज्ञायन्ते । अयं काः दिरमुमर्थमनेन शब्देन कथयतीत्यर्थः । तत्र वागिन्द्रियजन्यः शब्दो लोकप्रतीति [illegible] एव न वाचकपदरूपम् । "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" इति श्रुतेः । श्रोत्रं च ध्वनिरूपपरिणाममात्रविषयं तत्र ध्वनिर्नाम वागिन्द्रियादिष्वभिहतस्योदानवायोः परिणामभेदः तदभिघातात् तदवच्छिन्नाकाशोत्पादनको वा न तु वाचकं पदं स च वर्णरूपोऽप्यवाचकत्वाद्ध्वनिरित्युच्यते तृतीयः पदरूपः स च नादानुसंहारबुद्धिनिर्ग्राह्यः नादाख्यकारादिवर्णान् प्रत्येकं गृहीतानुपश्चाद् या बुद्धिः संहरति एकतामापादयति गौरित्येकं पदमिति तया निर्ग्राह्योऽखण्ड एकः स्फोटाख्यः अयं वाचकत्वश्चैव वाच्यः। तत्संबन्धः "विशोका वा ज्योतिष्मती" ( योगसू- । १पा । सू३६ ) इति सूत्रे प्रथमे पादे **हृदयपुण्डरीके प्रत्ययरूप उक्ता । अनुसंहारबुद्धेः

---

** विशोका वा ज्योतिष्मती । योगसू- । १पा । सू३६ । प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनीति वर्तते यतो विगतशोकोऽतो वक्ष्यमाणा ज्योतिष्मती श्रेष्ठः स्थितिहेतुरित्यर्थः । सा द्विविधा । तत्राद्या । ज्योतिष्मती यथा । हृदयपुण्डरीके आत्मने चित्तं धारयतो या बुद्धिसंवित् तत्साक्षात्कारः सा यतो बुद्धिरूपं सत्त्वप्रकर्षेण भास्वरं स्वप्रकाशकमाकाशवद्विभुवत्(च) तत्र बुद्धौ निर्मलैकाग्र्यात् या बुद्धिविषया प्रवृत्तिः सा सूर्येन्दुमणिप्रभासदृशाकारेण विकल्पते विशेषेणोत्पद्यतेऽतो विषयस्य ज्योतिष्मत्त्वेन तद्विषयप्रवृत्तिरपि ज्योतिष्मती प्रकाशरूपा अथेयं प्रक्रिया । उदरोरसोर्मध्येऽधोमुखमष्टदलं पद्मं तद्रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तत्रात्मने चित्तं धारयेत् । तन्मध्ये हि सूर्यमण्डलमकारो जागरितस्थानं तदूर्ध्वं चन्द्रमण्डलमुकारः स्वप्नस्थानं तदूर्ध्वं वह्निमण्डलमकारः सुषुप्तस्थानं तदूर्ध्वं ब्रह्मव्योमात्मकं नादस्तुरीयस्थानं अर्धमात्रेति योगिनः । तत्कर्णिकायां विश्वव्यापिशाखावत्या मतो वहनाद्या सूक्ष्मं तिष्ठति । यस्या ऊर्ध्वमुखी एकशाखा सुषुम्नाख्यान्तर सूर्यादिमण्डलमध्यगता च शाखारूपया अन्यया प्राणाद्यान्यपि सूर्यादिमण्डलातिप्रोतानि सैव मनोवहनाडी चित्तस्थानं तस्यां धारणात् चित्तसाक्षात्कारो भवति ॥ द्वितीया यथा + + ॥ योगसू- १पा । सू३६ ॥

त्ययानामितरेतराध्यासात्सङ्करः" इति पातञ्जलसूत्रात् । एतच्च पातञ्जलसूत्रवृत्तौ उपपादितमस्माभिः ॥ "नारद इत्यबोधि" इत्यादावप्येवमेव । एवं च कर्मत्वाऽप्रवृत्तिरेव । संख्याशब्दजन्य

---

सूत्रभाष्यकारः । तत्र वाग् वर्णेष्वेवार्थवती । श्रोत्रं च ध्वनिपरिणाममात्रविषयम् । पदं पुनर्नादाऽनुसंहारबुद्धिनिर्ग्राह्यम् इति । वर्णा एकसमयासम्भवित्वात्परस्परनिरनुग्रहात्मानस्तेपदसंस्पृश्याऽनुपस्थाप्याऽऽविर्भूतास्तिरोभूताश्चेति प्रत्येकमपदस्वरूपा उच्यन्ते । वर्णः पुनरेकैकः पदात्मा सर्वाऽभिधानशक्तिप्रचितः सहकारिवर्णान्तरप्रति-

---

सामानाधिकरण्येनैव तद्बोधजनकत्वे लाघवात् । यद्यपि पूर्वबुद्धयोऽपि वर्णाकारं पदमेव गोचरयन्ति तथापि त्वविशदं चरमे तु विज्ञाने तदपि विशदमिति एवमुक्तं न चानुसंहारबुद्धिः श्रोत्रजैवास्तु । असंभवात् । आनुपूर्वैक्यं हि एकपदत्व प्रतीतिविषयो वाच्यम् । न चानुपूर्वी श्रोत्रग्राह्या । श्रोत्रस्य शब्दमात्रग्राहकत्वात् । न च पूर्ववर्णसंस्कारैः स्मृतानां वर्णानामानुपूर्वी मनसा ग्राह्येति वाच्यम् । किमानुपूर्व्या मनसानुभवः । उत स्मरणं । नाद्यः । तदा वर्णानां विनाशेन तत्तदुत्तरक्षणानां च विनाशेन तदसंभवात् । अपरस्यास्मदादिमनोग्राह्यत्वाच्च । अत एवान्त्योऽपि न अत्र प्रमाणं चैकं पदमिति प्रत्यय एव अनेकेषां वर्णानामेकसमयस्थितेरसम्भवात् । परस्परमसंबद्धस्वभावानां पदत्वसंस्पर्शरहितानां प्रत्येकमर्थानुपस्थापकानामाविर्भूयैव क्षणात्तिरोभूतानां प्रत्येकं मिलितानां चापदस्वरूपताया दृष्टत्वात् । प्रत्येकमर्थोपस्थापकत्वेऽनुभवविरोधो द्वितीयादीनामनुच्चारणप्रसङ्गश्च । यथाग्नेयादीनां परमापूर्वे स्वर्गे वा जननीये यथा संस्कारद्वारा साहित्यं तथा वर्णानामपि संस्कारद्वारासाहित्यम् । तादृशानेकसंस्कारकल्पने गौरवात् । न च श्रुत्यनुरोधेन क्लृप्ता एव ते । तेषां स्वकारणानुभवविषयस्मृतिमात्रजनकत्वात् । किंचातिरिक्तस्यापि स्वीकारे तस्याज्ञातस्यार्थप्रत्यायकत्वासंभवः अर्थप्रत्यायनाङ्गस्याज्ञातस्य तज्जनकताया अदर्शनात् । न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डजन्यस्मृतिविषयतया ज्ञातस्वभावा वाचकाः क्रमाक्रमविपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्तेः । क्रमस्य तु अनुभवाविषयत्वान्न

इत्यर्थे संख्येत्याकारक इत्यर्थे च एषशब्दान्वयाऽनुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् ॥

संख्या ग्रहीष्यत इति। (कै)

सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

न्यायोऽयमिति। (कै)

अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः ॥

---

योगित्वाद्वैस्वरूप्यमिवाऽऽपन्नः पूर्वस्योत्तरेणोत्तरस्य पूर्वेण विशेषेऽवस्थापित इत्येवं बहवो वर्णाः क्रमाऽनुरोधिनोऽर्थसङ्केतेनाऽवच्छिन्ना इयन्त एते सर्वाऽभिधानशक्तिपरिवृता गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्तीति। तदेतेषामर्थसङ्केतेनाऽवच्छिन्नानामुपसंहृतध्वनिक्रमाणां च एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य

---

स्मृतिविषयत्वमित्युक्तमेव। नचैवं अखण्डपदेऽपि दोषः। तद्धि प्रत्येकमेव प्रयत्नभेदभिन्नध्वनिभिः परस्परविसदृशतत्तत्पदव्यञ्जकैस्तुल्यस्थानकरणनिष्पन्नत्वेन गणगौरगौरित्यादौ गत्वेन सदृशैरेकमप्यनेकमिवानवयवमपि सावयवमिव व्यज्यते। यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति। न तु परमार्थतस्तस्य ते भागाः। तस्माद्वर्णात्मनापदभेदेऽपि एकमेव स्फोटं निर्भागमेव सभागमिव सभेदमिव व्यञ्जयन्ति। एवं च गोपदरूपस्यैकस्य स्फोटभेदस्य गकारभागो गणादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्यौकारविशिष्टो निर्धारयति। एवमौकाररूपविभागः। शौचिरादिपदसदृशतया न शक्तस्तं निर्धारयितुमिति गकारविशिष्टो निर्धारयतीति वाच्यं तच्च न संभवति गत्वादिनाभिव्यक्तेः क्षणिकत्वादिति वाच्यम्। संस्कारद्वारेण तेषां सद्भावात्। वैशिष्ट्योपपत्तेः। न च भिन्नविषयत्वंसंस्कारयोः भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्च संस्कारयोरेकपदविषयकत्वात् केवलभागानुभवेन पदमव्यक्तमनुभूयते। अनुसंहारधिया तु पूर्वसंस्कारसहकृततयाऽव्यक्तमनुभूयते। यथा दूरादवस्थतो पूर्वेऽव्यक्ताः। प्रत्ययाव्यक्तावनस्पति प्रत्ययजनकाः। न चैवं विधावर्णानामर्थप्रत्ययजनने सम-

## नियम्यते इति। (कै)

सर्वार्थबोधकत्वेऽपि लोके तत्रैव गृहीतशक्तिकतयाऽन्यत्र शास्त्रग्रहेण चाधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चास्य नियमत्वं चिन्त्यम्। न्यायबीजन्तु प्रकरणम् इति भाष्ये एव स्फुटी-भविष्यति॥

## नियमार्थमिति। (कै)

नियमस्य सामान्यविषय एव न कालवाचिविषयो व्याख्या-नादतो गौर्याद्यन्तेऽपि न दोषः॥ नन्वनदीसंज्ञकेभ्योऽपि खलप्वा-दिभ्य ऊकारान्तेभ्यः स्यादत आह

---

सङ्केत्यते। तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तम् अभागमक्रम-मवर्णं बौद्धमन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णैरेवाऽभिधीयमानैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यवहारवासना-ऽनुविद्धया लोकबुद्ध्या सिद्धवत्संप्रतिपत्त्या प्रतीयते। तस्य संकेतबुद्धितः प्रविभाग एतावतामेवं जातीयकोऽनुसंहार एकस्यार्थस्य वाचक इति। सङ्केतस्तु पदपदार्थयोरितरेतराऽध्यासरूपः स्मृत्यात्मको योऽयं शब्दः

---

विनो न हि ते पूर्वमव्यक्तमर्थप्रत्ययं जनयन्तीति शक्यं वक्तुं प्रत्यक्षज्ञान एव तथा नियमात्। वर्णाभिव्यक्तावर्थप्रत्ययो न प्रत्यक्षः। वर्णेभ्यो जायमानो ह्यर्थे प्रत्ययो जायमानः स्फुट एव जायेत न वा जायेत न त्वस्फुट इति विशेषात्। न चानु-पूर्वीविशिष्टसमूहस्यैकत्वादेकत्वव्यवहारस्तेन रूपेणार्थप्रत्यायकत्वं चेति वाच्यं तद्-ग्रहस्योक्तत्वात्। स कीदृश इति चेत्। अन्तःकरणधर्मः स एक एव। श्रोत्र-गृहीततत्तद्वर्णैर्संस्कारजनेन वस्त्रस्येव जवया स्फटिकस्येव वा तत्तदुपरक्ततायां सत्यां चरमवर्णग्रहणकाले सति पदत्वेन प्रतीयते तत्तदुपरागनाशकं च तस्यान्त-करणहृत्त्यन्तरमेवेति न दोषः। अत एव तत्र तत्तदुत्तरत्वादिकमपि गृह्यते। तथा बीजाङ्कुराद्यनेकावस्थो वृक्षरूपो धर्मी क्रमिकाभ्यस्ताभ्योऽतिरिक्तः। शेषा-

**ऊकारप्रश्लेषेणेति । (कै)**

वस्तुतस्तु दोषप्रसक्तनियमाऽपेक्षया नदीशब्दे क्वचित्क्वचिम-न्यायबाधज्ञापनमेव ज्यायः ॥ भाष्ये "नदिविशेषेभ्यस्तर्हि" इति प्रासङ्गिकी शङ्का तां व्याचष्टे

**गङ्गादिभ्य इति । (कै)**

अपगङ्गं परियमुनमित्युदाहरणे। अत्र हि टचि अन्तोदात्तत्वं तद्भावे

---

सोऽयमर्थः योऽर्थः स शब्द इत्येवमितरेतराऽध्यासरूपः सङ्केतोभवति। इत्येवमेते शब्दार्थप्रत्यया इतरेतराऽध्यासात्सङ्कीर्णा । गौरिति शब्दो गौरित्यर्थो गौरितिज्ञानम् । य एषामप्रविभागज्ञः स सर्ववित् । सर्वपदेषुचास्ति वाक्यशक्तिः । वृक्ष इत्युक्तेऽस्तीति गम्यते न सत्तां पदार्थो व्यभिचरतीति । तथा नह्यसाधना क्रियाऽस्तीति । तथा च पचतीत्युक्ते सर्वकारकाणामाक्षेपो नियमार्थोऽनुवादः कर्तृकर्मकरणानां चैत्राग्नितण्डुलानामिति । दृष्टं च वाक्यार्थे पदरचनं श्रोत्रिय

---

च्छन्दोऽधीते श्रोत्रियः इति, स च वीजादिभ्यो भिन्नाभिन्नः । भेदाभेदयोरनुभवात् । तथा गकारौकाराद्यनेकावयवो गौरित्यादिरखण्डरूपेण क्रमिकाभ्यो गकाराद्यवस्थाभ्योऽतिरिक्तो विसर्जनीयादिचरमावस्थायामभिव्यज्यते । इदं गौरिति पदं न तु गौर इतीत्यादिरूपेण । तत्र गकाराद्यवस्थाभ्यो भिन्नाभिन्नं भेदाभेदयोरनुभवात् । स चार्थस्फुटीकरणात् स्फोट इत्युच्यते । न च वर्णानां पदस्वरूपत्वाभावे कथमियन्तो वर्णाः क्रमविशेषविशिष्टा अस्यार्थस्य वाचका इति लोकव्यवहार इति वाच्यम् । वर्णानां प्रत्येकरूपेण पदभेदेऽप्यवस्थावस्थिनोरभेदस्यापि सत्वेनैककस्यापि वर्णस्य वीजाङ्कुरादेरिवाभेदवत्पदाभेदस्यापि सत्त्वेनाक्षतेः । स चैकैको वर्णः यद्भावे सत्यकारोऽपि यानि वर्णान्तराणि सत्प्रतियोगित्वात् तत्सम्बन्धित्वात् । अनन्तपररूपतापरिणामवान् भवति सर्वपदरूपत्वात् सर्वपदार्थाभिधानयोग्यतासम्पन्नो भवति । वस्तुतस्तु अनुभव वाचा

[1]परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु (पा)

इति पूर्वपदप्रकृतिस्वरत्वमित्याह्रः ॥

नित्यार्थं इति । (कै)

[2]"नदीपौर्णमासी" त्यचान्यतरस्यां पदस्यानुवृत्तिरिति भावः ॥

---

१ अ ६ । पा २ । सू ३३ । एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे । परित्रिगर्त्तं वृष्टो देवः । प्रति पूर्वाह्णम् । प्रत्यपरराात्रम् । उपपूर्वरात्रम् । अपचिमर्त्तम् । इतआरभ्यपंचसूत्राणि द्वन्द्वाव्ययीभावविषयाणि । परित्रिगर्त्तम् । अत्र पर्यपयोरपपरीवर्जने इति कर्मप्रवचनीयत्वात् तद्योगे पंचमी अपपरिरित्यव्ययीभावः । प्रतिपूर्वाह्णम् । लक्षणेनाभिप्रतीति समासः । उपपूर्वरात्रम् । अव्ययंविभक्तीति समासः ॥ २ अ ५ । पा ४ । सू ११० ॥

---

छन्दोऽधीते जीवति प्राणान् धारयति । तत्र वाक्ये पदार्थोऽभिव्यक्तिः ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं कारकवाचकं वा । अन्यथा भवति अश्वः अजापय इत्येवमादिषु नामाऽऽख्यातसारूप्याद-निर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेतेति । तेषां शब्दार्थ-प्रत्ययानां प्रविभागः । तद्यथा श्वेतते प्रासाद इति क्रियार्थः । श्वेतः प्रासाद इति कारकार्थः शब्दः । क्रियाकारकात्मा तदर्थः प्रत्ययश्च ।

---

समस्त वेत्ति वक्तुम् : गोगणगौरनमर इत्यादिषु गोत्वाभिधायिषु दृष्ट इति तदभिधानशक्तिः सोमणोच्चिरादिषु ईश्वराद्यर्थाभिधायिषु परेषु सोवर्णेदृढ इति सोऽपि तदभिधानशक्तिरिति । समन्तपदरूपवता चैवं पूर्वो गकार उत्तरेष सोवेति वर्णक्रमेण मम इति पदाद्यावर्त्ये उत्तरस्य विसर्जनीयः । पूर्वेण गका-रौकारूपवर्णक्रमेण गौरित्यादिपदेभ्यो व्यावर्त्य विशेषं गौरिति वाचके पदे गोत्व-वाचके साक्षाद्व्येवावस्थाप्यते इति प्रकारेण एवं ते बहवो वर्णा आनुपूर्वीविशेष-सापेक्षाः । पदाभेदोऽर्थसंकेतेन नियमिताः सहकारिविशेषेण सर्वाभिधानवन्तो

## व्यवस्थितेति। (कै)

अत्र च ज्ञापकपरमिदमेव भाष्यं मानम्। केचिदस्माद्भाष्याद् "नदी"ति सूत्रेऽन्यतरस्यां ग्रहणं निवर्त्तयन्ति ॥

## बहुवचननिर्देशादेवेति। (भा)

तस्मादपीत्यर्थः॥ "अशब्दसंज्ञेति" निषेधादित्यपि बोध्यम्। तत्प्रत्याख्याने त्वयमेव हेतुः। अतोऽस्मान्निषेधान् "नदीपौर्णमासी" त्यादौ स्वरूपग्रहणमपि दुर्लभमित्यपास्तम्। लक्ष्यानुसारेण तत्प्रत्याख्यानसामर्थ्येन तस्याऽत्राप्रवृत्तेः।

---

कस्मात्। सोऽयमित्यभिसम्बन्धादेकाकार एव प्रत्ययः सङ्केते इति। यस्तु श्वेतोऽर्थः स शब्दप्रत्यययोरालम्बनीभूतः। स हि स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसहगतो न बुद्धिसहगत एवं शब्द एवं प्रत्ययो नेतरेतरसहगत इति। अन्यथा शब्दोऽन्यथार्थोऽन्यथा प्रत्यय इति विभागः। एवं तत्प्रविभागसंयमाद् योगिनः सर्वभूतरुतज्ञानं सम्पद्यत इति। योगसूत्रभा-। विभूतिपा- सू१७॥

---

अपि एतावत्संख्याकागकारौकारविसर्जनीया गोरूपमेवार्थमुपस्थापयन्तीति। तेन प्रकारेण वर्णमुखेन तत्पदमेवाविवेकतः संकेत्यते यतः पदमेववाच्यस्य वाचकम्। नचान्यस्यान्यरूपेण कुतः संकेतः पदाख्यस्यबुद्धिग्राह्यस्य बुद्धिधर्मस्य स्फोटस्य ध्वनिरूपैरुपरक्ततया तदभेदात्। यथा संयुक्तं कपालद्वयं जलाहरणहेतुरित्यविवेकतो बालकेभ्य उपदिश्यते पटादिभ्यो घटस्य व्यावर्त्तकान्तरासंभवात्। ततश्च बालो घटस्यकपालाविवेकेनैव जलाहरणहेतुत्वं गृह्णाति तद्वत्स्फोटान्तरव्यावर्त्तनाय वर्णाविवेकेनैव संकेतोपदेशः। संकेतग्रहश्च भवतीति न प्रागुक्तलोकव्यवहारानुपपत्तिरिति बोध्यम्। तदिदं स्फोटाख्यमेकबुद्धिविषयत्वादेकं परीक्ष्या पुरुषस्य प्रधानरूपशक्त्या एक प्रयत्नेन अनितयावच्छ्वव्यवहारस्यापि वर्णवत् क्रमरहितं वर्णरहितम्। अत एव निरंशम् अन्त्यवर्णस्य प्रत्ययरूपव्यापारेणाभि-

[1]नदीभिश्च (पा)

इत्यादौ तु शब्द्याऽनुसारादेवाऽर्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक् ॥ अस्य न्यायत्वाद् "अकृतम्" इत्ययुक्तमत आह

अनाश्रितमिति ॥ (कै)

स्वरूपेति । (कै)

ननेवं बह्वादिसामानाधिकरण्याऽनुपपत्तिः । शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः ॥

संज्ञिनिर्देशेनेति । (कै)

संख्याशब्दबोध्यपंचादिशब्दपरेण संख्याशब्दनिर्देशेनेत्यर्थः ॥

सामान्येति । (कै)

अर्थशब्दोक्तसामान्यं प्रति इहार्थो यस्येत्यस्य विशेषत्वादित्यर्थः ॥

भाष्ये

---

[1] अ२ । पा१ । सू२० ॥

---

व्यक्तं परप्रतिपिपादयिषया वक्तृभिरभिधीयमानैः श्रोतृभिश्च श्रूयमाणैर्वर्णैरेवप-रागात् । अनादिवाग्व्यवहारवासनावशीकृतगाणिकबुद्ध्या परमार्थवत् अन्योन्याभेदेन संवेदनेन प्रतीयते न तु तदतिरिक्तरूपेण । यद्यपि लाक्षाद्युपाधेरपगमे स्फटिकः स्वच्छधवलोऽनुभूयते उपाधिं विनापि प्रकाशनात् । अस्य तूपाधिव्यतिरेकेण प्रतीत्यभावान्न केवलस्य प्रत्ययः । एवं च वागिन्द्रियविषयवर्णानां श्रोत्रग्राह्याणां वाचकपदस्य चाविवेकरूपसंकरः । तस्य च पदस्य एतावतां वर्णानामेवमानुपूर्वीकमिलनमस्यार्थस्य वाचकमिति विषयव्यवस्था तु संकेतग्रहाद् भवति । संकेतस्तु पदपदार्थयोः संकेतकर्तुराहार्येतरेतराभेदारोपरूपेतरेतराध्यासरूपः । अभेदारोपे बीजं तु अविभाग एव । त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । शब्देन बौद्धार्थस्यैव प्रत्ययात् । तत्रापि नाधुनिकसंकेतोविषयव्यवस्थापकतया-

## अर्थादित्यादि । (भा)

लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किं त्वर्थादेवेति भावः ॥ अर्थः सामर्थ्यं तदेव दर्शयति ।

## अर्थो वाऽस्येति । (भा)

अस्य वाक्यस्यार्थोऽध्यापनादिरूपं प्रयोजनमेवं संज्ञकेन भवति तथात्वेव सामर्थ्यमित्यर्थः ॥

## प्रकृतं वेति । (भा)

"इदमेवं संज्ञकेन कर्त्तव्यमिति" तच्च प्रयोजनं प्रकृतं बुद्धिस्थं भवति संज्ञाया बुद्धिस्थत्वादित्यर्थः । इदमन्येषामपि पदार्थनियामकानामुपलक्षणम् । यद्यपि "रूढिर्योगापहारिणी" त्यप्यत्र संभवति तथापि प्रकरणादिसहकृतो योगोऽपि बलवानित्यभिप्रेत्येदमेवोक्तम् ॥ अन्वयमुक्त्वा व्यतिरेकेणाऽप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये

---

नियतत्वात् । किन्तु स्मृत्यात्मकः पाणिन्यादिस्मृत्यात्मकः । किं च स्मृत्यात्मको ज्ञानविषय एव बोधकः । न स्वरूपः सन्निति । तथाध्यासस्य संकेतत्वं कुतः "ओम् इत्येकाक्षरं ब्रह्म" इत्यादि शास्त्रेषु । वृद्धिरादैच् (पा-१ । १ । १) इत्यादौ व्याकरणे । "कम्बुग्रीवादिमान् घट" इत्यादौ लोके । "अमरा निर्जरा देवा" इत्यादौ कोशे च योऽपशब्दः सोऽर्थः योऽर्थः स शब्द इत्येवमितरेतराध्यासरूपस्यैव संकेतस्य दर्शनात् । शब्दवाच्यत्व लक्षणायां प्रमाणाभावात् । ईदृशाध्यासभेदारोपेणैवाभिन्नौ मन्त्रार्थयोरभेदेनोपासनमामनन्ति । मीमांसकाश्च मन्त्रमयी देवतामाहुः । एवं भूते एव संकेते मुख्ये सति कश्चित् भेदं परिकल्प्याऽर्थस्यायं वाचक इत्यपि कदाचित्संकेतः यथा पाणिनेः "कर्मणि द्वितीया" (पा-२ । ३ । २) इति । यथा वा "उञः" "प्रगृह्यम्" इति । वाचकत्वं च तादात्म्यमेवेति दिक् । यत्तु "अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा विषयत्वं शक्तिरिति" तत्कारणत्वादिसाधारणम् । एवमितरेतराध्यासरूपेण संकेतेन निमि-

**आतश्चेति ॥** (भा)

उभयगतिरुभयविषयकं ज्ञानं तात्पर्य्यसन्देहरूपमित्याशयेनाह

**किं संज्ञेयमिति ।** (कै)

वक्तृतात्पर्य्यविषयसन्देहवानित्यर्थः ॥ ननु रूढेर्योगापहारकत्वेन कथं सन्देह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारकत्वं नान्यस्येति भावात् । तदेव ध्वनयन्नाह

**साधीय इति ।** (कै)

क्रियाविशेषणमव्ययं वा सम्यगर्थकम् ॥

**यष्टिहस्तं गमिष्यति ।** (भा)

तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः ॥ ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रमः इत्यत आह

**लोके चेति ।** (कै)

इदमपि स्वरीत्या ॥ "अत्र" । शास्त्रे ॥ "प्रकृताः" । बुद्धौसन्निहिताः ॥ अनेनाऽत्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसन्निधिरेव प्रकरणम् ॥

**संज्ञात्वेन विनियुक्त इति ।** (कै)

ज्ञापिताऽज्ञातशक्तिक इत्यर्थः ॥ अत एव न नियमार्थतेत्याह

---

णेन एते शब्दार्थप्रत्ययाः संकीर्णा लोके दृश्यन्ते । गौरितिशब्दो गौरित्यर्थो गौरितिज्ञानमिति । तत्र शब्दार्थयोरितरेतराध्यासः संकेतपदेनैव दर्शितः शब्दार्थयोः प्रत्ययेन सहतु एकाकारत्वादन्योन्याध्यासः । य एषां प्रविभागज्ञः स सर्वी सतवित् स एव शब्दादीनां तत्वज्ञः । यथा च पदवाक्ययोस्तदर्थानां च संकरस्तथा वर्णपदयोरपि । तथाहि सर्वपदेषु पदान्तरतदर्थसहकारेणाभि

नत्विति । (कै)

तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाऽभावः सूचितः ॥

इह । (भा)

संख्याप्रदेशे । "अधिकार्थे" त्यादिनाऽन्वेति ॥ भाष्ये "न यथा" इत्यादि व्याख्यातृपरम्परावगतवक्तृतात्पर्य्यानुपपत्त्या प्रकरणाद्यना-दरेणोभयगतिरिति भाष्यार्थ इत्यन्ये ॥

कर्मणि संख्यायामिति । (कै)

कर्मगतसंख्यायामित्यर्थः ॥

नचेति । (कै)

तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः ॥ यद्यपि "[1]रूपब्" आदिसूत्रस्थभाष्यादेकत्वं[2] क्रियायामस्ति तथापि द्वित्वाद्यभाव इति तात्पर्य्यम् ॥ "कारकं शक्तिमद्द्रव्यम्" । "साक्षात् क्रियायामि" त्यस्य क्रियायामेव न तु कर्मकारके इत्यर्थः ॥

---

१ प्रशंसायां रूपप् । अ ५ । पा ३ । सू ६६ ॥

२ एकवचनमपि तर्हि न प्राप्नोति । समयाद्भविष्यति । द्विवचनबहुवचनान्यपि तर्हि समयात्प्राप्नुवन्ति । एवं तर्ह्येकवचनमुत्सर्गः करिष्यते तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यतः ॥ भा५ । ३ । ६६ ॥

---

वाक्यभवनशक्तिः किं च परेण बुभुत्सितार्थं तं प्रति प्रत्यायनाय शब्दप्रयोगः । परेण च प्रष्टव्यादिविषयो बुभुत्सितः स च वाक्यार्थ एवेति । सर्वे शब्दास्तत्परा इति यद्यपि केवलपदप्रयोगस्तत्रापि पदान्तरसाहित्येनैवार्थावगमः केवलस्यासामर्थ्यात् । एवं च वाक्यमेव वाचकपदानि तद्भागतया वर्णानां पदार्थवाचकत्ववत् वाक्यार्थवाचकानि एवं च वर्णो यथा सर्वार्थाभिधानशक्तिप्रचित एवं पदमपि एकैकं सर्ववाक्यार्थाभिधानशक्तिरिति । एवं च इह इत्युक्ते आकाङ्क्षा

अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्याद् न हि धातोः परम्परयाऽपि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याशयः॥ "धातुसंज्ञा" क्यङन्तस्य [1]"सनाद्यन्ता" इत्यनेन॥ "साधने"। कारके॥ तव्यादयोऽन्तः कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः॥ एवं सर्वसंज्ञाविषये समाधाय प्रकृत विषये समाधानान्तरमाह

## अथ वेति॥ (भा)

ब्रह्मदत्त इत्युक्तिविषयस्याऽब्रह्मदत्तत्वं स्फोटयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति।

## एष ब्रह्मदत्त इति॥ (भा)

## असंख्यां संख्येत्याहेति। (भा)

नियत विषय परिच्छेदहेतुर्हि संख्या। एवं बहुत्वादेरसंख्यात्वमिति भावः। बहुत्वं हि त्र्यादिसंख्याव्यापकमखण्डोपाधिरूपम्॥

## गुर्विति। (कै)

नन्व[2]तिशदन्ताया इति लिङ्गात् कन् विधौ डतिमात्र गृह्यतेति चेन्न। शास्त्रबाधापेक्षयोभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः॥

---

१ सनाद्यन्ता धातवः। ३। १। ३२॥ २ अ ५। पा १। सू २२॥

---

पूरणार्थेष्वप्यस्ति पचति क्रियते वेति पदान्तराणां योग्यताकाङ्क्षातात्पर्यादिवशाध्याहारो गम्यते इति नैर्वाकैः इत्पदस्य संकरोऽविवेकः। यत्रापि क्रिया विशेषे तात्पर्यादिकं नावधार्यते तत्राप्यस्तीति गम्यते। सत्तायाः यत्यर्थेनाव्यभिचारकपयोग्यता सत्वात्। लोकेऽस्त्यर्थं विना मुख्यपदार्थानवगतेर्वाऽव्यभिचार

**नैष दोष इति ।** (कै)

अतिशयद्योतकाया इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन संख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोस्सम्भवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात् संख्यापदार्थान्वयवेलायां जायमानाऽनुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यते इति भावः । एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम् । तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥ भाष्ये

**संज्ञा च नामेति ।** (भा)

नाम प्रसिद्धमेतत् । यतोऽन्यल्लघीयो न भवति सा संज्ञेति ॥

**तदर्थानुगतानामिति ।** (कै)

संख्यानकरणत्वसमानाधिकरणसंख्याशब्दवद्भिन्ना बह्वादय इत्यर्थादिति भावः ॥

**कथं स्यादिति ।** (कै)

महासंज्ञाकरणस्य चरितार्थतया कृत्रिमन्यायबाधे मानाभावादिति भावः ॥

---

आकाङ्क्षा सत्वाच्च ! नचार्थविशेषे तात्पर्य्यग्रहेऽपि तदर्थकपदानां आनन्त्येन शब्दविशेषानुमाने किं नियामकं । स्वेच्छाया एव नियामकत्वात् । तथा क्रियाया असाधनाया अभावात् । पचतीत्युक्ते सर्वकारकपदानामनुमानं अनुमितानामपि कारकान्तरव्यावृत्त्यर्थं चैत्रोऽग्निना तण्डुलान् इत्यादिरनुवादः कदाचित् । क्वचिदध्याहारं विनापि पदवाक्ययोरर्थाभेदनियामकः संकरः । यथा छन्दोऽधीते इति वाक्यार्थे श्रोत्रियपदस्य प्राणान् धारयतीति वाक्यार्थे जीवति इति पदस्य प्रयोग एतावतापि श्रोत्रियपदस्याद्य समभिमिलितस्य नैवं विधार्थबोधे सामर्थ्यं शब्दशक्तिस्वभावत् । नचैवं वाक्यस्य गुरुतरस्य कदापि प्रयोगो न स्यात् । संशयवारणाय तत्प्रयोगस्यापि संभवात् ।

## सर्व इति । (कै)

नियतानियतसंख्यावाचीत्यर्थः ॥

## आक्षिप्यत इति । (कै)

"संख्येति" विभक्तसूत्रे इति शेषः। एवं च संख्यानकरणीभूताः संख्यासंज्ञका इत्यर्थः। संज्ञायास्संख्याकाङ्क्ष्यतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवाऽत्राऽऽक्षेप इति भावः॥

## नियमार्थमिति । (कै)

"बहुगणेति" द्वितीयसूत्रे संख्येतिवर्त्तते। अनियतसंख्यावाचिनां चेद् बह्वादीनामेवेति भावः॥

## अत एवेति ।

अन्वर्थत्वाश्रयणादेवेत्यर्थः ॥

## संज्ञा न भवतीति । (कै)

प्राप्तेरेवाभावादिति भावः ॥

## संख्यावाचिनोरेवेति । (कै)

बहुगणयोरित्यर्थः ॥

## नियमार्थेति ।(कै)

नियमफलक इत्यर्थः॥ परे तु परस्परसाहचर्यात्संख्याव्यापकार्थवाचिनोरेव बहुगणयोरेवग्रहणम् । न तु संघवैपुल्यवचनयोरिति

---

पदेषु तद्भागतया तदर्थशक्तिमत्त्वेऽपि केवलात् सहकारिणं विना तदर्थाप्रत्ययाच्च । नन्वेवं सर्वत्र वाक्यस्यैव बोधकत्वे किमर्थं व्याकरणे पदानामन्वाख्यानं किं च पदवत् वाक्यमखण्डमेव न सन्त्येव पदानीति तदन्वाख्यानमसंभवि चेति चेन्न । वाक्यात् कल्पनयैव पदं प्रविभज्य कल्पितक्रिया वाचकत्वेन कारकवाच-

व्यर्थाऽन्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्याऽपि ग्रहणार्थं महती संज्ञेति भाष्याशयः ॥

[1]असंख्यां संख्येत्याह (भा)

इति भाष्येण बह्वादिषु संख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो व्यर्थः ॥ "[1]एकादिकाया चापि संख्यायते" इत्यस्य एकादिकया संख्यायते चापि संख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः ॥ "चस्तु" वाक्यालङ्कारे उभावपि वाक्यालङ्कार एव। यद्वा। बह्वादिकयाऽपि संख्यायते ख्याप्यते चित्रादिद्वारेत्यर्थः। वतन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्यद्यपि साक्षात्संख्यानकरणीभूतार्थप्रतिपादकत्वमुपपादयितुमशक्यं तथापि "कति" इत्यत्र संख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम् । एवं वतन्तेऽप्यूह्यमित्याहुः ॥ भाष्ये

संज्ञार्थमिति । (भा)

संज्ञाशब्दस्वरूपं तदर्थकमित्यर्थः । संज्ञिनिरूपितसंख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः ॥ ननु "ष्णान्ता" इत्यनेन संख्याविशेष्यत इति संज्ञिविशेषणं संख्याग्रहणमित्ययुक्तमत आह

---

१ अत्रैवोक्तम् ॥ २ अत्रैवोक्तं भगवता ॥

---

त्वेन वाऽन्वाख्यानात् । अन्यथा घटो भवति । भवति भिक्षां देहि । अश्वस्त्वं । अश्वोयासि । अजापयः पिब । अजापयः शकून् इत्यादौ नानाख्यातसारूप्यादन्वाख्यानं विना क्रियाकारकार्थत्वान्यतरेणाज्ञातं कथं क्रियायां कारके वा प्रयुज्येत । मम श्वि त्वं गच्छ । अश्वत्वजातिमानाच्छति छागः पयः पिब शकून् नाशय इत्याद्यर्थप्रतीतिः । तस्मादपोद्धृत्यान्वाख्यानं नत्वन्वाख्यानादेव पारमार्थिको विभागः पदानाम् । एवं वाक्याविभागदर्शनात् । वर्णानामपि पदैरविभागं मन्यन्ते

[1]ष्णान्तेति ॥ (कै)

भाष्ये "संज्ञी" षट्संज्ञासंज्ञी विशेष्यते स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः ॥ ननु स्वरितत्वबलेन अनुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनाऽर्थभेदस्य सत्त्वेन नचान्यार्थमित्ययुक्तमत आह

एकेति । (कै)

यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्त्तते न तु तज्जातीयं शब्दान्तरमिति भावः । अर्थाधिकार एव षाष्ठ्यर्हितस्तदर्थस्य षायोग्यत्वादिहाऽसम्बन्ध इति भावः ॥

इत्याहेति । (कै)

इत्याशङ्क्याहेत्यर्थः ॥ भाष्ये

न खल्वपीति । (भा)

प्रकृतमनुवर्त्तनाद्देशान्तरगमनादन्यद्भवतीति "नखल्वि"त्यन्वयः॥

यथेति । (कै)

सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधायां वार्य्यत इति नार्थः । सर्पणस्याऽहिशब्दप्रवृत्तिनिमित्तत्वाभावात् । किन्तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः ॥ "रूपान्तरम्" । अर्थभेदम् ॥ "पदार्थानाम्" इति द्वन्द्वः ॥

---

१ अ१ । पा१ । सू२४ ॥

---

लौकिकैः । यथा च वाक्ये पदभागाः कल्पिता एवं पदे वर्णभागा इति तात्पर्य्यं । नचैवं शब्दार्थप्रत्ययानामविभाग एवास्तु । प्रतीत्याभेदस्य सिद्धेः । तथाहि श्वेतत इति षाष्ठ्यरूपक्रियार्थः प्रत्ययश्च तत्तदर्थभिन्न एव । नचाभेदेन प्रतीत्या संकरात् कुतस्तेषां प्रविभागः । सोऽयमित्याभिसम्बन्धरूपसंकेतोपाधिक एकाकारप्रत्ययो न

**शक्तिवैचित्र्यात् ।** (कै)

अनेकशक्तित्वादित्यर्थः । एवं च पूर्वंच तयाशक्त्या स्वरूपपरस्यापि उत्तरत्राऽन्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः । शब्दाधिकारोऽत्रलक्ष्यानुरोधादाश्रीयत इति भावः ॥

**भवेद् द्रव्येष्वेतदेवं स्यादिति ।** (भा)

"स्याद्" इति संभावनायां लिङ् "भवेद्", इति प्रार्थनायां द्रव्ये विषये पूर्वोक्तार्थकर्तृका संभाविता संज्ञा भवत्वित्यर्थः॥ शब्दभेदनयेऽपि नक्षतिरित्याह

**शब्दस्त्विति ॥** (भा)

**येन येन विशेषेणेति ।** (भा)

विशेष्यत इति विशेषः परिच्छेद्यः । तस्य तस्य "विशेषकः" परिच्छेदकः । तत्परिच्छेदकार्थवानन्य एव शब्दो भवतीत्यर्थः ॥ तदुपपादयति ।

**स्वरितत्वेनेति ॥** (कै)

अध्यर्द्धस्यासंख्यावाचित्वमुक्तमुपपादयति

**अर्द्धशब्दस्येति ॥** (कै)

---

नात्विक इत्यदोषात् । वस्तुतः शब्दप्रत्यययोरालम्बनं स्फोतोर्थः । स च शब्दादिव्याहृताभिर्नवपूरणत्वादिभिरवस्थाभिस्स्वाभिर्विक्रियमाणतान्न शब्दप्रत्यययोः सद्गतस्ताभ्यामभिन्नः । एवं शब्दः स्वावस्थाभिर्विक्रिमाणोनार्थबुद्ध्योः सद्गतः । एवं प्रत्ययोऽपीति परस्पर विभक्ता एवैते । तेषु मनुष्यवचनविषये प्रविभागसंयमात् साक्षात्कारपर्य्यन्तात् योगीसर्वभूतवतज्ञो भवति तेषां वतं तदर्थभेदं ततूप्रत्ययंच योगी जानातीति दिक् । सू १० ॥

ननु समासकन्विध्यर्थं विधीयमाना संज्ञा कथं लुको निमित्त-मत आह

**समासेति ।** (कै)

समासपदेन द्विगुसमास एव । तस्यैव संख्याकार्य्यत्वात् । तन्नि-मित्तकमपि द्विगुनिमित्तक[1]मेवेत्याह

**तेन द्विग्विति ॥** (कै)

भाष्ये

**अधिकग्रहणं चेति ।** (भा)

लुग् भिन्नसंख्याकार्य्यसिद्ध्यर्थमधिकग्रहणं संख्यासंज्ञायां कर्त्तव्य-मित्यर्थः ॥

**नन्विति ।** (कै)

ञिण्दादिषु तद्विधानादिति भावः ॥

**परेष्वर्थेष्विति ।** (कै)

[2]"तमधीष्ट" इत्यादिष्वित्यर्थः ॥

**नियतसंख्यावाचित्वमिति ।** (कै)

[3]नियतविषयपरिच्छेदहेतुलक्षणसंख्यावाचित्वमित्यर्थः ॥ भाष्ये

**यद्यमिति ।** (भा)

न च वैपुल्यवाचिनामपि संख्याकार्य्यापत्तिः । संख्यापदार्थ-

---

१ द्विगुनिमित्तक एव । क ॥

२ तमधीष्टो भृतो भूतो भावी । अ ५ । पा १ । सू ८० ॥

३ नियतविषयकपरिच्छेदकलक्षणसंख्यावाचित्वमित्यर्थः । क ॥

सम्बन्धिवङ्कादिग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसम्बन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् पूगादिभ्योऽड्थं "बहुगणे"ति सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः ॥ केचित्तु "[1]वतोरिड्वा" इत्यनेन संख्यानकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसंख्याकार्य्याणां संख्याकार्य्यं[2] ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं तदाह

**योगापेक्षमिति ।** (भा)

प्रयोगापेक्षमित्यर्थः ॥ एतेन "पूगादिभ्यः" ग्रामादिप्रसङ्गोऽपि वारित इत्याहुः ॥

---

# ष्णान्ता षट् । १ । १ । २४ ॥

स्वरूपप्रतिपत्त्यर्थाऽऽद्योच्चारणस्याऽन्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पक्षादिषु न स्यादत आह

**प्रकृतीति ।** (कै)

प्रकृतिप्रत्ययविभागेन प्रदिपादनरूपं यद्गुणैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः । एतदभिप्रायेणैव "उपदेशेऽजिति[3]" सूत्रे वक्ष्यति "[4]सङ्कीर्णावुद्देशोपदेशाविति" ॥

---

१ अ ५ । पा १ । सू २३ ॥ २ संख्याकार्य्यत्वं ज्ञाप्यते । क ॥
३ अ १ । पा ३ । सू २ ॥ ४ सङ्कीर्णावुपदेशोद्देशौ । क ॥

प्रत्ययाद्युपदेशे इति । (कै)

आदिनाऽऽगमः ॥ यथा सप्तनादौ "[1]सप्तपूभ्य्यां तुट् च" इति ॥ [2]प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्तासंख्यानिष्पन्ना भवति सेत्यर्थः ॥ यद्यपि "शतानि" इत्यादावपि नुमागमोपदेशेन नान्तसंख्यानिष्पत्तिरस्ति तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणं न तु विभक्तिनिमित्तकानामपि बहिरङ्गत्वादिति भावः ॥

तदर्थेति । (कै)

नुमुटोरर्थः प्रयोजनं यस्येति बहुव्रीहिरिति भावः ॥ नन्वन्तरङ्गत्वात् पूर्वमेव षट्त्वं प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्याऽसिद्धत्वान्न निवर्त्ततेत्यत आह

कार्य्यकालेति ॥ (कै)

सुप उदात्तत्वेति । (कै)

"अष्टन" इति प्राप्तेत्यर्थः ॥ आद्युदात्तत्वेति क्वाचित्कोऽपपाठः ॥ यद्वा दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाऽऽश्रयणस्यैव ज्ञापकं तद्द्वारैव च षट् संज्ञा ज्ञापकत्वं तत् पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेदम् "[3]अष्टनो दीर्घात्" इत्यत्र कैयटे । किं च यथोद्देशपक्षे षटत्वं स्थानिवद्भावेनापि सुलभं नकारान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदाय-

---

१ उ-१ पा । सू १५५ ॥ २ प्रकृत्यादिभ्य उपदेशे । क ॥
३ अ ६ । पा १ । सू १७२ ॥

धर्मत्वेन तन्निमित्तकनुडादेरत्विधित्वाभावादिति बोध्यम् । नचा-ऽऽत्वस्य नित्यत्वाद् "अष्टसु" इति प्रयोगएवासङ्गत इति वाच्यम् । [1]तदैकल्पिकत्वस्यापि ज्ञापनात् । यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यत इति सिद्धान्तात् ॥

## परत्वादिति । (कै)

अष्टन् स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरम् "अष्टसु" इत्यादौ अष्टन् स्वरः स्यादेवेति वाच्यम् । "सकृद्गति" न्यायाऽऽश्रयणात् ॥

## अपवादत्वादिति । (कै)

न च स्वरः प्रवृत्तेः पूर्वमन्तरङ्गस्याऽप्येकादेशस्याऽप्रवृत्तेः "[2]यद्वि-तुपरम्" इत्यादि सूत्रस्थभाष्यसम्मतत्वेनाऽष्टावित्यादावष्टन् स्वर-

---

१ ननु च नित्यमात्वम् । एतदेव ज्ञापयति विभाषात्वमिति यदयं दीर्घ-ग्रहणं करोति । इतरथा ह्यष्टन इत्येव ब्रूयात् ( भा–६–१–१७२ ।) एवं च "अष्टाभ्य औश्" । ७ । १ । २१ । इति सूत्रव्याख्यानावसरे एतदेवोक्तं भगवता । तथा च भाष्यम् । ननु च नित्यमात्वम् । एत-देव ज्ञापयत्याचार्यो विभाषात्वमिति । यदयमात्वभूतस्य ग्रहणं करोति । अष्टाभ्य इति । इतरथा ह्यष्टन इत्येव ब्रूयात् ।

औश्विधावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते ।
अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥ १ ॥
आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।
स्वमोर्लुक् च त्यदादीनां कृते ह्यत्वेन लुग् भवेत् ॥ २ ॥

२ यद्वितुपरं छन्दसि । अ ८ । पा १ । सू ५६ ॥

चरितार्थ इति वाच्यम्। अष्टनो [1]घृतादित्वादन्तोदात्तत्वेन [2]"एकादेश उदात्तेन" इत्येवसिद्धेः। घृतादावस्य पाठे चेदमेव भाष्यं मानम्। गौणे प्रियाष्टाभिरित्यादौ षट्स्वराऽष्टन्स्वरयोः प्रवृत्तिरस्त्येव। तेषामनभिधानाच्च। एतेन कदष्टनशब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाऽन्त्युदात्त इति कदष्टावित्यष्टैकादेशस्वरेणाऽसिद्धेस्तत्राऽष्टन् स्वरः सावकाश इति परास्तम्। तस्याप्यनभिधानात्॥ ननु संख्यावाचित्वे "[3]एका इति" बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह

**संख्येति॥** (कै)

**षट् स्वर इति।** (कै)

---

१ घृतादीनां च। फिट् सूत्रम्। १ पा। सू १२॥

२ एकादेश उदात्तेनोदात्तः। अ ८। पा २। सू ५॥

३ अत्र भाष्यम्। इहापि तर्हि प्राप्नोति। सधमादो* द्युम्न एकास्ता एका इति। नैष दोषः। एक शब्दोऽयं बह्वर्थः। अस्त्येव संख्यापदम्। तद्यथा। एको द्वौ बहव इति। अस्त्यसहायवाची। तद्यथा। एकाग्नयः एकहलानि एकाकिभिः क्षुद्रकैर्जितमिति। असहायैरित्यर्थः। अस्त्यन्यार्थे वर्त्तते। तद्यथा। प्रजामेका रक्षत्यूर्जमेकेति। अन्येत्यर्थः। सधमादो द्युम्न एकास्ताः। अन्या इत्यर्थः। तद्योऽन्यार्थे वर्त्तते तस्यैष प्रयोग इति॥ एवं च "एकादाकिनिच्चासहाये। ५। ३। ५२। एतत्सूत्रस्य असहायस्य वा इति वार्त्तिकव्याख्यानावसरेऽप्येतदेवोक्तं भगवता॥

---

* द्युम्ना इति एकाः। अत्र एवमपि पाठोऽस्ति॥

† द्युम्नाः। अत्र एवंविधपाठोऽप्यस्ति॥

[1]"षट् च चतुर्भ्यो हलादिः" इत्यनेन । न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्त एव गृह्यते इति नायं दोषः । साहचर्यस्य न सर्वत्र व्यवस्थापकत्वमित्याशयात् ॥

## कृतात्वेति । (कै)

ततश्च कृतात्वस्य कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्नुट्-सिद्धिरित्यर्थः ॥

## औत्त्वेति । (कै)

अत एव विभक्तौ जश्शसोरनुवृत्तिर्न । तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव विपरीतन्तु न व्याख्यानात् ॥

## ततश्चेति । (कै)

न च सन्निपातपरिभाषयाऽऽत्वं न स्यात् । अष्टानामितिरूपं तु नुटि "[2]नोपधायाः" इति दीर्घे न लोपे च सिद्धमिति वाच्यम् । असिद्धस्यापि तद्विघातकविधेरनयाऽप्रवृत्तिबोधनेन [3]लोपस्याप्यनापत्तेः । अत एव [4]पुगह्रस्वत्वस्याऽनिमित्तं स्यात् "अदीदपद्" इति भाष्ये "[5]हन्मेजन्त"सूत्रे उक्तम् । जानातेर्मित्वेन ज्ञापकेन ह्रस्वविषये [6]तदप्रवृत्तिरिति च कैयटो वक्ष्यति । अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया तस्या अप्राप्तौ भाष्यासङ्गतिः स्पष्टैव ।

---

१ अ ६ । पा १ । सू १७९ ॥ २ अ ६ । पा ४ । सू ७ ॥

३ अप्रवृत्तिबोधनेन न लोपस्याप्यनापत्तेः । क । ख । ग ॥

४ पुगह्रस्वत्वस्यादीदपत् । ( भा—वा ) पुगह्रस्वत्वस्यानिमित्तं स्यात् । क । अदीदपदिति ॥ ५ अ १ । पा १ । सू ३९ ॥

६ तदप्रवृत्तिं च कैयटो वक्ष्यति । ख ॥

किं चातिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः। एवं हि वच्मीत्यादौ सम्बुद्धिह्रस्वे कृते सम्बुद्धिलोपे कृतेऽपि [1]प्रत्ययलक्षणेन निमित्तविघाताभावात् तत्राऽस्या अतिव्याप्तिपरतत्सूत्रस्य भाष्यविरोधः। किं च "गव्यिता" इत्यादौ सन्निपातपरिभाषया लोपो नेति सिद्धान्तभङ्गः। यलोपस्य बहिर्भूतढजनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात्। वस्तुतस्तु षट्त्वसन्निपातनिमित्तको नुट् न च तस्य सन्निपातस्याऽत्वं विघातकं नापि न लोपः स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वात्। अत्र पक्षे दीर्घग्रहणं पुनः प्रसङ्गपक्षे "अष्टभिः" इत्यत्र षट् स्वरे कृतेऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम्। अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न इष्टम्। अजाद्योर्जश्शसोस्तद्धात्वं न स्यादत आह

## जश्शसोरिति॥ (कै)

भाष्ये

## प्रियाष्टान इति प्राप्नोतीति। (भा)

इत्येव प्राप्नोतीत्यर्थः। अन्यथाऽपकर्षाऽभावेऽपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः॥ ननु जसि ज्ञापकसिद्धाऽऽत्वप्राप्तेरौशस्य प्राप्तेराह

## यत्रेति। (कै)

बहुवचननिर्देशादिति भावः॥ "षड्भ्य" इत्येतत् साहचर्या-

---

१ अ १। पा १। सू ६२॥

दृष्य प्राधान्ये एव प्रवृत्तिरिति भावः। तस्य च यथा प्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा "¹सर्वादि" सूत्रे उपपादयिष्यते । शुद्धलक्षणैकचक्षुष्कस्याऽत्र पूर्व्वपक्षित्वमिति तात्पर्य्यम् ॥

औशत्वेनेति । (कै)

औशेत्यर्थः । त्वप्रत्ययप्रयोगस्तु अनुकरणादनुकार्य्यरूपे भावे इति बोध्यम् । "आत्व" इत्यादि भाष्यप्रयोगात् ॥

औशत्वेनेति । (कै)

तद्विघातकसूत्रस्यात्वनिर्द्देशेनेत्यर्थः ॥ "अत्र" । गौणे ॥

ज्ञापकादिति । (कै)

अस्य प्राप्तियोग्यमपीति शेषः । क्वचित्तु ज्ञापकादिति न दृश्यते ॥ नन्वपकर्षपक्षेऽपि "अष्टनो" विहितमात्वं कथं तदन्ते स्यादत आह

पदाङ्गेति ॥ (कै)

बहुवचननिर्द्देशाभावादिति । (कै)

साहचर्य्याभावादित्यपि बोध्यम् ॥ लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे

तत्र माभूदात्वमिति । (कै)

पक्षान्तरेऽपि अनभिधानादात्वाऽभाव एव बोध्यः ॥ यत्तु भव-

---

१ अ १ । पा १ । सू २७ ॥

त्वेवाचालमित्यर्थ इति। तन्न। अपकर्षपक्षे आलबाधकोपाधाभावेन फलभेदापत्तेः। नन्वयं भाष्यार्थो न युक्तस्तथा हि सतीष्यत एवैतदित्येव ब्रूयात् किं च "अप्रयुक्ते" इति वाक्यशेषोऽसङ्गतः प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् "प्रयुक्तानां हीदमन्वाख्यानम्" इति भाष्योक्तेश्चेत्यस्वरेणाह

## नैव वेति। (कै)

लक्षणस्याभावः। अलक्षणं तस्य योग्यता यथालक्षणमित्यव्ययीभावः। अप्रयुक्ते लक्षणाभावस्य योग्यता न तु लक्षणस्येत्यर्थः। एवं च तादृशप्रयोगोऽसाधुरिति भावः। किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्याज्यायसी। एवं च हरदत्तादीनां प्रियाष्टन् शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यस्य तत्प्रयोगविचारः प्रामादिक एव इत्यवधेयम्। एतेन पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्वमिति विरुद्धार्थव्याख्यानद्वयमयुक्तम्। किं च "अष्टाभ्य" इति निर्देशात् कृताकारादेवाष्टनो "जश्शसोः" इति तद्विषयेऽप्यात्वम्। अन्यथा अष्टन इत्येव ब्रूयादिति साप्तमिकभाष्ये "एकवचननिर्देशात् प्रधान एव औत्वे" इति प्रभाशयोऽपि चिन्त्य इत्यपास्तम्। गौणे प्रियाष्टादीनाम् अनभिधानमित्यत्रत्यसिद्धान्तानुसारेण तद्भाष्यसत्त्वात्। अरुच्यैव व्याख्यानान्तरप्रवृत्तेश्च॥

---

# डति च । १ । १ । २५ ॥

भाष्ये

**यदि तावद् इति । (भा)**

ष्णान्ता च षड् इति सूत्रं [१]पाठ्यं तत्र चकाराद् यत्नात् [२]स्वरितलिङ्गाद् अनुवर्त्तमानं डतिग्रहणं सम्भन्त्स्यत इति भावः ॥

**न तु पातेरिति । (कै)**

एवं चार्थाधिकारादिहापि तद्धितस्यैव ग्रहणमिति भावः । संख्येति महासंज्ञासामर्थ्यात् तत्र संख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम् ॥ भाष्ये

**डति च इत्यचेति । (भा)**

चकारात् षट् संज्ञानन्तरं करणात्तानेन संज्ञाद्वयस्यापि विधानमित्यर्थः ॥

**अन्वर्थत्वाच्चेति । (कै)**

संख्यायतेऽनयेति हि सः । न च तस्यार्थस्य डत्यन्ते सम्भवः संख्या प्रश्नविषयत्वं तु न तदर्थ इति चिन्त्यमेतत् । [३]तस्मादुणा-

---

१ "पाठ्यम्" इति नास्ति इपुस्तके ॥

२ स्वरितलिङ्गासंगात् । क । ख । ग । इ ॥

३ प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् । वा । प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्य्यस्य सिद्धम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ( ३ । १ । २ । ) ॥ अत्रोच्यते । नाम खल्वपि धातुजम् इति नैरुक्ताः । वैयाकरणानां शाकटायनोऽपि धातुजम् नामेति । किम-

दीनामव्युत्पन्नत्वान्न तत्र डतिरिति अस्याऽग्रहणमित्युचितम् । व्युत्पत्तावपि पातेः कतिनापि सिध्यतीति न तत्र डतिनियम इति बोध्यम् ॥

## संख्याप्रश्नेति । (कै)

सन्नियोगशिष्टन्यायाच्च षट्संज्ञाऽपि तस्यैवेति भावः ॥

---

नेन महता प्रयत्नेन । भगवता पाणिनिना एकेनैव सूत्रेण सर्वं प्रतिपादितम् । तथा च सूत्रम् । "उणादयो बहुलम्" । ३ । ३ । १ । एतच्च भगवता महाभाष्यकारेण व्याख्यातम् । तथा च भाष्यम् । "उणादयो बहुलम्" । ३ । ३ । १ ॥ बहुलवचनं किमर्थम् । बाहुलकं प्रकृतेस्तनुदृष्टेः । तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते ॥ प्रायसमुच्चयनादपि तेषाम् ॥ प्रायेण खल्वपि ते समुच्चिता न सर्वे समुच्चिताः ॥ कार्य्यसशेषविधेश्च तदुक्तम् । कार्य्याणि खल्वपि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि ॥ किं पुनः कारणं तन्वीभ्यः प्रकृतिभ्य उणादय दृश्यन्ते न सर्वाभ्यो दृश्यन्ते किं च कारणं प्रायेण समुच्चिता न सर्वे समुच्चिता । किं च कारणं कार्य्याणि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि । नैगमरूढिभवं हि सुसाधु ॥ १ ॥ नैगमाश्च रूढिभवाश्चौणादिकाः सुसाधवः कथं स्युः ॥ नाम च धातुजमाह निरुक्ते । नाम खल्वपि धातुजम् । एवाहुर्नैरुक्ताः ॥ व्याकरणे शकटस्य च तोकम् ॥ वैयाकरणानां च शाकटायन आह धातुजं नामेति ॥ अथ यस्य विशेषपदार्थो न समुत्थितः कथं तत्र भवितव्यम् । यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ २ ॥ प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः प्रत्ययं च दृष्ट्वा प्रकृतिरूहितव्या ॥

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततःपरे ।
कार्य्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥

# क्तक्तवतू निष्ठा ।१।१।२६॥



अनुबन्धानां नित्यलुप्ततया विशेषणत्वासम्भवादुपलक्षणत्वेन[1] तच्छब्दमात्रस्योपलक्ष्यत्वं [2]मन्वानो वार्त्तिकमारभत इत्याह

इहेति ॥ (कै)

सारूप्यम् । (कै)

प्रयोगे इति शेषः ॥

मन्यत इति । (कै)

निश्चिनोतीत्यर्थः । नियतं सन्निधानं येषां इति विग्रहः ॥

कारकेति । (कै)

न [3]तच्छब्दमात्रं लक्ष्यं किन्त्वर्थविशेषाद्यवच्छिन्नमिति भावः ॥

तद्दर्शनादिति । (कै)

कालादिज्ञानादित्यर्थः ॥

तत्प्रत्ययान्त इति । (कै)

ककाराऽनुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः ॥ भाष्ये

[4]नष्टं गृहमिति । (भा)

अज्ञातमित्यर्थः ॥

---

१ मन्यमानः । क । ख । ग । ङ ॥

२ उपलक्ष्यत्वे च । क । ख । ग । ङ ॥

३ तत् शब्दमात्रं लक्ष्यम् । क ॥ ४ भाष्ये "नष्टं तद् गृहमिति" ॥

**नष्टः प्रत्यय इति।** (भा)

अज्ञातानुबन्धः प्रत्ययो भवतीत्यर्थः॥

**सानुबन्धकस्येति।** (भा)

पूर्वं यः कारकवाँस्तस्येत्यर्थः॥ [1]"उद्देशम्"। ऊर्द्ध्वदेशम्॥

**सिद्धविपर्य्यासस्येति।** (भा)

षष्ठ्यर्थे सिद्धस्तु विपर्य्यास इत्यर्थः॥ यद्यपि विपर्य्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह

**संशय इति॥** (कै)

**बुद्धेरनवस्थितत्वमिति।** (कै)

सन्देहाभिनय इत्यर्थः॥

**वीप्सादीति।** (कै)

पदार्थविषयव्याप्तीच्छा प्रयोक्तृधर्मो हि वीप्सेति भावः॥ भाष्ये "कारकेति" कालातिरिक्तप्रत्ययार्थपरम्॥

**वेदिकां पुण्डरीकं वा** (भा)

इति भाष्ये। एवं च साक्षाद् इतरव्यावर्त्तकं विशेषणं स्वोपस्थाप्यार्थद्वारा इतरव्यावर्त्तकमुपलक्षणमिति भावः॥

**प्राकीर्ष्टेति।** (भा)

यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि यत्प्राकीर्ष्टत्यस्योपलक्षणमिदम्। अत्र हि "[2]निपातैर्यद्यदि" इति

---

१ भाष्ये॥

२ निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्र युक्तम् (८। १। ३०।)। "यदग्ने स्यामहन्त्वम्"। "युवा यदा कृथः"॥ "कच्चिदङ्ग ध्यासन्"। "अचित्तिभिश्च कृमा काचेत्"। "पुत्रासो यत्र पितरो भवन्ति"॥

निघाते निषिद्धे "[1]निष्ठा च द्व्यजनात्" इति नित्यमाद्युदात्तत्वं स्यात्। असंज्ञायामपि तत्प्रवृत्तिं मन्यते [2]"आदिः सिच" इति विकल्पस्त्विष्यत इति भावः॥ सिचोऽत्र लुप्तत्वेनादर्शनादाह

**आदिशब्द इति॥** (कै)

**अञ्जिष्टपीति।** (कै)

यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात् क्तोऽयमित्यवगतिः। एवं च सनादिविधावित्संज्ञकनकारोपलक्षितः प्रकृत्यर्थानुवादी [3]इच्छार्थो वा सकारो भवतीत्यर्थः॥ अनुवादे "[4]सन्यत" इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः॥ अत एव [5]"आटश्च" इत्यादिः सार्थकम्। अन्यथा यत्र सूत्रे आट् न तत्र वृद्धिरिष्यते। यत्र चेष्यते प्रयोगे न तत्राडिति तद्वैयर्थ्यं स्पष्टमेवेति सर्वमवदातम्॥

**इति शिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे पञ्चमाह्निकम्॥**

---

१ निष्ठा च द्व्यजनात्। ६। १। २०५॥
२ "आदिः सिचोऽन्यतरस्याम्"। ६। १। १८७॥ "यासिद्धं वृत्तिरश्विनी"॥
३ प्रकृत्यर्थानुवादि इच्छार्थः। क। प्रकृत्यर्थानुवादीच्छार्थः। ख॥
४ अ ७। पा ४। सू ७९॥ ५ अ ६। पा १। सू ९०॥

# सर्वादीनि सर्वनामानि । १ । १ । २७ ॥

## नञिति । (कै)

आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वाऽनुपपत्तेरिति भावः ॥ प्रकृते तत्पुरुषः कर्मधारयः । दृष्टान्ते षष्ठीतत्पुरुषः ॥

## नत्वस्येति । (कै)

कर्मधारयघटकस्येत्यर्थः ॥ बहुव्रीहेरेव शेषे युक्तिमाह

## तच्च नपुंसकमिति । (कै)

तत्पुरुषस्तु पुंल्लिङ्ग इति भावः ॥

## स्वरभिन्नानामिति । (कै)

स्वरेण विलक्षणानां स्वरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः "[1]समासस्य" इत्यन्तोदात्तः । परस्तु "[2]बहुव्रीहौ प्रकृत्या" इति । परस्मात्त्वेणान्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति । अन्त्ये तु सिध्यतीति विशेषः ॥ "वक्ष्यमाणेन" । तद्गुणसंविज्ञानेन ॥

---

१ अ ६ । पा १ । सू २२३ ॥

२ बहुव्रीहौ प्रकृत्या पूर्वपदम् । ६ । २ । १ ॥

प्राथमकल्पिकः । (कै)

एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः । वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः ॥ विग्रहप्रश्नोत्तरे "[1]तानि" इत्याद्यधिककथनमयुक्तमत आह

अन्यपदार्थस्येति ॥ (कै)

नेष्यत इति । (कै)

प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः॥ नन्वेवमपि "तानि" इत्येव सिद्धे "इमानीति" व्यर्थमत आह

सर्वनामद्वयेति । (कै)

सर्वनामद्वयोपादानेन [2]तद्गुणसंविज्ञानं सूचयतीत्यन्वयः ॥

प्रत्यक्षेति । (कै)

उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात्तच्च सर्वशब्दस्यान्तर्भावादिति भावः ॥ गुणत्वं दर्शयति

उपलक्षणानीति । (कै)

प्रकारतयाऽन्वयीनीत्यर्थः ॥

कार्य्ये संविज्ञानमिति । (कै)

तच्च द्वेधा क्वचिद्विशिष्टस्य क्रियायां सन्निधानमात्रेण । यथा क्रियायोगाभावेऽपि शुक्लवाससं भोजयेति । क्वचित्तु विशे-

---

१ अत्रैव भाष्ये ॥

२ तस्यान्यपदार्थस्य गुणानां वृत्तिपदार्थरूपाणां विशेषणानां कार्य्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञानः ॥

वत्स्यापि क्रियायोगेन शुक्लवाससं पश्येति । कार्य्यं यत्र तद्भाव-भावि तत्र तद्गुणत्वमित्यर्थः फलितः । एवं तद्गुणसंविज्ञाने तद्वि-शिष्टस्येतरान्वयः । अन्यत्र तदुपलक्षितस्येत्यपि भेदः । अयं शब्द-शक्तिस्वभावगम्यः ॥ अन्तर्भावः कार्यित्वं कार्य्यसन्निहितत्वं वा । एवं च यत्र संयोगसमवायान्यतरसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्र तद्गुणः । अन्यत्राऽतद्गुण इत्युत्सर्ग इति गोत्वार्थः ॥ ननु प्रकृते न संयोगो नाऽपि समवाय इत्यत आह

इहापीति । (कै)

एवं च समवायेन सम्बन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमि-त्यर्थः ॥ बहुवचनोपपत्तये आह

उद्भूतावयवभेद इति । (कै)

अवयवसंख्याऽऽरोपेण बहुवचनमिति भावः ॥ नन्वेवं समुदाय-स्यैव संज्ञास्यादत आह

तस्य चेति । (कै)

युगपत्प्रयोगाभावात् पृथक् प्रयोगसत्त्वाच्च कार्य्यार्थया संज्ञया तदन्तर्भूतानामेव प्रवर्त्तितव्यमित्यन्वयः । "पृथक् प्रयोगत्वाद्" इति पाठे बहुव्रीहेस्त्वो बोध्यः ॥

सिध्यतीति । (कै)

विनिगमनाविरहादिति भावः ॥ नन्वेवं सर्वशब्दस्य सम्बन्धवि-शेष्यत्वाभावात् कथं तस्य सर्वनामत्वमत आह

यथेति ॥ (कै)

स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया सम्बन्धविशेष्योऽपि । यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः ॥

## अन्यपदार्थत्वाद् (भा)

इति भाष्यस्य अन्यः पदार्थो यस्य तत्त्वादित्यर्थः ॥ ननु सर्वनामशब्दो यदि व्युत्पन्नस्तदा संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भानुपपत्तिर्णो चेत् पूर्वोत्तरपदविभागाभावात् "[1]पूर्वपदाद्" इति णत्वाऽप्राप्तिरत आह

## रात्रेति ॥ (कै)

"[2]सन्तम्" अन्वर्थसंज्ञायाम् ॥ "[3]असन्तम्" शुद्धरूढे रथन्तरादौ ॥

## आश्रित्येति । (कै)

द्वितीयविषये आरोप्येत्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य प्रकृतेऽपीति न वार्त्तिकाऽनुपपत्तिर्नापि णत्वाप्राप्तिरिति भावः । ननु शब्दनित्यताविरोधात् कथमसतो णत्वस्याऽऽपादनमत आह

## प्रयोगे चेति ॥ (कै)

ननु संज्ञा चेत् कृत्रिमा तदा [4]शब्दार्थसम्बन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह

---

१ पूर्वपदात्संज्ञायामगः । ८ । ४ । ३ ॥ २ अत्रैव कैयटे ।
३ कैयटे ॥ ४ शब्दार्थनित्यताहानिः । क ॥

सर्वार्थेति । (कै)

शक्तिनियमनं शक्तिसम्बन्धबोधनमेवेत्याहुः ॥ न च

[1]भ्रूनोऽसंज्ञायाम् (पा)

इति सूत्रे भाष्ये "यदेतत्संज्ञायां विधीयते" । तत्र न संज्ञायां अभिधेयायामित्यर्थः किं तर्हि तत् तत्कार्य्यविशिष्टेन चेत् संज्ञा गम्यते इत्यर्थ इति वक्ष्यते ततश्चात्र कथं णत्वप्राप्तिः । न हि कृतणत्वेन संज्ञावगतिरत एव रघुनाथादि शब्दे न णत्वमिति वाच्यम् । आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव महत्या संज्ञायाः करणे एतत्प्रयोजनमिति वक्ष्यमाणं सङ्गच्छते । अनादिविनियुक्तसंज्ञास्थले तु यथा विनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभावोऽध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः संज्ञात्वभङ्गापत्तेरिति दिक् ॥ सौत्रत्वादित्येव कुतो नोक्तमत आह

लोकेति ॥ (कै)

भाष्यं दर्शयति

सर्वश्चैवेति ॥ (कै)

निपातनं चेति । (कै)

भावाभावयोरेकत्र विरोधादिति भावः ॥

नत्विति । (कै)

प्रयोगभेदेन च भावाभावविरोधपरिहार इति भावः ॥ भाष्ये

---

१ अ ३। पा १। सू १९२ ॥

**किमन्येऽपीति ।** (भा)

अन्ये विषयः किमेवम् एवं जातीया इति वक्ष्यमाणाभिप्रायेण प्रश्नः । आशयानभिज्ञ उत्तरयति ।

**भवन्तीति ।** (भा)

यथा स्थानिवदादेश इत्येतद्विषये स्थानिप्रयुक्तं भवति यथा प्राप्तस्याऽऽदेशप्रयुक्तस्य न निवृत्तिरिति भावः ॥ शङ्कते

**इको यणिति ।** (भा)

अस्य यदि भवन्तीत्यादिः ॥

**ततश्च संहितेति ।** (कै)

स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धेर्निवृत्तिः । सा च संहितायां शाकल्याभावे इति भावः ॥

**प्रस्तीर्य्यन्ते इति ।** (कै)

किन्तु तत्प्रसङ्गे शराः प्रस्तीर्य्यन्त इति शेषः । तथा च स्थानषष्ठीनिर्द्देशे उभयत्रापि तात्पर्य्यमिति भावः ॥

**विकल्प इति ।** (कै)

स्थानषष्ठ्यभावेनोभयत्र तात्पर्य्याभावादिति भावः ॥

**परदेशस्येति ।** (कै)

विकरणविधौ धातोः परस्येत्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य इत्यर्थादिति भावः ॥ ननु धातोः परो विधातव्य इत्यर्थे पूर्वं शनि विहिते पश्चात् शबपि स्यात् तिङ्विकरणवत् "[१]सार्वधातुके" इति विषयसप्तमी स्यादत आह

---

१ अ ३। पा १। ६७ ॥

धात्विति ॥ (कै)

"साहायकम्" । सहायकार्य्यम् ॥ [1]ननु श्नमादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्यानुदात्तत्वं स्याद् न च सति शिष्टस्वरबलीयस्त्वस्य विकरणान्यविषयत्वेनोप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेऽपीति वाच्यं सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह

श्यनश्च शित्करणमिति । (कै)

न च शित्त्वं नियमार्थं स्यात् शिदेव न पिदिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षयाऽतिदेशबाधस्यैवौचित्यात् । अतिदेशबाधश्च तवाप्यावश्यक एव। क्वचित्तु नित्करणमिति पाठः। तद्धिप्रत्ययाद्युदात्तत्वबाधेन [2]"ञ्नित्ति" इत्यनेन निदन्तस्याद्युदात्तत्वाय स्थानिवत्त्वात् पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्यापि अदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति तद्व्यर्थं सत् तज्ज्ञापकमिति भावः । परन्त्वयं पाठः स्थानिवत् सूत्रस्थकैयटविरुद्धः ॥

आदित्यधिकारादेति । (कै)

तुदतीत्यादौ नित्यनुम् व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यकः ॥ [3]"शप्श्यनोरि"ति सूत्रस्थं श्यन् ग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम् ॥ नन्वेवं शपः परः श्नम् स्यादत आह

[4]रुधादिभ्य इति । (पा)

---

१ भाष्ये विहितप्रत्यय इति । शब्रूपप्रत्यय इत्यर्थः । क । ख । ग । इ ॥

२ अ ६ । पा १ । सू १९७ ॥ ३ अ ७ । पा १ । सू ८१ ॥

४ अ ३ । पा १ । सू ७८ ॥

"सार्वधातुके" इति सप्तम्या "रुधादिभ्य" इति पञ्चम्याः षष्ठी कल्पनात् तेषामेवान्त्यादचः परः श्नमिति भावः ॥ तृणह इति निर्देशश्च रुधादीनामागमित्वे लिङ्गम् ॥ नन्वेवं श्नपः श्रवणं स्यादत आह

**यथा चेति ।** (कै)

श्नप इत्यस्य षष्ठीकल्पनसामर्थ्यादिति भावः ॥ भाष्ये

[1]**विहितः प्रत्यय इति ।** (भा)

श्नप्रूपः प्रत्यय इत्यर्थः ॥

**एकार्थत्वादिति ।** (कै)

अज्ञातादेरेकेन द्योतितत्वान्न द्वयोस्समुच्चय इति भावः ॥ [2]येन नाप्राप्तिन्यायेनाऽकजादीनां बाधकत्वे परेणोक्ते सिद्धान्ते तेनैव न्यायेन निपातनानामपि बाधकत्वमेवेत्याह

**निपातनमपीति ॥** (भा)

भाष्ये

**एतदिति ।** (भा)

सततं सन्ततमित्युभयमित्यर्थः ॥

**श्लोकोऽन्यार्थमवश्यमिति ।** (कै)

एकदेशानुमतिद्वारा [3]"सातत्य" इति निर्देशेन स एव श्लोको ज्ञाप्यते इत्यर्थः ॥

---

१ "भाष्ये विहित प्रत्यय इति" इति प्रतीको नास्त्यत्र क + ग + ङ पुस्तके । वस्तुतोऽत्रैवोचितः ॥

२ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति । परिभा ५८॥

३ आख्यातमाख्यातेन क्रियासातत्ये । गण सू-२-१ ३२ ॥

नत्विति।

निपातनेन सततमिति न [1]साध्यते इत्यर्थः॥ नन्वेवं सन्ततात् ष्यञि सान्तत्यम् इत्यपि स्यादत आह

इति चानभिधानादिति। (कै)

अत एव भगवता "सन्ततमिति न सिध्यति" इत्येवोक्तं न तु सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यतीत्युक्तम्॥

पुराणशब्देनेति। (कै)

[2]"पुराणप्रोक्तेषु" इत्यत्र निपातितेनेत्यर्थः॥

[3]पृषोदरादीति। (कै)

---

१ "न" इति नास्ति क पुस्तके॥

२ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु। ४। ३। १०५॥

३ पृषोदरादित्वादिति। क। ग। ङ। पृषोदरादीनि यथोपदिष्टम् (६। ३। १०९) पृषोदरादीनीत्युच्यन्ते कानि पृषोदरादीनि। पृषोदरप्रकाराणि। कानि पुनः पृषोदरप्रकाराणि। येषु लोपागमवर्णप्रकाराः श्रूयन्ते न चोच्यन्ते। अथ यथेति किमिदम्। प्रकारवचने थाल (५। ३। २३) अथ किमिदमुपदिष्टानीति। उच्चरितानि। कुत एतत्। दिशिरुच्चारणक्रियः। उच्चार्य हि वर्णानाहोपदिष्टा इमे वर्णा इति। कैः पुनरुपदिष्टाः। शिष्टैः। के पुनः शिष्टाः। वैयाकरणाः। कुत एतत्। शास्त्रपूर्विका हि शिष्टिः वैयाकरणाश्च शास्त्रज्ञाः। यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रं तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्प्यन्ते। एवं तर्हि निवासत आचारतश्च। स आचार आर्यावर्त्त एव। कः पुनरार्य्यावर्त्तः। प्रागादर्शात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारगास्तत्र भवन्तः शिष्टाः॥

एवं च तेनैवोभयोरपि साधुत्वं न तु निपातनेनेति भावः ॥

## च्विप्रत्ययेति । (कै)

गणपठितेभ्यः संज्ञोपसर्जनानां भेदात् संज्ञाया अप्राप्तौ प्रतिषेधानर्थक्यमिति शङ्काव्युदासाय भाष्ये च्विरूपाक्ष इति भावः । तत्तत्पदत्वारोपवत् तत्तदर्थे उपसर्जनत्वमप्यारोपितमिति चेदुपपत्तिरिति तात्पर्य्यम् ॥

## पदकार्य्येष्विति । (कै)

न च संज्ञा तथेति भावः ॥ इदमेव वार्त्तिकं तस्य न्यायस्य पदकार्य्यविषयत्वे लिङ्गमिति तात्पर्य्यम् । अत एव "अभिव्यक्तपदार्थाये" इति न्यायस्याप्यत्राप्रवृत्तिरिति बोध्यम् । अत्र न गुणयोगेन लाक्षणिकत्वरूपं गौणमत आह

## प्रसिद्धीति । (कै)

तन्मूलं प्रसिद्धत्वादिकमत्रापि तुल्यमित्यर्थः ॥

## समासेति । (कै)

अनेन क्रमेणैताः संज्ञा एकसंज्ञाधिकारे कार्य्या इति वक्ष्यति आकडारसूत्रे तदनपेक्ष्यायं संज्ञाप्रतिषेध इत्यर्थः ॥

## एकद्रव्योपनिवेशिनीति । (कै)

लौकिकसंज्ञालक्षणम् । एतेन सर्वनामादिसंज्ञास्वनेकविषयास्विदमव्याप्तमिति परास्तम् ॥ नन्वतिसर्वस्य गणे पाठाभावात् संज्ञासूत्रे विशेष्यासन्निधानेन तदन्तविधेरभावाच्च कथमत्र प्राप्तिरत आह

## प्रयोजनमिति। (कै)

शब्दस्वरूपं विशेष्यमादाय तदन्तविधिरिति भावः॥ एतत्तदन्तविधिफलत्वेन "परमस" इत्यस्योपन्यासः क्वचिद्दृश्यते स चिन्त्यः। "[१]त्यदादीनाम" इत्यादावङ्गविशेषणत्वमूलकतदन्तविधिना सिद्धत्वात्। तस्मिँभावे तु विहितविशेषणमिति बोध्यम्॥

## यथेति। (कै)

यथा तत् सूत्रं निघातविधायकं वाक्यभेदेन पाठविशेषणं च तथेहापीत्यर्थः॥ यदि "अविशेषेण" इत्यस्य सर्वकार्य्यार्थमित्यर्थस्तर्हि "नेत्याह विशेषेण च" इत्युत्तरग्रन्थासङ्गतिरत आह

## किं यत् सर्वेषामिति। (कै)

यद्यपि स्यायाद्यपि न सर्वेषां कार्य्यम् उभभवदादावसम्भवात्। तथाप्यन्तर्गणानाश्रयणेन विधीयमानं कार्य्यमिति तदर्थो बोध्यः॥

## न सन्निवेशेति।

न सामान्यविशेषसन्निवेशापेक्षमित्यर्थः॥

## अविशेषेणेति। (कै)

संज्ञोपसर्जनयोरपीत्यर्थः॥

## न गणेति। (कै)

न गणपठितत्वाकारेणेत्यर्थः॥ भाष्ये

## सर्वादीनाम्। (भा)

तदन्तर्भूतानां त्यदादिप्रभृतीनाम्॥

---

१ अ ७। पा २। सू १०२॥

आनन्तर्येण । (भा)

आनन्तर्योपलक्षितत्यदादीनामित्यादिरूपेणेत्यर्थः ॥

किं प्रयोजनमिति । (भा)

क्व प्रयोजनमित्यर्थः ॥

असंज्ञायामिति । (भा)

योगविभागो गणसूत्रे नाष्टाध्यायीस्थे तस्य जसि विभाषाविधायकत्वादिति बोध्यम् ॥ "स्वमज्ञाति" इत्यादावपीदमनुवर्त्तत इति न दोषः ॥

सर्वादीनीत्येवं यानीति । (भा)

सर्वादीनि शब्दरूपाणि इत्येवं सर्वविश्वेत्यादिक्रमेण यानि पञ्चविंशदनुक्रान्तानि तानीत्यर्थः ॥

प्रत्याख्यायते इति । (भा)

स्त्रीप्रत्ययप्रकरणस्थमपि सूत्रं तत्रानुपयुज्यमानं कार्य्यान्तरार्थं परिभाषारूपं ज्ञातव्यमिति भावः ॥

नन्विति । (कै)

अन्यथा समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् गृह्यमाणादेव प्रातिपदिकात् स्यात् । प्रत्ययग्रहणे च प्रत्ययग्रहणपरिभाषया प्रत्ययान्तादेव स्यान्न तु तदन्तादिति भावः ॥ अनेन चोत्तरत्र तदन्तविधौ ज्ञापिते उपसर्ज्जने निषेधात् प्रधान एव स फलवानिति प्रधानेनेत्युक्तम् ॥

## कौम्भकारेय इति। (कै)

अणन्तत्वेन कारशब्दादेवङीपि कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव स्त्रीभ्यो ढकि तस्यैव ढकयङ्गत्वाद्वृद्धिः स्याद् न कुम्भस्येति भावः॥ तदन्तविधौ तु समुदायात् ङीपि तत एव ढकि समुदायस्याङ्गत्वात् कुम्भशब्दे वृद्धिः सिध्यति॥ ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्तदन्तविध्यभावेऽपि कौम्भकारेयः सिद्धोऽत आह

## न चेति। (कै)

कृत एव ग्रहणे सा न तु कृदकृद्ग्रहणे इति भावः॥

## नैतदस्तीति। (कै)

न च कदाचित् कारीशब्दादपि स्यात्। कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येनान्वयाभावात्॥ नन्वेवं कुम्भकारीत्यत्र ङीबेव न स्यात्। कुम्भेनैकार्थीभूतस्याणन्तस्य केवलस्य स्त्रीत्वेनायोगात्। अत एव सूत्रारम्भेन कदाचिदपि कारशब्दाद् ङीप्। यस्य च विशिष्टस्य स्त्रीत्वेन योगो न तदणन्तमिति चेन्न। [1]अमहत्पूर्व्वग्रहणेन तदन्तग्रहणज्ञापनात्। न चैवं बहुकुरुचरेत्यादावतिप्रसङ्गवारणायायं निषेधोऽपि सार्थक इति वाच्यम्। [2]"टिड्ढाणञ्" इत्यादौ उपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनादोषात्। पूर्व-

---

१ शूद्राचामहत्पूर्वा। वा। इत्यत्रामहत्पूर्वग्रहणेन। अजाद्यतष्टाप्। ४। १। ४। एतत् सूत्रस्य वार्त्तिकम्॥

२ अ ४। पा १। सू १५॥

चोपात्तं तदन्तं च स्त्रीलेन विशेष्यते उत्तरच चोपात्तमेवेत्यच व्याख्यानमेव शरणमिति वदन्ति ॥

परे तु "प्रत्याख्यायते" इत्यस्य वार्त्तिककृतेति शेषः । अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधादिति हि तच वार्त्तिकं तद्गीत्यास्य तेन सिद्धिरित्याशयः । अनुपसर्जनादिति किमर्थं बहुकुरुचरा तदन्तविधिना प्राप्नोति । अत उत्तरं पठति । अनुपसर्जनग्रहणमनर्थकमिति तच भाष्यकृदवतारणेनाचत्यभाष्येण च तस्य वार्त्तिककृत्सिद्धान्तत्वप्रतीतेः । यत्तु तदुत्तरं वचनद्वयं ज्ञापकन्तु पूर्वच तदन्तताप्रतिषेधस्यातिधीवरी । पूर्वसूचनिर्द्देशो वाऽऽपिशलाब्राह्मणीति तत्त्वाचार्य्यदेशीयस्य । तचाद्यस्य पूर्वच तदन्तता प्रतिषेधेऽपि उत्तरच तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्यानुपपादनात्तदुक्तित्वम् । अन्यं तु स्त्रियामित्यस्याविशेषणत्वात् स्त्रियां योऽविहित इत्यादिना भाष्य एव दूषितम् । तेनाद्यस्यैव वार्त्तिककृत्सिद्धान्तत्वं बोधितम् । इदं तर्हि प्रयोजनम् । प्रधानेन तदन्तविध्यर्थमिति तु तच भाष्यकृता स्वयं सूचप्रयोजनमुक्तमिति न विरोधः । अयं हि तच भाष्याशयः । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽपि कदाचित् कारीशब्दादपि स्यादिति पचे कुम्भकारेय इत्यस्यापत्तिः । यदुक्तं कुम्भेनेत्यादि तत्तुच्छम् । निष्कृष्यापत्येनैकार्थीभावाभावेऽपि समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् सामर्थ्याचतेः । विशिष्टसम्बन्ध्यपत्ये विशेष्यसम्बन्धस्याव्याहतेश्च । अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि । अत एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्

प्रत्यये परमगार्ग्यायण इति "[1]येनविधिरि"ति सूत्रे भाष्ये उदाहृतमिति तत्रैव निरूपयिष्यामः । न च तदन्तविधावपि व्यपदेशिवद्भावेन केवलादपि ङीब् दुर्वारः । अनुपसर्जनादित्येतत् सामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेः । मुख्यव्यपदेशिनोऽभावे एव तदतिदेशप्रवृत्तेश्च । न च स्त्रीप्रत्ययेषु तदादिनियमाभावेन कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वानपायात्तस्मादपि कदाचिद् ढक् स्यादेवेति वाच्यम् । यतः प्रत्ययग्रहण इति नियमेनाधिकस्यैव व्यावृत्तिर्न न्यूनस्य । अस्यापत्यमिः । एरपत्यमित्यर्थे "[2]यञिञोश्च' इति फकोऽनापत्तेः । एवं च तन्निषेधेनानेन तस्यैव संग्रहो नत्वतद्भावत्र्यस्य न्यूनस्य । अयमधिकारोऽप्यत्रार्थे ज्ञापक इत्याहुः ॥

एकपदत्वे उद्देश्यविधेयभावानुपपत्तेराह

**सुपाम् इति ॥** (पा)

**अ अ अदिति** (भा)

अत्र अ इति लुप्तपंचम्यन्तन्तदाह

**अकारादिति ॥** (कै)

"अकारान्तादिति" भाष्ये अन्तग्रहणं तु फलितार्थपरं यथाकथञ्चिद् न त्वत्र तदन्तविधिरिति भ्रमितव्यम् । विशेष्यासन्निधानात् । प्रायेण भाष्येऽपि "अकाराद् अकारात् कारौ" इत्येव पाठः ॥ शेषेलोपस्यान्त्यलोपत्वपक्षे विधानोत्तरमकारात् परत्वसम्भवादाह

**विधीयत इति ॥** (कै)

---

१ अ १ । पा १ । सू ७२ ॥ २ अ ४ । पा १ । सू १०१ ॥

तदुक्तं भाष्ये

शिष्यमाणाविति॥ (भा)

अपरिहृतमेवेति। (कै)

एवं चैतदपरितोषाद्भाष्ये पक्षान्तरमिति भाव इति केचित्॥ परे तु इदं समाधानं सर्वाद्यानन्तर्य्यकार्य्यार्थमप्रतिषेधो वक्तव्य इत्यस्यैवार्थस्य डतरादिविषये तस्य प्रधानेऽपि तदन्तेऽप्रवृत्तिरिति विशेषं बोधयंस्तद्दारकयुक्त्यैवोपसर्जनेऽपि व्यावृत्तिरित्येवं रीत्या तत् फलकलाभावमुपसर्जनप्रतिषेधस्य बोधयितुमेकदेश्युपक्षान्तरमाह

अथवेति। (भा)

अन्यं समाधानं इयं तु साधारणमित्याहुः॥ "स्वार्थद्वारेण" इत्यादेर्विवरणं "तदर्थगतेत्यादि"॥

गृह्यमाणविभक्तेरिति (भा)

सम्बन्धसामान्ये षष्ठी तेन विभक्तौ विधीयमानत्वद्वाद्यत्वस्यापि संग्रह इति भावः॥ "[१]षड्भ्य" इति षष्ठ्यर्थे पञ्चमीति मन्वानः शङ्कते

यद्येवमिति।

"कनः"। [२]"सङ्ख्यायाः संज्ञासङ्घ" इत्यनेन विहितस्य॥

कणीति। (कै)

कनि कृते कन्नन्त एव सङ्ख्यावाची न प्रकृतिः स च ...ावेऽव-इति षट्त्वाभावात् ततः परस्य जसो न लुगित्यर्थः॥ "षड्भ्य" ...

---

१ अ ७। पा १। सू २२॥

२ सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु। ५। १। ५८॥

पञ्चम्येव षड्भ्यः परयोः प्रत्यासत्त्या षडर्थगतसङ्ख्याभिधायिनोर्लुगित्यर्थ इति भावः ॥ "युष्मद्" इत्यादिसिध्यतीत्यन्तग्रन्थोऽत्र पुनरुक्तः । अनुपदमग्रे वक्ष्यमाणत्वात् ॥ परे तु "गृह्यमाणविभक्तेरि" त्यस्य गृह्यमाणाद्विहितविभक्तेरित्येवार्थः । अदड्विषयमेतत् । कतरान्तस्यानभिधानमभिप्रेत्य तत्रादडभाव एवेष्ट इत्यभिप्रेत्य वा । तुल्यन्यायात् "षड्भ्य" इत्यत्रापि विहितविशेषणमेवेति तत्राति प्रसङ्गं शङ्कते । "[1]यद्येवमिति" । परमपञ्चेत्यादेर्लोके गणनायां व्यवहाराभावेन षट्त्वाभाव इति लुगप्राप्तिरिति प्रश्नः । सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव गणनायाम्प्रसिद्धानामेव[2] सङ्ख्यावाचिनां ग्रहणमित्यत्र न मानमित्युत्तरम् । पञ्चम्यन्तस्य त्वदुक्तसम्बन्धेन विभक्त्यन्वयो दुरुपपादः । आवृत्तौ मानाभावश्च । [3]"षट् प्रधान" इत्यस्य त्वदभिमतषडर्थप्रधानोऽतः समुदायोऽपि [4]षट्संज्ञक इत्यर्थः ॥ षष्ठ्यन्तस्थलेऽपि विहितत्वसम्बन्धेनान्वयः[5] इत्याशयेनाशङ्कते

## इह तर्हीति ॥ (भा)

वैषम्यमुपपादयन् स्वाशयमाह । "इह तावद्" इत्यादिनेति भाष्यार्थमाहुः ॥

## शकटेति । (कै)

नात्

ष न स्वाङ्गमिति भावः ॥

पाठः ॥

---

वादो ...चैव कैयटे ॥ २ प्रसिद्धानामेवेह । क ॥

...ट्प्रधान एष समासः । भा ॥

...समुदायोऽपि षट् संज्ञ इत्यर्थः । क । इ ॥

... इत्याशयेन शङ्कते । क । इ ॥

**अङ्गार्थेति ।** (कै)

प्रकृतशब्देनाङ्गम् ॥ एतच्चापीति वक्तव्ये तच्छब्दनिर्देशाद्व्यवहित-परामर्शोऽपि नाऽव्यवहितस्य चेत्याह

**गृह्यमाणेत्यादि ॥** (कै)

**अर्थद्वारकमिति ।** (कै)

डतरादिभ्यो विहितो योऽर्थस्तत्प्रतिपादकस्तमोरित्यर्थः। तदर्थ-कप्रत्ययविधानेऽर्थस्यापि विधानमस्तीत्यभिमानः ॥ "[1]डतरादिभ्य" इत्यस्य षष्ठ्यर्थत्वे तु भिन्नविभक्तित्वादिति भाष्यविरोधः ॥ परे तु विधानस्य सर्वथानाश्रयणेनार्थद्वारकं विधानमाश्रयितव्यमिति स्वग्र-न्थविरोधस्तस्माद् विहितविशेषणमिति यथाश्रुतमेव भाष्यम् परम-कतरद् इत्यत्राद्डादेशे न भाष्यान्तरं मानमस्ति । प्रकृतभाष्यं तु विपरीतन्तदभावबोधकमेवेति प्रामाणिकाः ॥ त्यदादिप्रकृतिक-विभक्तावित्यर्थं मत्वा शङ्कते

**यद्येवमिति ॥** (भा)

उक्ताशयेनाह

**त्यदादिप्रधान इति ।** (भा)

[2]"अङ्गस्य" इति सूत्रे "[3]अतो भिस ऐस्" इत्यादौ "[4]विविभ-

---

१ अद्ड्डतरादिभ्यः पञ्चभ्यः । ७ । १ । २५ ॥

२ अ ६ । पा ४ । सू १ ॥ ३ अ ७ । पा १ । सू ९ ॥

४ अनुच्यमाने ह्यतो भिस ऐस्भवतीत्यत इति पञ्चम्यङ्गस्येति स्थान षष्ठी तत्राशक्यं * विविभक्तित्वादत इति पञ्चम्याङ्गं विशेषयितुम् । भा-६ । ४ । १ ॥

---

* विभक्तित्वात् । इति पाठोप्यस्ति ॥

क्तित्वात्" असम्बन्धमात्रस्याङ्गनिमित्तं यो भिन्न इति सम्बन्धं वक्ष्यति। तेन न्यायेनात्रापि सम्बन्धसम्भवादियमेकदेशयुक्तिस्तस्माल्लक्ष्यानुसारात् "षड्भ्यो" "डतरादिभ्य" इति सूत्रद्वये विहितविशेषणं भाष्यसम्मतं तस्यार्थस्य लक्ष्यविरोधेन भाष्यकृता दूषणाकरणादित्याहुः॥ भाष्ये अकारविषयेऽपि समाधानं वक्तुमाह

इहेति॥ (भा)

इहतावदिति। (भा)

लक्ष्यानुसारस्तु तत्र तत्र तथा तथा व्याख्याने बीजम्। "अङ्गस्य" "विभक्तौ" इत्यादेश्चाङ्गार्थगतार्थप्रतिपादकविभक्तावित्याद्यर्थः। षष्ठ्यन्तत्वेन तथान्वयस्य सूपपादत्वादिति भावः॥

नञ् समासेऽपीति। (कै)

[1]उत्तरपदार्थप्रधानत्वादिति भावः॥ "अतिकतरद्" इत्युक्तरीत्या चिन्त्यमेव। अत्रापि पक्षे अतिसर्वायेत्यादौ दोष एव

---

१ वैयाकरणमते नञ्समासस्योत्तरपदार्थप्राधान्यमेव। नञ्सूत्रे भाष्यकारेण तथैव सिद्धान्तितत्वात्। तथाहि। आरोपितत्वं नञर्थः। तथाच मायामनुष्यमायामृगयाजनिशाकरकपटब्राह्मणादिशब्देभ्य इव आरोपितो मिथ्याभूतोऽयं ब्राह्मण इत्येवं शाब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं न तु शाब्दोऽयमर्थः। अत एव एतत्तदोरिति सूत्रेऽनञ् समास इति सार्थकम्॥ नञ् (२। २। ६) इति सूत्रे अब्राह्मणपदव्याख्यानावसरे ब्राह्मणलक्षणमाह

तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जाति ब्राह्मण एव सः॥

परमसर्वत इत्यादिसिद्धये तदन्तस्यापि सर्वनामत्वावश्यकत्वेन सर्वनाम्नो विहितस्य ङे. स्मै इत्यर्थेऽपि स्मैभावस्य दुर्वारत्वात्। अतोऽप्येकदेशुक्तिरिदं पचद्वयमतः सर्वसाधारणं समाधिमाह भाष्ये

**अथ वा नेदमिति।** (भा)

"[1]द्वन्द्वे च" इत्यादिभिश्च सर्वादित्वस्यैव निषेधस्तत् प्रयुक्तकार्य्याभावे पर्य्यवस्यति। एवं विकल्पोऽपीत्यभिमानः॥ ननु सर्वार्थवाचकत्वं न पूर्वादिशब्दानामित्यसङ्गतमेतदत आह

**स्वविषयेति।** (कै)

लोकनिरूढ़प्रवृत्तिनिमित्तेन या अभिधेया व्यक्तयस्ताः स्वविषयः॥ ननु सर्वादिगणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्य्यायत्वादृथायं व्याख्यानक्लेशोऽत आह

**न त्विति॥** (कै)

नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद् घटायेत्यादौ स्मैभावाद्यापत्तिरिति चेन्न। तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धानेकजातीयार्थबोधकानामेव सर्वनामपदेन ग्रहणात्। एतदेव ध्वनयितुं "सर्वेषां नामानीति" बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये॥ [2]भाष्ये

**संज्ञोपसर्जने चेति।** (भा)

संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नाम उपसर्जनमपि पदान्तरार्थ-

१ अ १। पा १। सू ३१॥ २ "भाष्ये" इति नास्ति क पुस्तके॥

संसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकं नाम पदस्यार्थेन तथैव लाभादित्यर्थः ॥ [१]उपसर्जनांशे "विशेषे" इत्यस्य विशेषणे इत्यर्थः ॥ भाष्ये "एतेषां चापीति" दूषणान्तरम् ॥ "एतेषां चापि"। घटादिशब्दानामपि ॥ "एकैकस्य"। तस्य तस्यापि ॥ "स स विषयः"। सर्वाद्यर्थो विषयः ॥ "तस्मिंस्तस्मिन् विषये"। सर्वाद्यर्थरूपे विषये ॥ "यो यः शब्दः"। घटादिशब्दो वर्त्तते ॥ "तस्य तस्य"। घटादिशब्दस्य सर्वाद्यर्थे वर्त्तमानस्येत्यक्षरार्थः ॥ तद्व्याचष्टे।

## ततश्चेति।

पदैः पदार्थानभिधायाऽऽकाङ्क्षादिमूलकशक्तिवशात् संसृष्टवाक्यार्थप्रतीतिर्जन्यत इत्यभिहितान्वयवादे शङ्कते

## नन्विति। (कै)

गुणद्रव्यादिसमुदायात्मके वस्तुनि प्रतिनियता ये भागाः प्रवृत्तिनिमित्ताख्यास्तदभिनिवेशित्वात्तद्वाचकत्वाच्छब्दानामित्यर्थः ॥ योग्येतरान्विते पदानां शक्तेः स्वार्थवत्पदान्तरार्थोऽपि स्ववाच्य इत्यन्विताभिधानमाश्रित्य परिहरति

## तत्रेति ॥ (कै)

"अवग्रहः"। क्रोडीकारः ॥ "न प्रतिपद्यते"। निश्चिततयेति शेषः ॥

## रूपसादृश्यादिति। (कै)

ओदनव्यतिरिक्तार्थान्वययोग्यसर्वशब्दरूपस्य तुल्यत्वादित्यर्थः ॥

---

१ उपसर्जनांशे इत्यारभ्य "इत्यर्थ" इत्यन्तं नास्ति क पुस्तके ॥

"तत्प्रतिपत्त्यर्थम्" । निर्द्धारितविशेषप्रतिपत्त्यर्थम् ॥ [१]अपरे तु पदे पदैकदेशप्रयोगवत् यदा सर्वस्मिन्नोदने इति वाक्ये प्रयोक्तव्ये ओदने इति वाक्यैकदेशः प्रयुज्यते प्रकरणाच्च तत एव पदात्तादृशवाक्यार्थबोधस्तत्र दोष इति भाष्याशयः ॥ यथा च पदशक्तिग्रहकाले पदैकदेशस्यापि तत्र शक्तिग्रह इति पस्पशायां कैयटेनोक्तम् ॥ तथा वैयाकरणमते विशेषणविशेष्यभावे वाक्यस्य शक्त्यङ्गीकारेण तत्र तत्तत्पदार्थालिङ्गिते समुदितस्य शक्तिग्रहकालेऽवयवभूतैकैकपदस्यापि तत्र शक्तिग्रहेणैकैकपदादपि तादृशविशिष्टार्थबोध इति "[२]इग्यणः" इति सूत्रे भाष्ये ध्वनितम्। आकाङ्क्षावादान्ते च मञ्जूषायां निरूपितमित्याहुः ॥

अतिप्रसङ्ग उद्भावित इति । (कै)

न च "[३]सर्वनाम्नः स्मै" इत्यादौ "सर्वादेः स्मै" इत्याद्येव सूत्राणि सन्त्विति न कत्स्मादिषु दोषः । अपाणिनीयत्वापत्तेः । भाष्ये "एवं तर्ह्युभयमिति" ॥

सहेति । (कै)

एकैकस्योद्देश्यत्वविधेयत्वसत्त्वात्साहित्यविवक्षाऽभाव इत्यर्थः ॥ अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिहतन्त्रम् ॥ अनोच्चारणं तन्त्रेण बोध्यबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह

आवृत्तिर्वेति । (कै)

आवृत्तिस्तेत्यर्थः ॥

---

१ परे तु । क ॥ २ अ १ । पा १ । सू ४५ ॥
३ अ ७ । पा १ । सू १४ ॥

**प्रत्याख्यातमिति । (कै)**

लौकिकप्रयोगाकुलत्वेन निराकृतमित्यर्थः ॥

**प्रसिद्धप्रवृत्तिनिमित्तेति । (कै)**

तच्च सर्वशब्दस्य यावत्त्वम् । इदमुपलक्षणम् । अनेकार्थसाधारणशक्तिग्रहसहकारेण स्वविषयाणां सर्वेषामर्थानां प्राधान्येन बोधकत्वं सर्वनामत्वमित्यस्यार्थस्य ॥

**स्वरूपमात्रोपकारीति । (कै)**

स्वरूपमात्रप्रवृत्तिनिमित्तक इत्यर्थः ॥

**अतिक्रान्तार्थविशेषणतामिति । (कै)**

एवं च प्राधान्येन न सर्वार्थोपस्थापकत्वमिति भावः । अजहत्स्वार्थत्वे तु सर्वोपस्थापकत्वमेव नेति बोध्यम् ॥ भाष्ये

**अथ वा महतीति । (भा)**

अयं भावः । अनेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थितिजनकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासंज्ञया तादृशसर्वादीनामेव गणेऽनुकरणम् । तत्र संज्ञायास्तत्त्वाभावः स्पष्ट एव । उपसर्जनस्यापि न प्राधान्येन तदुपस्थापकत्वम् । नामपदद्वारत्वेन तथैव लाभात् । उपसर्जनं हि इतरविशेषणतयैव स्वार्थोपस्थापकम् । सर्वादीनि तदन्तानि च सर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीत्यर्थः सूत्रस्य । तदन्ते च तत्प्रधानसमासे अवयवीयतादृशशक्तिसहकारेण स्वविषयसर्वबोधकत्वं विशेष्यतयाऽस्त्येवेति दिक् ॥

## ततोऽपि लघीयो नामेति। (कै)

संज्ञेत्यर्थः। तन्नाम संज्ञा यतोऽन्यल्लघुतरं नास्तीत्यन्वयो भाष्ये। यद्वा "संज्ञा च नाम" इति पर्य्यायप्रदर्शनम्। तच्च यतो नान्यल्लघीयस्तत्। एवं च संज्ञायां सर्वतः शब्दव्यवहाराल्लघीयस्त्वं सिद्धम्॥ "लघ्वर्थम्" इत्यस्य लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थः॥ नन्वर्थसंज्ञात्वं नाम योगरूढत्वं तत्र योगार्थस्य रूढ्यर्थेणैवान्वयनियमात् पृथग् उद्देश्येनानन्वयात् कथं सर्वार्थवाचकानामेव संज्ञेत्यत आह

## अनुमीयत इति॥ (कै)

## नूनमेतानीति। (कै)

गणपठितानीत्यर्थः॥ भाष्ये

## अथोभस्येति। (भा)

उभयत इत्यादेरुभयशब्दपाठेनैव सिद्धेरिति भावः॥

## [१]द्विवचनविषयत्वाद् (भा)

इति भाष्यस्य द्विवचनसत्त्वे एवोभशब्दः साधुरित्यर्थः। द्विवचनासत्ता च वृत्तिविषय एवेत्याशयेन कैयटेन "वृत्तिविषये" इत्युक्तम्॥

## क इदानीमिति। (भा)

अस्योभशब्दस्यार्थप्रतिपादकः कः शब्दोऽन्यत्र तसिलादिविषये

१ "द्विवचनविषयत्वादिति भाष्यस्य" इत्यारभ्य "द्विवचनाभावे भवतीत्यर्थः" इत्यन्तं नास्ति क + ग + ङ पुस्तके॥

द्विवचनाभावे भवतीत्यर्थः॥ ननु टावन्ते [1]"सर्वनाम्नः स्याड्" इत्याद्यन्यसर्वनामकार्य्यसम्भवोऽस्त्येवेत्यत आह

## टाब् विषयत्वमपीति । (कै)

"अन्याऽभाव" इत्यत्र [2]हेतुत्वेनोपपादानादिति भावः । एवं [3]चोभशब्दः केवलद्विवचनविषयष्टाप्सहितद्विवचनविषयो वेत्यर्थः इति टाब्ग्रहणमनुवादमात्रं नापूर्वमिति तात्पर्य्यम् ॥ द्विवचन टाब् विषयत्वे उपपत्तिमाह

## तथेति । (कै)

"[4]द्वित्रिभ्यामि"ति सूत्रस्थवेत्यस्यास्वरितत्वादेवाऽननुवृत्तौ तयप् स्थानिकत्वेनाऽयचस्तद्विकल्पेनैव वाक्यसिद्धौ फलाभावेन महाविभाषाया अप्यसम्बन्धसिद्धौ प्रत्ययान्तरत्वपक्षे तन्निवृत्तौ दोषाच्च नित्यग्रहणं योगविभागेन स्वार्थिकाऽनादेशभूतायच् प्रत्ययान्तरविधायकमिति भावः । अत्र च नित्यशब्दस्य वाच्यार्थविरोधाद्विकल्पाऽननुवृत्तिः । अयमप्याद्युदात्त एव । प्रत्ययसम्बन्धोदात्तग्रहणानुवृत्तेः ॥

## वृत्तिविषये इति । (कै)

अत एव [5]"उभौ साभ्यासस्य" इति निर्द्देशः सङ्गच्छते । इदं च सूत्रं योगविभागस्येष्टसिद्ध्यर्थत्वाद् उभाविति निर्द्देशाच्च "उभयो-

---

१ अ ७ । पा ३ । सू ११४ ॥ २ हेतुत्वेनोपादानात् । क । ग । ङ ॥

३ एवं चोभयशब्दः । क । ङ । ग ॥

४ द्वित्रिभ्यां तयस्यायज्वा । ५ । २ । ४३ ॥

५ अ ८ । पा ४ । सू २१ ॥

ऽन्यत्रे"ति वार्त्तिकाच्च द्विवचनाश्रवणं यत्र तत्रैव प्रवर्त्तते नान्यत्र तेन नाति प्रसङ्गः ॥[1]

## उभयोऽन्यत्रेति । (भा)

[2]द्विवचनविषयत्वाऽभावसम्भावनायामिति भावः । लुग्विषये लुकाविषयस्यैवापहाराज्ञ दोषः । सम्भावनानिवेशाच्चो[3]भशब्दस्य पाठाभावेऽप्युभयत इत्यादिसिद्धिः । अन्यथा उभशब्दात्तसिलादेः कर्त्तुमशक्यतया द्विवचनस्य लुगभावे तद्विषयस्यैव सत्त्वेनायजनापत्त्यावुभयत इत्याद्यसिद्धिः । मम तु यद्यत्र[4] तसिलादिः स्यात् तर्हि लुगपि स्यादिति सम्भावनया विषयाभाव सम्भावनाऽस्त्येवेति न दोषः । इदमेव ध्वनयितुं विषयपदमुपात्तम् । [5]"उभयोऽन्यत्रे"ति वार्त्तिके उभयशब्देन स्वार्थिकाऽयजन्तस्यावयवार्थकायजन्तस्य च ग्रहणमिति भावः ॥

## रूपे इति । (कै)

नन्वकचि उभशब्देन तद्विशिष्टस्य ग्रहणादु[6]भकाववयवौ यस्येत्यर्थे उभकयो मणिरिति प्रयोगः सिद्ध्यति के तु नेति फले विशेषः स्पष्टः । एवमज्ञातोभयोर्घट इत्यर्थेऽकचि[7] उभकयघट इति

---

१ "द्विवचनविषयत्वादिति भाष्यस्य" इत्यारभ्य "द्विवचनाभावे भवतीत्यर्थः" इत्यन्तमत्राधिक्ति । क । ग । इ पुस्तके ॥
२ द्विवचनत्वाभावसम्भावनायामिति भावः । क ॥
३ चोभस्य पाठाभावे । क । चोभयस्य पाठाभावे । इ ॥
४ तसिलादि स्यात् । क । ग । इ ॥ ५ उभयो इति । क । ग । इ ॥
६ उभयकाववयवौ । क । ग ॥
७ उभयघट इति रूपम् । क । उभकघट इति रूपम् । ग । इ ॥

रूपम् । के अयचि उभयकघट इति स्यादितिरूपे विशेषः स्पष्ट एवेति चेन्न । भाष्यप्रामाण्येनाऽनभिधानात् । अत एव हरिणा "उभयोऽन्यत्रेति वार्त्तिकमूलभूतम् [१]उभयशब्दस्य द्विवचनं टाप् च लोपश्च यस्येति व्याकरणान्तरसूत्रमुदाहृतम् । तन्मते ह्येषां प्रयोगाणामभावः स्पष्ट एवेति बोध्यम्" ॥

## स्वरे चेति । (कै)

चित्स्वरप्रत्ययस्वराभ्यामुभयत्रापि अन्तोदात्तत्वस्यैव सिद्धेरिति भावः ॥ [२]"उभकाभ्याम्" इत्यादिः "वचनाद्" इत्यन्तोग्रन्थः प्रक्षिप्तः । पुनरग्रे दर्शनात् ॥

## श्रूयमाण इति । (कै)

विषयशब्दलभ्योऽयमर्थः । श्रूयमाणत्वं च [३]साक्षाद् भावरूपादेशद्वारा वेत्यन्यत् ॥

## [४]व्यवधानादिति । (कै)

द्विवचनविषयत्वस्याव्यवहितस्यैव निवेशादित्यर्थः ॥ [५]उभघटाविल्यादौ व्यवहितद्विवचनपरस्य साधुत्ववारणाय

## क विषये इति । (कै)

---

१ उभयस्य द्विवचनं टाप् लोपश्च । क । उभयस्य । ग । इ ॥

२ अत्रैव कैयटेऽस्ति ॥

३ साक्षाद् भावरूपादौ । इ । "आदेशद्वारावेत्यन्यत्" इति नास्ति इ पुस्तके ॥

४ "व्यवधानादिति" इत्यारभ्य "उभघटाविल्यादौ" इत्यन्तं नास्ति इ पुस्तके ॥ ५ उभयघटौ । क । ग ॥

एवं चैतद्वचनाकरणलाघवार्थमुभशब्दपाठ इति भावः ॥ भाष्ये

**एवमप्यपीति।** (भा)

टापा व्यवधानादिति भावः ॥

**अन्तरेणापीति।** (भा)

दीर्घे तद्विशिष्टस्यान्तवद्भावेनोभशब्दत्वमिति भावः ॥ आवन्ता-देकवचनाद्यापत्तिस्तुनेत्याह

**स्वार्थिकत्वादिति।** (कै)

एवं च तत एकवचनादौ द्विवचनविषयत्वं कथमिति न वक्त-व्यमिति भावः ॥ "किं वक्तव्यमेतद्" इत्यादिः "अन्तादिवद्भावेन" इत्यन्तोऽपाठः। "अवचनादपि" इत्यस्य वक्तव्यत्वाभावेन "किं वक्तव्यम्" इति प्रश्नासङ्गतेः। तथा भ्रममूलको वा प्रश्न इति बोध्यम् ॥

**द्व्यर्थेति।** (कै)

कृत्रिमाऽकृत्रिमन्यायस्य तु नेह प्रवृत्तिस्तस्येह[१] शास्त्रेऽनाश्रयणस्य संख्यासंज्ञासूत्रे[२] भाष्ये उक्तेः। अस्य लोकसिद्धव्यवस्थाबोधकत्वेन तत्र न्यायाप्रवृत्तेश्चेति भावः ॥ ननूभकाविति वद् उभत इत्याद्यपि प्रसज्येतेत्यत आह

**उभयत इत्यादि।** (कै)

तयोरव्ययत्वेन विभक्त्यन्तीयस्वार्थिकत्वेन चाधिकरणापादानश-क्तिविशिष्टबोधजनकत्वात्। द्विवचनत्वं च संख्याप्रकारकसंख्येयवि-

---

१ तस्या इह। क। ग। इ॥ २ भाष्योक्तेः। क॥

शेष्यकबोधजनकत्वम् ॥ "[1]अभेदविषयः" । वृत्तिविषयः ॥ उक्तमर्थं प्रश्नपूर्वं व्युत्पादयति । भाष्ये

**कथं स्वार्थिका इति ।** (भा)

यतः स्वार्थिकाः प्रकृतितोऽविशिष्टा अन्यार्थविशेष्यकबोधजनका अतः प्रकृतिर्गृह्यतेऽनेनेति प्रकृतिग्रहणं तेन प्रकृतिभूतोभशब्दग्राह-केण द्विवचनशब्देन तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमित्यर्थः । तेनोभयत इत्यादेर्व्यावृत्तिः । "प्रकृतिग्रहणे"-त्यनेन कृत्रिमाऽकृत्रिमन्यायाप्रवृत्तिर्ध्वनिता । द्विवचनं च टाप्सा-हचर्य्यात्प्रत्यय एव गृह्यते । एतदर्थमेव टाब्ग्रहणं तेनो[2]भयोरु-भावित्यत्र समासे भवत्येवायमित्याहुः ॥

**एवं प्रत्याख्यात इति ।** (कै)

किं चाकज्मात्रार्थत्वे उभाव्ययसर्वनाम्नामकजित्येव पाठेन सिद्धे संज्ञाप्रयोजके गणे पाठो व्यर्थः । साहचर्य्याच्च संज्ञादिव्यावृत्तिरिति बोध्यम् ॥

**इदं त्विति ।** (कै)

भाष्ये "आदि" पदसंग्राह्यमित्यर्थः ॥

**भावतायनिरिति ।** (कै)

सति पाठे "[3]त्यदादीनि च" इति वृद्धत्वे "[4]उदीचां वृद्धाद्" इति फिञ् ॥

---

१ उभयत उभयत्रेति तसिलोरव्ययत्वाद्द्वित्वाऽभिधानसामर्थ्यं नास्तीत्य-भेदविषय उभयशब्द एव प्रयुज्यते नतूभशब्दः ॥

२ तेनोभयोरुभावुभयोभावित्यत्र । क । ग ॥

३ अ १ । पा १ । सू ७४ ॥ ४ अ ४ । पा १ । सू १५७ ॥

[1]भवद्र्यङिति । (कै)

"[2]विष्वग्देवयोश्च टेः" इति चेन सर्वनाम्नोऽनुकर्षणादद्र्यादेशः ॥

भवन्मय इति । (कै)

"[3]नित्यं वृद्धेति" मयट् ॥ "भवन्मित्रे" बहुव्रीहौ सर्वनामसंख्ययोरिति पूर्वनिपातः ॥

[4]भवतष्ठगिति । (पा)

शत्रन्तनिवृत्तये वृद्धग्रहणं तत्राऽनुवर्त्तते इत्यर्थः ॥

गुणवचनेति । (कै)

एकसंज्ञाधिकारे सकलप्रातिपदिकविषयगुणवचनसंज्ञाऽतः परा सर्वनामसंज्ञेति भावः ॥

---

# विभाषा दिक्समासे बहुव्रीहौ ।१।१।२८॥

एकस्मिन्निति । (कै)

सर्वत्र परत्वात् प्रतिषेधे विकल्पवैयर्थ्यं सर्वत्र वा विकल्पे भावाभावयोस्तेनैव सिद्धत्वात् प्रतिषेधानर्थक्यमिति तयोरेकविषयत्वासम्भव इति भावः ॥ भाष्ये

दिगुपदिष्टे इति । (भा)

---

१ भवद्युङ् इति । क । इ । ग ॥ २ अ ६ । पा ३ । सू ९२ ॥
३ अ ४ । पा ३ । सू १४४ ॥ ४ अ ४ । पा २ । सू ११५ ॥

दिक् शब्दोच्चारणेन विहित इत्यर्थः। बहुव्रीहाविति शेषः॥ व्याप्यधर्मातिदेशे व्यापकधर्मस्याप्यतिदेशात्समासोऽप्ययमत आह

## मुख्य इति॥ (कै)

## दक्षिणदक्षिणस्यै इति। (भा)

"[1]आबाधे चे"ति द्विर्वचन बहुव्रीहिवद्भावौ॥

## नावयवानामिति। (कै)

"[2]न बहुव्रीहौ" इति वद् द्वन्द्वे चिकीर्षिते नेत्यर्थो न। यद्यपि द्वन्द्वेऽपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तं प्रति बहुव्रीहेरिव द्वन्द्वस्य गुणत्वेन तदप्राप्तेरयमेवोचितस्तथापि त्यदादीनां द्वन्द्वाभावेनादन्ते काकचोरविशेषेण फलाभावात्। अन्यपर्यायत्वच्छब्दस्य सर्वनामत्वे न मानम्। बहुसम्मतत्वात्। गणे तत् पाठस्य "[3]विभाषा जसि" इत्यस्याऽसङ्गतेश्चेति भावः। एवं चेदं सूत्रमुपसर्जनप्रतिषेधानुवादकमेव सूत्रकृता तदनुभ्युपगमाद्वा कृतं तत्। अत एव कुक्कुटमयूर्यावित्यादावुपसर्जनह्रस्ववारणाय "[4]द्वन्द्वे ने"ति वचनमारब्धं "[5]गोस्त्रियोः" इति सूत्रे भाष्ये इति बोध्यम्॥

## पुँल्वद्भाव इति। (कै)

इदं चिन्त्यम्। मात्रग्रहणेन सिद्धेः॥ ननु यथा बहुव्रीहौ

---

१ अ ८। पा १। सू १०। पीड़ायां दोत्यायां द्वे स्तो बहुव्रीहिवच्च॥

२ अ १। पा १। सू २९॥ ३ अ १। पा १। सू ३२॥

४ द्वन्द्वे च (वा) द्वन्द्वे च प्रतिषेधो वक्तव्यः। कुक्कुटमयूर्यौ। गोस्त्रियोरुपसर्जनस्य (१। २। ४८) एतत् सूत्रस्यवार्त्तिकं तद्भाष्यं च॥

५ अ १। पा २। सू ४८॥

(विभाषा दिक्‌समासे बहुव्रीहौ। १। १। २८।) (अ. १। पा. १। आ. ६)
द्वन्द्वे चेत्यप्राप्तावपीयं प्रवर्त्तते तथा द्वन्द्वे "न बहुव्रीहौ" इत्यप्राप्तावपीति किमुच्यते नचाप्राप्ते इतीत्यत आह

**अयमप्यर्थ इति। (कै)**

एवं च "नचाप्राप्ते" इत्यस्य भाष्ये "बहुव्रीहावित्यादिः" ॥ "द्वन्द्वे च" इत्यस्य तु द्वन्द्वे इत्यादिः ॥ एवं च बहुव्रीहौ सर्वत्र निषेधप्राप्तिर्द्वन्द्वे तु "द्वन्द्वे च" इतस्य न सर्वत्र प्राप्तिर्जसिविभाषया बाधादिति भावः ॥

**सर्वः स्वविषय इति। (कै)**

सर्वा दिग् बहुव्रीहिरित्यर्थः ॥

**न व्याप्त इति। (कै)**

सर्वा दिग् द्वन्द्व इति शेषः ॥ युक्त्यन्तरमप्याह

**यदि चेति ॥ (कै)**

भाष्ये

**या पूर्वा सोत्तरेति। (भा)**

यद्यपि वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते। [1]या पूर्वत्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरा यस्येत्यर्थात्। एवं चोत्तराशब्दस्य पूर्वनिपातः प्राप्नोति तथापि समासे तदप्रतीत्या [2]पूर्वपदस्य ज्ञानविशेष्यपर्य्यन्तलक्षकत्वेन गुणवाचकत्वाद् विशेषणत्वेन पूर्वनिपात इति बोध्यम् ॥

---

१ या पूर्वात्वप्रकारकज्ञानविशेष्या। क। ग ॥
२ पूर्वा पदस्य। क। ग। इ ॥

## [1]तत्र हि दिक्शब्दोऽस्तीति । (कै)

न च शेषग्रहणेनानेकग्रहणेन वा सिद्धे उभयोपादानेन पुनर्विधानद्वारा सर्वत्र विशेषविहितत्वात् सोऽपि प्रतिपदोक्तः । स्पष्टं चेदम् "[2]आन्महत" इत्यत्र भाष्ये इति वाच्यम् । पूर्वशब्द उत्तरशब्दः समस्यते इत्येवं विधानकल्पनेऽपि दिक्शब्दः समस्यत इत्येवं विधानकल्पने मानाभावेन तत्र दिक् शब्दाभावादिति भावः ॥ भाष्ये

## अवयवभूतस्याऽपीति । (भा)

प्रधानन्यायेनास्य न स्यात् । अस्य [3]समूहत्वं प्रति गुणत्वादिति भावः ॥ तदेतदवयवपदेन सूचितम् । समूहावयवत्वादन्यपदार्थस्येति बोध्यम् ॥ वसनशब्दो गृहवाचीति नैकशेषः । अन्तरशब्दस्य सर्वनामत्वेऽपि परनिपातो [4]राजदन्तादित्वाद्बोध्यः ॥

---

१ व्यालेयटाइनमुद्रापितविवरणपुस्तके (तत्र दिक् शब्दोऽस्तीति) इति पाठोऽस्ति । वस्तुतः "हि" शब्दघटित एव पाठोचितः । बहुषु पुस्तकेषु तथा दृष्टत्वात् ॥

२ शेषवचनात्तु योऽसौ प्रत्यारम्भात् कृतो बहुव्रीहिः ।
तस्मात् सिद्ध्यति तस्मिन् प्रधानतो वा यतो वृत्तिः ॥ ४ ॥
यस्मात् "शेषो बहुव्रीहिः" ( २ । २ । २३ ) इति सिद्धे "अनेकमन्यपदार्थे" ( २ । २ । २४ ) इत्याह तेन प्रतिपदं भवति । आन्महतः समानाधिकरणजातीययोः ( ६ । ३ । ४६ ) इत्यत्र भगवता महाभाष्यकारेणोक्तम् ॥

३ अस्य समूहं । क । ग । ङ ॥

४ अ २ । पा २ । सू ३१ ॥

तन्मते नेति । (कै)

किं चावयवयोः सर्वनामत्वेऽपि द्वन्द्वस्य तत्त्वाभावेन सर्वनाम्नोऽविहितत्वाज्जसो न दोष इत्येकदेश्युक्तिरिदं भाष्यम् ॥

---

# न बहुव्रीहौ । १ । १ । २६ ॥

---

नियमः कथमिति । (कै)

संख्याया अपि तेन पूर्वनिपातविधानादिति भावः ॥

प्राप्ते इति । (कै)

"[1]सप्तमीविशेषणे" इत्यनेन ॥ न चैवं वार्त्तिके संख्याग्रहणं व्यर्थं विशेषणत्वादेव तस्य पूर्वनिपातप्राप्तेरिति वाच्यम् । परिच्छेदकत्वरूपविशेषणताया अन्यत्रापि सम्भवात् ॥ भाष्ये वृत्तिकारोक्तं सूत्रार्थमाह

न खल्वपीति । (भा)

अस्यार्थस्य यथा लाभस्तथा वक्ष्यते । वहिरङ्गत्वव्युत्पादनाय "पदान्तरेत्यादि" ॥ "वर्त्तिपदार्थविशेषणेति" बहुव्रीहिः ॥

बहुव्रीहिणेति । (कै)

ततो वहिरङ्गबहुव्रीहिनिमित्तकेन निषेधेनेति शेषः ॥

सामान्येनेति । (कै)

न लुग्विषयमेवेति भावः । उत्तरपदग्रहणं चात्र ज्ञापकम् ।

---

१ अ २ । पा २ । सू ३५ ॥

अन्तर्वर्त्तिसुपा प्रत्ययपरत्वेनैव सिद्धेरित्यादि सप्तमे निरूपयिष्यामः॥ "गोमत्प्रियः" [1]इत्यत्र लुका "[2]हल्ङ्यादि" लोपो बाध्यते। तेन नुम्दीर्घौ नेति भावः॥ भाष्ये

**ननु चेहापीति।** (भा)

वैयधिकरण्येन सम्बन्धाश्रयणसामर्थ्यादन्तरङ्गस्यापि निवृत्तिरित्यर्थः॥ प्रथमार्थे सप्तम्याश्रयणेन सामानाधिकरण्येनैव सम्बन्धो न तु विषयत्वध्याहारेणेत्याशयेनाह

**अस्त्यन्यदिति॥** (भा)

**अथ हीति।** (कै)

बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्य्यस्यायादिप्राप्तेरिति भावः॥ तत्राऽवयवनिषेधसामर्थ्यादन्तरङ्गस्यापि बाध इति तत् तात्पर्यम्॥ ननु एतत्प्रकरणस्थसप्तमीनिर्दिष्टाः प्रथमार्था अत एव "[3]द्वन्द्वे चेति" निषेधः समुदायस्यैव। एवं च वाच्यवृत्त्याऽसर्वाद्यन्तस्य निषेधो न लभ्यत इत्यत आह भाष्ये

**अयं खल्वपीति।** (भा)

एतेन "बहुव्रीहौ" इत्यत्र चिकीर्षिते इत्यध्याहारेण सिद्धे बहुव्रीहिपदस्य लक्षणाव्यर्थेति परास्तं तद्व्याचष्टे

**सूचेति।** (कै)

भाष्ये "ऐकपद्यम्" एकार्थीभावः। एककारकशक्तियोगो वा

---

१ इत्यादौ। क॥ २ अ ६। पा १। सू ६८॥
३ अ १। पा १। सू ३१॥

एकविभक्तिकत्वं बोध्यम् । तादर्थ्यात्ताच्छब्द्यं पदयो लभते तस्येदं ग्रहणमित्यन्वयः ॥ "[1]तद्यच तादर्थ्याद्" इति पाठः क्वचित् । तत्र बहुव्रीह्यर्थवाक्ये संज्ञाया अप्राप्त्या तत्स्थपदपर्य्यन्तं लक्षणा बोध्या । तदेतत् बहुव्रीह्यर्थानि पदानीत्यनेन सूचितम् ॥ ननु वाक्ये निषेधश्चेद्द्वकं पितेति प्रयोगो न स्यात् । किं च सुपरत्वाभावात्वाद्यौ न स्यातामत आह

**अप्रयोगेति ॥** (कै)

तदेतद्वृत्तिकारोक्तं दूषयति

**[2]अकच्स्वरौ त्विति ।** (भा)

एषा स्मृतिरविशेषात् सर्वप्रकरणविषया ॥

**सूत्रप्रत्याख्यानेति ।** (कै)

समुदाये निषेधस्य महासंज्ञया उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः । एवं च महासंज्ञासिद्धार्थानुवादकं प्रपंचार्थं सूत्रमिति सूत्रकृतो हृदयम् ॥

**यथोत्तरमिति ।** (कै)

उत्तरोत्तरस्य बहुलक्ष्यदर्शितत्वात् । स्पष्टं चेदं "[3]धिन्विकृण्व्योः"

१ "तद्यच तादर्थ्याद्" इति पाठ एल्फिन्स्टोन् विद्यालयस्थहस्तलिखितभाष्यपुस्तके दृश्यते ॥

२ *गोनर्दीय आह । अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ । त्वकत्पितृकः मकत्पितृक इत्येव भवितव्यम् ॥

३ अ ३ । पा १ । सू ८० ॥

* गोनर्दीयस्त्वाह । बहुषु पुस्तकेषु एवम्विधपाठोऽस्ति ॥

इति सूत्रे भाष्ये ॥ एतेन सूत्र सार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रवलमित्यपास्तम् ॥ "ष्णिङ्" इति सर्वनामस्वरोदाहरणं विश्वप्रियायेति ॥ भाष्ये

भूतपूर्वस्येति । (भा)

भूतपूर्वार्थकपूर्वाद्यन्तस्य समासस्येत्यर्थः ॥

प्राधान्येनेति । (कै)

प्रयोगकालरूपस्यावधेर्झटिति बोधेन व्यवस्थासत्त्वेऽपि पूर्वार्थस्योपसर्जनत्वान्न भवतीति भावः ॥

---

# तृतीयासमासे । १ । १ । ३० ॥

अयमपि समुदायनिषेध एव । सर्वाद्यन्ततृतीयासमासः सर्वनाम नेत्यर्थः ॥

प्रयोगार्हस्येति । (कै)

मासेन पूर्वाय देहीति भाष्योदाहरणादिति भावः ॥ भाष्ये "तादर्थ्यात्" इति च लोकदृष्ट्योक्तम् । लोके हि तस्मादेव वाक्यात्तां वृत्तिं निष्पन्नां मन्यते ॥ नन्वेवं सति समुदायस्य निषेधो न लभ्यतेऽत आह

वाक्यभेदेन चेति ।

आवृत्त्येति भावः ॥ भाष्ये

अथवेति ॥ (भा)

[1]**योगाङ्गमिति।** (भा)

योगरूपमङ्गमष्टाध्याय्या इत्यर्थः॥

**तृतीयासमासे सर्वादीनीति।** (भा)

तृतीयासमासरूपाणि सर्वाद्यन्तानीत्यर्थः। अन्यथा पूर्वशब्दस्य निषेधेऽपि समासस्य तदनिषेधादुदाहरणे स्मै स्यात्। अवयवस्य तत्त्वेऽपि ततो विभक्तेरविहितत्वान्न दोषः। सप्तम्युच्चारणं तु सूत्रानुरोधादिति बोध्यम्॥

**तृतीयायाः सर्वादीनीति।** (भा)

तृतीयान्तात् पराणीत्यर्थः॥ तद्बीजं दर्शयति

**पर्य्युदासेति।** (कै)

भाष्ये पंचम्युपादानात् पूर्वपदभूते नाऽस्य प्रवृत्तिः॥

**सदृशस्येति।** (कै)

प्रयोगार्हत्वेन समाससमानपदार्थकत्वेन च सादृश्यम्॥

**प्रतिपदोक्त इति।** (कै)

तेन मासेन कृताय पूर्वस्मै इत्यत्र तदर्थके मासपूर्वस्मै इत्यत्र च न दोषः॥ अत एव भाष्ये प्रथमोपस्थितानन्यान् सर्वादीन् विहाय पूर्व एवोदाहृत इति बोध्यम्॥

———

१ "योगाङ्गम्" इति प्रतीको नास्ति क + ग पुस्तके॥

# विभाषा जसि । १ । १ । ३२ ॥

इकारेणेति । (कै)

तद्रूपस्य सर्वनामकार्य्यस्याऽभावादिति भावः ॥ सूत्रे "जसि" इति च लुप्तषष्ठीकं लुप्तद्वितीयान्तं वा ॥

अन्ये त्विति । (कै)

जसीत्यस्य च जस् घटिते सर्वनामकार्य्यविधायकसूत्रे द्वन्द्वे विभाषेति संज्ञाविकल्पायोपतिष्ठते इत्यर्थ इत्यभिमानः ॥ भाष्ये

[१]अकज्भि न भवति (भा)

इत्यस्य समुदायनिष्ठकुत्साबोधकोऽकज् न भवतीत्यर्थः। कृताऽकचा समासस्तु भवत्येव तत्र सर्वाद्यन्तत्वादनेन विकल्पो भवत्येव समुदायस्य कुत्साविवक्षायां केनायं विकल्पः। द्वन्द्वस्य सर्वाद्यन्तत्वाभावादिति बोध्यम् ॥

# पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।१।१।३४॥

भाष्ये

पुनः सूत्रपाठे इति । (भा)

गणपाठोत्तरकालिके सूत्रपाठे इत्यर्थः ॥ ननु पूर्वादीनि सर्वे-

१ अकज् न भवति । क । उपलब्धभाष्यपुस्तके "अकज्भि न भवति" इति पाठोऽस्ति ।

त्येतावत्युक्ते गणस्थग्रहणेन प्राप्तविभाषात्वेऽभावतात्पर्य्यकत्वेन गौरवादर्थान्तरे एवाप्राप्तविभाषास्यादत आह

तेषामेवाचेति ॥ (कै)

नन्वेवमर्थविशेषलाभो न स्यादत आह

गणे एवेति ॥ (कै)

प्रकारार्थ इति । (कै)

वस्तुतः लघ्वचरत्वादजाद्यदन्तत्वाच्च सूत्रेऽवरशब्दस्यैव पूर्वनिपात उचित इत्याशयेन "अवरादीनाम्" इत्युक्तिर्वार्त्तिककृत इति बोध्यम् ॥ ननु सर्वादीनीति व्यवहाराद् गणपाठस्य पूर्वतानिश्चीयतेऽत आह

आदिशब्द इति ॥ (कै)

ननु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात् तदेव कुत इत्यत आह

तत्र वेदे इति ॥ (कै)

प्रकारेति । (कै)

सर्वनामकार्य्यवत्त्वमेव सादृश्यमिति भावः ॥

छान्दसः प्रयोग इति । (कै)

एवं च सर्वादीनीति व्यवहारादेव गणपाठस्य पूर्वत्वनिश्चय इति भावः ॥ अत्र वदन्ति "तानि पूर्वादीनि" इत्यनेनैव गणपाठस्य पूर्वत्वे सिद्धे "इमान्यवरादीनीति" व्यर्थम् । अस्य हि पूर्वादीनीत्यर्थः कैयटाल्लभ्यते । नचाऽयं सूत्रपाठस्य पुनः पाठत्वे

साधकः । किं च इमान्यपि पूर्वादीनीति शङ्काऽप्यनुपपन्ना त्वदुक्त-रीत्या हेतोरभिधानात् । एवं च हेत्वभिधानमन्तरेणेत्यपि चिन्त्यमेव । तस्मादत्र आदिशब्द आश्रयवाची भीष्मादिश्च सुयोधन इतिवत् । तानि गणपठितानि पूर्वकालाश्रयाणि । इमान्यष्टाध्यायीपठितानि अवरकालाश्रयाणीत्यर्थः । एवं च तत्तत्कालकृतत्वात् पूर्वादिव्यवहार इति भावः ॥ तत्र मानाभावमूलकं शङ्कते ।

**इमान्यपि ।** (भा)

अष्टाध्यायीपठितान्यपि ॥

**पूर्वादीनि ।** (भा)

पूर्वकालाश्रयाणीत्यर्थः । अत्राऽपिरेवार्थेऽन्यथोभयोः परस्परापेक्षया पूर्वकालत्वासम्भवेनाऽपिरनर्थक एव स्यात् । सर्वादीनीत्यादौ सर्वत्रादि शब्दः प्रकार एव तत्तत्कार्य्यवत्त्वेन च सादृश्यम् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः । ध्वनितं चेदं "[1]कस्येद्" इति सूत्रे भाष्ये इति ॥

**[2]नवैवेति** (भा)

भाष्ये । अष्टाध्याय्यां "पूर्व"त्यादि त्रिसूत्री पठितानीत्यर्थः अष्टाध्याय्याः पूर्वकालत्वे "पूर्वादीनी"ति सूत्रेऽष्टाध्यायीसूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः ॥

---

१ अ ४ । पा २ । सू २५ ॥

२ "नचैवेति" पाठो बहुषु विवरणपुस्तकेषु दृश्यते । तत्त्वशुद्धम् । भाष्येऽदर्शनात् ॥

## प्रतिनियतेति । (कै)

पूर्वादिसप्तकस्यैव व्यवस्थायामित्यादि स्वशब्दस्यैवाज्ञातीत्यादि अन्तरशब्दस्यैव वहिर्योगेत्यादि विशेषणाभिधानायेत्यर्थः । अष्टाध्यायीपाठेन यथा ञ्यादिपर्युदासाभावस्तथा दर्शयति

## तत्र पुनरिति । (कै)

पुनः संज्ञाविधानेन पुनः कार्य्यविधानद्वारा ञ्यादि पर्य्युदासोवाध्यत इत्यर्थः ॥

## इति पुनर्विधानेनेति । (कै)

एतत् संज्ञाकल्पितेन द्वितीया पुनर्विधानेनेत्यर्थः ॥ नन्वेवं जसि विकल्पो न स्यादत आह

## वाक्यभेदेन चेति । (कै)

"विभाषा जसि" इत्यनुवृत्त्येत्यर्थः ॥

## [1]जस् भावादिति चेदुत्तरचेति । (वा)

"ढोढे लोप" इति सूत्रे वार्त्तिकमिदम् । [2]एभिश्च सूत्रवार्त्तिकप्रयोगैस्त्यदादितः पूर्वमेव गणे पूर्वादिपाठ इति बोध्यते इति भावः ॥

## पाठविशेषणे प्रमाणाभावादिति । (कै)

व्याख्यानातिरिक्तप्रमाणाभावादिति भावः ॥ तथा व्याख्याने बाधकमाह

---

१ जश् भावादिति चेदुत्तरत्र ढस्याभावादपवादप्रसङ्गः (वा) "ढोढे लोपः" ( ८ । ३ । १३ ) एतत् सूत्रस्यवार्त्तिकम् ॥

२ एतैश्च । क । ग । ङ ॥

उक्तानुवादेति । (कै)

भावांशे इत्यर्थः । अभावतात्पर्य्यकत्वेन गौरवं दोष इत्यपि बोध्यम् ॥ नन्वप्राप्तविभाषात्ववारणायार्थमात्रनिर्देशः क्रियतां किं प्रतिपदपाठेनेत्यत आह

प्रतिपदेति ॥ (कै)

असङ्करेणेति । (कै)

सप्तस्वेव व्यवस्थासम्बन्धः स्वेऽज्ञातिधनयोरन्तरे वहिर्योगादेरित्येवं रूप इत्यर्थः । एवमप्याद्यसूत्रे पूर्वादीनि व्यवस्थायामसंज्ञायामित्येव कुतो न सूचितम् । सप्तानामेव व्यवस्थायां वृत्तेरिति चिन्त्यम् ॥

## स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ ॥

आत्मीयत्वमेवाहेति । (कै)

आत्मीयत्वेनैव ततः प्रतीतिर्न तु धनत्वादिनेत्यर्थः । ईदृशविशेषलाभार्थमेवाख्याग्रहणम् । तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युत्तरम् ॥

[१]प्रतिषेध इति । (कै)

अज्ञातीत्यादिप्रतिषेध इत्यर्थः ॥

न तु ज्ञातिधनयोरिति । (कै)

ज्ञातित्वधनत्वयोरित्यर्थः ॥

---

१ प्रतिषेध इति शेष इति । क । ग । इ ॥

# अन्तरं वहिर्योगोपसंव्यानयोः ।१।१।३६॥

भिन्नार्थ इति । (कै)

नानार्थ इत्यर्थः ॥

ततः सर्वथेति । (कै)

कर्मणि द्वितीयव्याख्यानेन करणे आद्यव्याख्यानेनेति बोध्यम् ॥ नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह

समाने इति । (कै)

पदद्वयमपि सप्तम्यन्तम् ॥ भाष्ये

किमुत्तरीयं किमन्तरीयम् (भा)

इत्येतन्न ज्ञायते इत्यन्वयः ॥

तृतीयचतुर्थयोरिति । (कै)

शरीरसंयुक्तयोरित्यर्थः । भाष्यस्य त्वयं भावः । वहिर्योग इति स्मर्य्यते । तेन परम्परया वाह्यसम्बद्धस्याऽपि सिद्धिरिति ॥ ननु असि विकल्पविधायकसूत्रस्यवार्त्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह

गणेति । (कै)

पूश्शब्दस्य विशेष्यत्वे इत्यर्थः ॥ [1]तच्च स्त्रियामेव तदाह

इह त्विति ॥ (कै)

---

१ स च स्त्रियामेव । क । ग । ङ ॥

# १ स्वरादिनिपातमव्ययम् ।१।१।३७॥

## क्रियाप्रधानमिति । (कै)

क्रियायामेव विशेषणमित्यर्थः । यथा हिरुगादि । एतच्चोत्तरसूत्रे कैयटे स्पष्टम् ॥

## किंचिदिति । (कै)

यथोच्चैरादि ॥

---

चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा । "यथा लोधं नयन्ति पशु-मन्यमाना" इत्यत्र सम्यगर्थस्य पशुशब्दस्य न तु सत्त्ववाचिनां यथा "पशुं स्तांश्चक्रे वायव्यान्" इत्यादौ स्वरादीनां तु सत्त्ववचनानामव्ययसंज्ञोच्यते । स्वस्ति वाचयति । स्वः पश्येति यथा । स्वर् इति स्वर्गपरलोकयोः । स्वर्गे । "छायेव या स्वर्जलधेर्जलेषु" । परलोके । "स्वर्यातस्य ह्यपुत्रस्य" ॥ अन्तर् इति मध्ये । "अन्तर्वाप्यचिरमनुचरः" ॥ प्रातर् इति प्रत्यूषे । "प्रातः संध्यामुपासीत्" ॥ पुनर् इति चाद्युदात्तोऽप्रथमे विशेषे च । अप्रथमे । "पुनरुक्तम्" । विशेषे । "किं पुनर्ब्राह्मणाः पुण्याः" ॥ सनुतर् इति अन्तर्धाने । "सनुतश्चोरो गच्छति" ॥ उच्चैस् इति महति ॥ नीचैस् इति अल्पे ॥ शनैरिति क्रियामान्द्ये ॥ ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये ॥ ऋते वर्जने ॥ युगपदित्येककाले ॥ आराद् दूरसमीपयोः ॥ पृथग् इति भिन्ने ॥ एते नवान्तोदात्ता इति काशिका । "शनैश्चिदन्तो अद्रिवः" "ऋधग् इत्था समर्त्य" इत्यत्र तु "शनै ऋधक्" शब्दौ आद्युदात्तौ प्रयुज्येते ॥ ह्यस् इति अतीतेऽह्नि ॥ श्वोऽनागतेऽह्नि ॥ दिवेति दिवसे ॥ रात्रौ इति निशि ॥ सायमिति निशामुखे ॥ चिरमिति बहुकाले ॥ मनागिति

**अनेकशक्तीति ।** (कै)

[1]स्वस्तिष्ठति स्वरागत इत्यादावित्यर्थः । अनेककारकशक्तियोग एव च सत्त्वमिति भावः ॥ भाष्ये

**[2]सत्त्ववचनानामसत्त्ववचनानां च** (भा)

इत्यस्याऽव्ययसंज्ञेष्यत इति शेषः ॥

**लोहितेति ।** (कै)

"अव्ययीभावश्चे"ति स्वरादिषु पठ्यत इति मते इदम् ॥ न ह्यसत्त्ववाचिभावात्स्वादिषु पाठाभावाच्च कथं निपातत्वमत आह

**[3]प्राग्रीति ॥** (पा)

१ स्वस्तिष्ठ स्व आगत । क । ग । ङ ॥

२ सत्त्ववचनानां च । क । ग । ङ ॥ ३ अ १ । पा ४ । सू ५६ ॥

ईषदर्थे ॥ ईषदित्यल्पे ॥ जोषमिति सुखमौनयोः ॥ तुष्णीमिति मौने ॥ बहिस् अवस् इत्येतौ बाह्ये ॥ समयेति समीपे मध्ये च ॥ निकषा इत्यन्तिके ॥ "विलङ्घ्य लङ्कां निकषा हनिष्यति" ॥ स्वयम् इति आत्मना इत्यर्थे ॥ "स्वयं कृतम्" ॥ वृथेति व्यर्थे ॥ नक्तमिति रात्रौ ॥ नञ् इति निषेधे ( नञः स्वरादिष्वप्रामाणिकः पाठः ) ॥ हेतौ इति निमित्तार्थे ॥ इद्धेति प्राकाश्ये ॥ अद्धेति स्फुटावधारणयोः ॥ तत्त्वातिशययोरित्येके ॥ सामि इत्यर्द्धजुगुप्सितयोः ॥ एते स्वस् प्रभृतयः साम्यन्ता द्वाविंशतिरन्तोदात्ता इति काशिका । "दिवा चित्तमः कृण्वन्ति" "वृथा कृणत्यर्थिभिः" ॥ "नक्तं ददृशे कुहचिद्देवेषु" इत्यादौ तु आद्युदात्ताः प्रयुज्यन्ते ॥ सना इति नित्ये । "सना तात इन्द्रः" "सनातनः" । सनत् इदमपि नित्ये । "सनत्कुमारः" ॥ तिरस् इत्यन्तर्द्धौतिर्यगर्थे च । "तिरोहितः" "तिरः काष्ठं कुरु" । परिभूते तु सञ्ज्ञया "तिर-

[1]किमोऽद् इति । (पा)

"तद्धितश्च" इति सूत्रमपि तत्संज्ञाविधायकमेव भवति । एतत् प्रयोजनसत्त्वादेव केवलानामपि तेषां संज्ञास्यादिति भावः ॥
भाष्ये

एवं तर्ह्यव्ययेति । (भा)

प्राग्रीश्वराद्व्ययं स्वरादीनि चादयोऽसत्त्वे इति पाठ्यमित्यर्थः ॥

तदा चादीनामिति । (कै)

यदि तु "चादयः" । "असत्त्वे" इति योगविभागेनासत्त्वे इति पाठविशेषणं क्रियते तदा नायं दोषः । तस्माद्भाष्योक्त एव दोषः । न च तत्र प्रादीनामिति वाच्यम् । [2]ऊर्य्यादीनामसंग्रहापत्तेः । एवं "[3]निपाता आद्युदात्ता" इत्यादावपि दोषो बोध्यः ॥

---

१ अ ५ । पा ३ । सू १२ ॥ २ अ १ । पा ४ । सू ६१ ॥
३ निपाता आद्युदात्ताः ( फिट् सूत्रम् । ८० ) ॥

---

स्तृतोरिरिति यथा ॥ सना इत्यादयस्तिरोन्ता आद्युदात्ता इति काशिका । "सनाच होता नव्यश्च सत्सि" "तिरः पुरूचिदश्विने" त्यादौ तु अन्तोदात्तं प्रयुज्यते ॥ अन्तरा इत्यन्तोदात्तो मध्ये विनार्थे च । "त्वां मां चान्तरा कमण्डलुः" "त्वामन्तरा तामरसायताक्षि" ॥ अन्तरेणेति वर्जने ॥ ज्योगिति कालभूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च ॥ कम् इति वारिमूर्द्धनिन्दासुखेषु । वारिणि, "कञ्जं पद्मम्" । मूर्द्धनि । "कञ्जाः कचाः" । निन्दायाम् । "कन्दर्पः" । सुखे । "कंयुः" ॥ शम् इति सुखे । शंकायः ॥ सहसा इति आकस्मिकाविमर्शयोः । "दिवः प्रसूनं सहसा पपात" । "सहसा विदधीत न क्रियाम्" ।

# तद्धितश्चासर्वविभक्तिः। १। १ ३८॥

**यद्यपि केवलस्येति।** (कै)

एवं च केवलतद्धितात्कस्या अपि विभक्तेरभावेनासर्वविभक्तिरिति विशेषणमव्यावर्त्तकमिति भावः॥

**वाचनिक इति।** (कै)

शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः॥ किं च केवलानां संज्ञायां प्रयोजनाभावः प्रयोजकाभावश्च। अन्वर्थसंज्ञाश्रयोऽर्थो हि तत्प्रयोजक इति बोध्यम्॥ वार्त्तिकोत्थानाय सूत्रार्थं दर्शयति

**तत्र वृत्तिकारेणेति॥** (कै)

**सर्वा विभक्तिरिति।** (कै)

सर्वावयविकेत्यर्थः॥

---

स्वधेति पितृदाने॥ अलम् इति भूषणपर्य्याप्तिशक्तिवारणनिषेधेषु॥ भूषणे। "अलङ्कारः"। पर्य्याप्तौ। "अलमस्य धनम्" बह्वित्यर्थः॥ शक्तौ, अलं मल्लो मल्लाय। शक्त इत्यर्थः। वारणे। अलमति प्रसङ्गेन। निषेधे। "आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत्" न वक्तव्यमित्यर्थः॥ वषट् इति हविर्दाने॥ विनेति वर्जने॥ नानेत्यनेकविनार्थयोः। "नानाभूतं देहभूतां समाजम्"। "नानारीतिर्निष्फला लोकयात्रा"॥ स्वस्तीति मङ्गले॥ अन्यद् इत्यन्यार्थे। "देवदत्त आख्यातोऽन्यत्र यज्ञदत्त इति"॥ अस्तीति सत्तायाम्। अस्ति परलोक इति मतिरस्यास्तिकः॥ उपांशु इति अप्रकाशोच्चारणरहस्ययोः। क्षमा

**प्रतिनियतेति । (कै)**

एवं च विशेषतः कस्या अपि निमित्तत्वेनाऽनाश्रयणात्सर्वविभक्तिनिमित्तकोऽयमिति भावः ॥ ननु सुबन्तात्तद्धितोत्पत्तेरविभक्तिनिमित्तस्तद्धितोऽप्रसिद्धोऽत आह

**अश्रूयमाणेति ॥ (कै)**

**तन्निमित्तस्येति (कै)**

बहुव्रीहिः ॥ ननूत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह

**क्रमव्यतिक्रम इति । (कै)**

प्रथमातिक्रमे कारणाभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः ॥

**अविशेषेणेति । (कै)**

द्व्येकयोरित्याद्येकवाक्यतामनपेक्ष्येत्यर्थः ॥

---

इति क्षान्तौ ॥ क्षमा करोतु भवान् ॥ विहायसेति वियदर्थे । विहायसारम्यमितो विभाति ॥ दोषेति रात्रौ ॥ मृषामिथ्येत्येतौ वितथे ॥ मुधेति व्यर्थे ॥ पुरा इति अविरते चिरातीते भविष्यदासन्ने च । "पुराधीते" । अविरतमपाठीदित्यर्थः । "पुरि लुङ् च" इति लट् । चिरातीते । "पुरापि नवं पुराणम्" । "पुरेदमूर्द्ध्वं भवतीति वेधसा" । समनन्तरं भविष्यतीत्यर्थः ॥ मिथो इति रहः सहार्थयोः । मन्त्रयते मिथो ॥ मिथस् इत्यपि पूर्ववत् ॥ प्रायस् इति बाहुल्ये ॥ मुहुस् इति पुनरर्थे ॥ प्रवाहुकमिति समकाले ऊर्द्ध्वार्थे च । केचित्तु प्रवाह्निकेति पठन्ति ॥ आर्य्यहलमिति बलात्कारे । शाकटायनस्त्वाह । आर्य्येति

**उत्पन्नानां नियम इति । (कै)**

उत्पन्नानां शास्त्रबलान्नियमेन लोपेनेव निवृत्तिः क्रियत इत्यर्थः । इदमप्यर्थनियमे सजातीयापेक्षप्रत्ययनियमे च बोध्यम् ॥

**विशेषस्येति । (कै)**

द्वेकयोरित्याद्येकवाक्यतारूपस्येत्यर्थः । ज्ञापकाद्विभक्तिरितिपक्षे इयमेवेति विशेषस्येत्यर्थः ॥ ननु "चलादीनाम्" इत्युक्त्वा चलः प्राक् पठितस्य तसिलः कथमुदाहरणदानमत आह

**आदिशब्दस्येति ॥ (कै)**

ननु विनेत्यादावपि पदत्वाय विभक्त्युत्पत्तिरावश्यिकेत्यत आह

**प्रयोग इति ॥ (कै)**

**दध्नीत्यादाविति । (कै)**

प्रयोगमात्रे विभक्त्यभावो विवक्षित इति भावः ॥

---

प्रतिबन्धे । हलमिति प्रतिषेधविवादयोरिति ॥ अभीक्ष्णमिति पौनः पुन्ये ॥ साकंसार्द्धमित्येतौ सहार्थे ॥ नमस् इति नतौ ॥ हिरुग् इति वर्जने ॥ धिग् इति निन्दाभर्त्सनयोः ॥ आम् इत्यङ्गीकारे । "आम् कुर्मः" ॥ प्रत्यम् इति ग्लानौ ॥ प्रशान् इति समानार्थे । "प्रशान् देवदत्तो यज्ञदत्तेन" ॥ प्रतान् इति विस्तारे ॥ मा इति निषेधे ॥ माङिति निषेधाशंकयोः ( माङोऽपि स्वरादौ प्रक्षिप्तः पाठः ) ॥ आकृतिगणश्चायम् । तेनान्येऽपि ग्राह्याः ॥ तद्यथा । अम् इति शैघ्र्ये अल्पे च ॥ कामम् इति स्वाच्छन्द्ये ॥ प्रकामम् इत्यतिशये ॥ भूय इति पुनरर्थे ॥ साम्प्रतम् इति न्याय्ये । परमिति किन्त्वर्थे ॥ साक्षाद् इति प्रत्यक्षे ॥ साचीति तिर्य्यगर्थे ॥ सत्यम् इत्यर्द्धाङ्गीकारे ॥ मङ्क्ष्विति शैघ्र्ये । आश्विति च ॥ संवदिति वर्षे ॥ अवश्यम् इति निश्चये ॥

अव्ययत्वादिति। (कै)

अविभक्तिकत्वस्य स्वाभाविकत्वे "[१]अव्ययादाप्सुप" इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः॥ ननु पूर्वलक्षणस्य दूषितत्वाद्वाशब्दोऽसङ्गतोऽत आह

अविभक्तिरिति॥

वाशब्द इति। (कै)

प्रयुक्त इति शेषः। एवं चाप्यर्थो वाशब्द इत्यर्थः। "[२]अलिङ्गम्" इत्यपि यदुच्यते एवमप्यन्योन्याश्रय इत्यर्थः॥

शास्त्रादेवेति। (कै)

तद्द्योतकविभक्तिलुक् शास्त्रादेवेति भावः॥

वाशब्दार्थ इति। (कै)

वाशब्दस्यार्थ इवार्थो यस्येति बहुव्रीहिः। अयं च पाठः स्वरादिषु कार्य्य इति बोध्यम्। स च पचतिकल्पादिव्यावृत्तये "तद्धि-

१ अ २। पा ४। सू ८२॥ २ अलिङ्गमसंख्यमितिवा। वा॥

सपदि शीघ्रे॥ बलवद् इति अतिशये। बलवदपि शिक्षितानाम्॥ प्रादुस्, आविस् इति प्रकाशे॥ नित्यदा, सदा अजस्रं, सन्ततम् एते सातत्ये॥ उषेति रात्रौ। उषातनोवायुः॥ रोदसी द्यावा पृथिव्यर्थे॥ ओम् इति ब्रह्मवाची॥ भूर्, भुवर् इति पृथिव्यन्तरिक्षलोकयोः॥ झटिति, झगिति तरसा शीघ्रे। द्राक्, द्रुतं शीघ्रे क्षिप्रमिति च॥ अतीव इत्यतिशये॥ सुष्ठु इति प्रशंसायाम्॥ कु इति कुत्सितेषदर्थयोः। कापथः, कवोष्णम्॥ अंजसेति तत्त्वशीघ्रार्थयोः॥ अ इति बहिरर्थे॥ मिथु इति द्वावित्यर्थे। मिथु मन्त्रयेते॥ विश्वग् इति सम-

तस्य” इति सूत्रारम्भेऽप्यावश्यक इति भावः॥ “[१]प्रत्नेत्यादि”स्याल्न परिगणितमध्यवर्त्तीत्यत आह

## स एवेति। (कै)

“[२]प्रकारवचन” इत्यत्र प्रकारः सादृश्यं विशेषश्च तत्र शब्दशक्तिमाहात्म्यात् “प्रत्नादिभ्य” इत्यनेन सादृश्यमुच्यते। “किमादिभ्यः” थाला तु विशेषः। एवं च “प्रत्नपूर्वे”ति सूत्रं व्यर्थमेव। लोकेऽप्रयोगस्त्वनभिधानादिति भावः॥ “[३]अमु च छन्दसि” इत्यम्॥ “[४]किमेत्तिङ” इत्याम्॥ “[५]प्रतियोग” इति तसिः पञ्चम्यादिष्वस्तीति तद्ग्रहणं चिन्त्यम्। दृष्टान्तार्थमित्यन्ये॥ भाष्ये वतिः “[६]तेन तुल्यम्” इति विहितो न तु “[७]उपसर्गाच्छन्दसि” इति

१ प्रत्नपूर्वविश्वेमात्थाल्छन्दसि। ५। ३। १११। इवार्थे। “तं प्रत्नथा पूर्वथा विश्वथेमथा”॥

२ अ ५। ३। २३॥ ३ अ ५। पा ४। सू १२॥
४ अ ५। पा ४। सू ११॥ ५ अ ५। पा ४। सू ४४॥
६ अ ५। पा १। सू ११५॥ ७ अ ५। पा १। सू ११८॥

तात् भावे॥ भाजग् इति शैघ्र्ये। भाजक् पचति॥ अन्वग् इत्यानुकूल्ये अलम् इति विनाशे॥ आनुषग् इत्यानुपूर्व्ये॥ ‘आनुषक् प्रविशतीह बन्धुता”। अनुमाने अनुषग् इति शाकटायनः॥ आनुषद् इति दान्तं केचित्॥ अस्तस् इति शीघ्र साम्प्रतिकयोः। “अस्र एव गच्छति”। अस्तरेवेति रेफो वा॥ स्थाने इति युक्तार्थे॥ वरम् इति हि ईषदुत्कर्षे॥ दुष्ठु निकृष्टार्थे॥ बलादिति हठार्थे॥ सु इति पूजायाम्। “सुशाशीरः”॥ क्षमेति क्षान्तौ॥ अर्वाग् इति प्राचीने॥ सुदि शुक्लपक्षे॥ वदि कृष्णपक्षे॥ इति स्वरादिः॥

विहितः। "[1]उद्गतो निगत" इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादित्याहुः॥

**एकत्वादिव्यवहारवदिति। (कै)**

पटादिपदानामिति शेषः॥

**अलिङ्गाऽसंख्यत्वमिति। (कै)**

तथाच संख्याऽभावादेव विभक्त्यनुत्पत्तिरिति अविभक्तिरिति न्यासोऽप्यदुष्ट इति भावः॥

**[2]अव्ययादाप्सुप (पा)**

इति सूत्रं तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यापकं "प्रत्ययलक्षण" प्रतिपत्तिद्वारा पदत्वादिसम्पादनार्थमिति तात्पर्य्यम्॥ नन्ववैयाकरणैः संख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह भाष्ये

**अभिज्ञाश्चेति। (भा)**

पट इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः॥ युक्त्यन्तरमप्याह

**आतश्चाभिज्ञा इति॥ (भा)**

"वस्तो" मूल्यम्॥

---

१ धातुर्वै शब्दः। शब्दे कार्य्यस्यासम्भवादर्थे कार्य्यं विज्ञास्यते। कः पुनर्धात्वर्थः। क्रिया। इदं तर्हि प्रयोजनमुत्तरपदलो यथा विज्ञायेत। धातुक्तताऽर्थोधात्वर्थ इति। कः पुनर्धातुक्ततोऽर्थः। साधनम्। किं प्रयोजनम्। साधनेऽयं भवँल्लिङ्गसंख्याभ्यां योक्ष्यते। उद्गतानि उद्गतः। निगतानि निगत इति॥ २ अ १। पा ४। सू ८२॥

अचैवेति। (कै)

अलिङ्गाऽसंख्यत्व एवेत्यर्थः। उपपत्तिर्युक्तिः क्रियाप्रधानत्वादि-रूपा। "एवमनुगम्यमानम्" इत्यस्योपपद्यमानमित्यर्थः॥

नापि साधनप्रधानमिति। (कै)

किन्तु द्रव्यप्रधानमिति शेषः॥

तस्माद्बाहुल्येति। (कै)

एवं च तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गासंख्यत्वमनु-मीयते। अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति भावः। उच्चैस्तगङ्गादीनां वाचनिकमव्ययत्वम् "[१]अव्ययीभाव" इति महा-संज्ञयापि सूच्यते। सत्त्वप्रधानता तु इदं "स्वर्" इति सर्वनाम्ना-परामर्शात्। स्नान्याद्यर्थकप्रतामित्याद्यपि सत्त्ववचनमित्यन्ये॥ ननु तदर्थे कारकान्वयाभावान्न तस्य क्रियात्वमत आह

क्रियाविशेषणत्वादिति। (कै)

क्रियायामेव विशेषणत्वादित्यर्थः। क्त्वान्ततुमुन्नन्तादिवदिति भावः। स्वरादीनां घटादीनां च स्वः पतिर्घटोदकमित्यादौ ना-मार्थेऽप्यन्वयः। एतेन तेषामपि क्रियाविशेषणत्वात् क्रियाप्राधान्यं दुर्वारमित्यपास्तम्। अत एव एतदर्थेन कारकानामन्वयः। तद-न्वययोग्यस्य साध्यत्वरूपक्रियात्वस्य तत्राऽभावात्॥

क्रियाऽऽक्षेपादिति। (कै)

स्थित्यादि क्रियाक्षेपादित्यर्थः॥

---

१ अ २। पा १। सू ५॥

**द्रव्यं प्राधान्येनेति।** (कै)

पीलुमूलसमानदिक्स्थमिति हि तत्र बोधः ॥

**द्रव्योपसर्जन इति।** (कै)

तस् प्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः। तृतीयार्थश्च तत्र साहित्यम्। पीलुमूलेनैकदिक् पीलुमूलतः। एकदिक्स्थपीलुमूलसाहित्यमित्यर्थः। अन्ये तु पीलुमूलेन समानदिग्गीत्यर्थकम् अधिकरणशक्तिप्रधानं पीलुमूलतः इतीत्याहुः ॥ भाष्ये

**नचैतयोरर्थयोरिति।** (भा)

यद्यपि क्रियायामेकत्वसंख्या "[1]रूपप्" सूत्रे भाष्ये उक्ता पचतिरूपम इत्यादिव्याख्यायाश्च नपुंसकत्वयोग उक्तस्तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक् ॥

**सूत्रारम्भकाले इति।** (कै)

यद्यपि न्यासान्तरेऽपि एकस्मिन्निति वक्ष्येव तथापि एकग्रहणे सति ज्ञापकादितः सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमित्येतत् सूत्रपाठकाले एतत्सूत्रसहितं एकस्मिन्नित्यतिबह्व्यर्थं क्रियत इति एकग्रहणं त्यक्त्वाऽस्य सार्थक्यं वक्तुं योग्यमित्यर्थ इति भावः ॥

**न्यासान्तरेति।** (कै)

पाठाश्रयेणाऽलिङ्गासंख्यमित्यनेन वेत्यर्थः ॥ भाष्ये

**अतिबहु इति।** (भा)

---

१ प्रशंसायां रूपप्। ५। ३। ६६ ॥

बहुशब्दो वैपुल्यवाची अतिबहुशास्त्रं व्यर्थं क्रियते इत्यर्थः॥

**अलिङ्गासंख्येभ्य इति।** (कै)

द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकलाभावेऽपि एकवचनप्रवृत्तिरिति भावः॥

**कथमेकवचनमिति।** (कै)

प्रथमापि मात्र ग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति भावः॥

**अप्राप्तेति।** (कै)

द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्यार्थात्तदभावे कर्मादौ सिद्धत्वेन सामर्थ्यादिति भावः। अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव न तु प्रातिपदिकत्वाभावप्रयुक्तापि। सुब्विध्येकवाक्यत्वात्। तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम्। किं च सर्वथाऽप्राप्तावेवास्य विधायकत्वमिति पचतिकल्पमित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम्। यद्यप्यनिर्दिष्टार्थत्वात् स्वार्थे विधीयमानस्याऽस्य न द्वित्वादौ प्राप्तिस्तथापि पंचकप्रातिपदिकार्थपक्षे एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह

**वाध्यत इति।** (कै)

अत्र पक्षे "१द्व्येकयोः" इति सूत्रमपि विध्यर्थमेवेति भावः। यद्यपि अव्ययात् सर्वविभक्त्युत्पत्त्याऽयं न्यासो दूषितस्तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्यप्राप्त्येदं

१ अ १। पा ४। सू २२॥

विधायकमिति तत्पक्षे सूत्रस्यार्थद्वयोपपादनमिदम् । एवं चैतदेव तयोरन्यतरपक्षाश्रयणस्यैकपदे वाक्यार्थाऽनन्वयित्वस्य च ज्ञापकमिति बोध्यम् । एतत् सर्वम् "उत्सर्ग" पदेन भाष्ये सूचितम् ॥

तन्मत मिति । (कै)

दाचिरित्यादावतिव्याप्तेः "[2]इतराभ्योऽपि दृश्यन्ते" इत्येतद्विहितत्रलादिविषयेऽव्याप्तेश्चेति भावः ॥

इत्तिकारान्तरेति । (कै)

तद्विग्रहे यस्येति अपादानस्यैव सम्बन्धत्वविवक्षया षष्ठीतिध्वनयितुं भाष्ये

यस्मादिति (भा)

उक्तम् ॥

विशेषेति । (कै)

एकवचनान्तविग्रहकरणरूपो विशेषः ॥ नन्वेवं सर्वविभक्त्येकवचनोत्पत्तौ बहुवचनान्तविग्रहासंगतिरतो भाष्ये

नचापीति ॥ (भा)

तद्व्याचष्टे

प्रकारेति । (कै)

"सर्वा विभक्तय" इत्यस्य सर्वप्रकारा इत्यर्थः । अवयवकार्त्स्न्ये तु बहुवचनं व्यर्थमिति भावः । एकवचनान्तविग्रहे तु अवयवकार्त्स्न्य एव सर्वशब्द इति नानेत्यादौ नाव्याप्तिर्नापि दाचिरित्यादावति-

---

१ पक्षाश्रयणेऽस्यैकपदे । ग । २ अ ५ । पा ३ । सू १४ ॥

व्याप्तिरिति भावः। भावे पचतिकल्पमित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव तत्र भावे प्रथमपुरुषस्यैव सामानाधिकरण्ययुष्मदाद्यभावादिति "[1]कृपप्" सूत्रे भाष्ये स्पष्टम्॥ अव्ययेभ्योऽपि प्रथमैकवचनमेवास्तु इत्याह

**यद्यात्विति॥ (कै)**

**प्रथमेति। (कै)**

अनेकनियमबाधे गौरवाच्चेत्यपि बोध्यम्॥ ननु भाष्योक्तपक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्त्तुमशक्यं परस्येत्युक्तेः किन्तु यत्किंचिदेव तस्य लुकि तावदेव पदत्वसम्पादनाद्विभक्त्यन्तरोत्पत्तौ मानाभावेन बहुवचनान्तविग्रहेऽपि न दोषोऽत आह

**खले कपोतीति। (कै)**

वाचः क्रमवृत्तित्वाद्युगपदुच्चार[2]णासम्भवेऽपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः। विनिगमनविरहोऽत्र बीजम्। प्रक्रियादशायां च बुद्धिरेव मुख्या। असाधूच्चारणायोगात्। यद्वा। प्रधानानुरोधेन गुणावृत्तेस्तावत्यः प्रकृतयः स्युरिति भावः॥ परे तु प्राथम्यं स्वादिसूत्रे प्रथमाया नियमशास्त्रपर्य्यालोचनया द्वितीयादीति न तन्नियामकम् इति प्रथमातिक्रम इत्याद्यसंगतं तन्न्यायाश्रयणे "[3]त्रिजां त्रयाणाम्" इत्यत्र त्रयाणाम् इत्यस्याऽऽद्युदात्तस्येत्यादावादिग्रहणस्य वैयर्थ्यं चेत्याहुः॥

---

१ अ ५। पा ३। सू ६६॥ २ युगपदुच्चारणाभावेऽपि। ग॥
३ अ ७। पा ४। सू ७५॥

तावतैवेति । (कै)

टाङसोरितिवक्तव्ये तृतीयादिग्रहणं तु वैचित्र्यार्थमिति भावः ॥

इदमेव ध्वनयितुं पंचयोगान् प्रत्याचष्टे

एवं गते इति (भा)

भाष्ये ॥

प्रतिपदमितीति । (कै)

असर्वविभक्तीति न्यासेनैव सिद्धत्वादित्यर्थ. ॥ भाष्ये श्लोके

[1]तत्रेति । (भा)

अव्ययसंज्ञाविधावित्यर्थः ॥

पंचेति । (कै)

स्वरादीत्यादिरव्ययीभावश्चेत्यन्तः ॥ "ये" इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह

तन्निवृत्त्यर्थमिति ॥ (कै)

तदेवं सूत्रं स्थापितमिति वार्त्तिकोक्तं "सिद्धन्तु पाठादि"त्यप्याश्रितं स्यात् । एवं चोभयशब्दादौ दोष इति शङ्कोत्तरत्वेनोत्तरभाष्यमवतारयति

ननूभयमिति । (कै)

अत एव "[2]उभयोऽन्यत्र" इत्यस्योदाहरणम् उभये उभया इति

---

१ एवं गते कृत्यपि तुल्यमेतन्मान्तस्य कार्य्यं ग्रहणं न तत्र ।
ततः परे चाभिमता न कार्य्यास्त्रयः कृदर्था ग्रहणेन योगाः ॥
कृत्तद्धितानां ग्रहणं तु कार्य्यं संख्याविशेषं ह्यभिनिश्रिता ये ।
तस्मात् स्वरादिग्रहणं च कार्य्यं कृत्तद्धितानां ग्रहणं च पाठे ॥

२ उभयोऽन्यत्र ( वा ) अ १ । पा १ । सू २७ ॥

भाष्ये [1]सर्वादिसूत्रे दत्तम् ॥ "गोदावि"त्यादौ "[2]वरणादिभ्यश्च" इति चातुरर्थिकलुपि युक्तवद्भावात्प्रत्ययार्थस्य द्वित्वादीति बोध्यम् ॥

**इत्याहेति । (कै)**

इत्याशङ्कायामाहेत्यर्थः ॥ भाष्ये "चस्त्व"र्थे "कृत् तद्धितानाम्" इत्यत्र कृद्ग्रहणेन कृतामप्यव्ययसंज्ञाविधायके सूत्रे अपि गणे पाठ्ये इति सूचितम् ॥ कृद् इत्युपलक्षणमव्ययीभावस्येत्यस्यापि तदाह

**तस्मादिति ॥ (कै)**

तदेवं गणपाठमाश्रित्य "तद्धितश्चासर्वविभक्तिः" इत्यष्टाध्यायीपाठः प्रत्याख्यातस्तदाह

**प्रपंचार्थस्त्विति ॥ (कै)**

शङ्कते भाष्ये

**पाठेनेयमिति । (भा)**

"स्वरादिनिपातमव्ययमि"तीत्यर्थः ॥ ननु "[3]अत्यादयो द्वितीं-

---

१ सर्वादीनि सर्वनामानि । १ । १ । २७ ॥ २ अ ४ । पा २ । सू ८२ ॥

३ कुगतिप्रादयः ( २ । २ । १८ ) इति सूत्रे प्रादयः क्तार्थे ( वा ) इति वार्त्तिकमुक्त्वा "एतदेवच सौनागैर्विस्तरतरकेण पठितम् । "स्वतीपूजायाम् । -- । दुर्निन्दायाम् । -- । आङीषदर्थे । -- । कुः पापार्थे । -- । प्रादयो गताद्यर्थे प्रथमया । -- । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । -- । अवादयः क्रुष्टाद्यर्थे तृतीयया । -- । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । -- निरादयः क्रान्ताद्यर्थे पंचम्या । -- । अव्ययं प्रवृद्धादिभिः । -- । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च । -- । उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम्" इत्युक्तम् ॥

यथा" इत्युक्ते कथमुच्चैःशब्देनाऽधिकरणशक्तिप्रधानेनाऽद्वितीयान्तेन समास इत्यत आह

**शक्तीति ॥ (कै)**

**द्वितीयान्तस्येति । (कै)**

अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः ॥ "दोषामन्यम्" इत्यत्र "कर्मणि" इत्यधिकारे "[1]आत्ममाने खश्" । दिनं रात्रिं मन्यत इत्यर्थः ॥

**प्रश्नेऽपीति । (कै)**

"[2]व्येति" इत्यस्य विविधं प्रकारं गच्छतीत्यर्थः ॥ "[3]क्के"त्यस्य किं विषये इत्यर्थ इति भावः । अन्यथोत्तरानुसारेण कानीति प्रश्न उचितः । अत एवाग्रे उक्तम्

**[4]एतानर्थान् केचिद्वियन्ति (भा)**

इत्यादि । विपूर्वस्येणो रूपम् ॥

**[5]ये न वियन्ति । (भा)**

एतानर्थान् ये न वियन्ति विविधप्रकारप्रापकान्न प्राप्नुवन्ति ॥ "तत्" । तद्वाचकमव्ययमित्यर्थः । द्वित्वादेरर्थधर्मत्वादिति बोध्यम् ॥ ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह

**कारकेष्विति ।**

---

१ अ ३ । पा २ । सू ८३ ॥
२ न व्येतीत्यव्ययम् ( भा ) ॥
३ क्क पुनर्नव्येति ( भा ) ॥
४ अत्रैव भाष्ये ॥
५ ये न वियन्ति तदव्ययम् ( भा ) ॥

विषयसप्तम्य एताः । सादृश्यं तत्तल्लिङ्गाद्यभावानुयोगित्वेन ॥ नन्वेवं स्वरादिवाच्यानां कर्मत्वादियोग्यत्वेन सकलकारकविषये न कारकाभावाऽनुयोगित्वरूपं सादृश्यमत आह

**तच यानीति ॥ (कै)**

साधनम् । शक्तिः ॥ तादृशान्युच्चैरादीनि । तेषु च कारकशक्त्यन्तरायोगात् सर्वकारकविषयकाभावानुयोगित्वमस्त्येवेत्यर्थः ॥ शक्तिः । कर्मत्वादिः ॥

**वचनादिति । (कै)**

"अव्ययीभावस्य" इति वचनादित्यर्थः । संख्याभावादिति वार्थः ॥ सप्तम्यर्थ इत्यादौ अभावस्य फलत्ववदत्र तदभावस्य कारणत्वमिति बोध्यम् ॥

**यथेति । (कै)**

क्रियाहेतुकसम्बन्धविशेषद्योतका हि अन्वर्थबलात् कर्मप्रवचनीयाः ॥ स्वत्योस्तत्त्वाभावेऽपि क्रियापदसन्निधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा तथा प्रकृतेऽव्ययीभावादीनामित्यर्थः ॥

**सत्त्ववचनानामपीति । (कै)**

स्वरादीनामिति शेषः ॥ "तद्योगः" । लिङ्गसंख्याऽयोग इत्यर्थः ॥ सदृशमित्यत्रोक्तं सादृश्यं निरूपयितुं "[1]यन्न व्येति" इत्यादि । अत्रापि "लिङ्गेषु" इत्याद्यावृत्त्या सम्बध्यते ॥

---

१ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
इति श्रुतिराथर्वणे प्रणवविद्यायामुक्तम् । तदेवात्रोपन्यस्तं भगवता ॥

नानात्वमिति। (कै)

एतेषु यत्न व्येति। एतद्विषये यत्नानात्वं न प्राप्नोति तदव्यय-मित्यर्थः॥ क्वचित्तु नाना न गच्छतीति पाठस्तदा एतद्विषयमनेक-प्रकारं न प्राप्नोतीत्यर्थः॥

## कृन्मेजन्तः। १। १ ।३९ ॥



किं मेजन्तेति। (कै)

कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा उत कृदन्तस्येति न ग्रन्थार्थः। "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" इति तदन्तविधेरित्याशयः॥

पश्चात्त्विति। (कै)

मेजन्तो यः कृत् तदन्तमव्ययमित्यर्थ इति भावः॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादाह

प्रयोजनमिति॥ (कै)

ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह

अथवाऽन्वर्थेति। (कै)

एवं चाऽव्ययत्वप्रयोजकस्य महासंज्ञालभ्यार्थस्य केवलप्रत्ययेष्वभा-वात् तदन्तविधिरिति भावः। अनयैव रीत्या सर्वादिगणे डतर-डतमाभ्यां तदन्तविधिर्बोध्यः। नानागमनमिवा[1]ऽनानागमनमपि न

१ नानागमनमिवागमनमपि न सम्भवति। ग।

सम्भवति। सम्भावितप्रतियोगिदेश एव तदभावबुद्धेः शब्देन जननात् सम्भावितप्रतियोगितावच्छेदक एवाऽब्राह्मण इत्यादिना भेदबुद्धिवदित्याशयः॥

## लिङश्च हदिति। (कै)

तिङ्भावित्वाऽभावेनाऽतिङ् इति न हल्त्वप्रतिषेध इति भावः॥

## प्रतामाविति। (भा)

तमेः क्विप्। "[१]अनुनासिकस्य" इति दीर्घः॥

## अत्याचेति। (कै)

तथा च अव्ययत्वाल्लुक् स्यादिति भावः॥

## द्विवचनेत्यादि। (कै)

ननु संख्याया अनुप्रयुज्यमानोत्तरतिङैवाऽभिव्यक्तत्वात् कथं द्विवचनादिप्रसङ्ग इति चेत्। उपलक्षणमिदम्। सर्वैकवचनोत्पत्तिपक्षेऽस्मादिलुगर्थमिदमावश्यकमिति न दोषः। अव्ययात् सुपोलुगिति ज्ञापकात् सर्वविभक्तिरिति पक्षे च। अकजर्थं तर्ह्यामन्तस्याऽव्ययत्वमेष्टव्यमत आह

## [२]अकच् त्विति। (कै)

अपरिसमाप्तार्थत्वं च संख्याकारकादिविषयकोत्थिताऽऽकाङ्क्षत्वम्। अत एवाऽनुप्रयोगः प्रार्थ्यते स्वार्थे परिपूर्णस्यैव [३]चार्थान्त-

---

१ नानागमनमपि न सम्भवति। इ॥

२ अकचिति। ग।

३ अवान्तरेण। ग।

रेण सम्बन्ध इति भावः॥ ननु तरवाद्यनुत्पत्तावामन्त्रार्थे प्रकर्षादिप्रतीतिः कथमत आह

अनुप्रयोग एवेति। (कै)

तदुत्पन्नतरपैवैतद्गतप्रकर्षप्रतीतिः। कारकादिवदित्यर्थः॥ भाष्ये लुक्पदमदर्शनमात्रपरमिति भावः॥ धातुत्वेन तुल्यजातीयतेत्याह

धातोरिति॥ (कै)

तस्य क्विवन्तस्येति। (कै)

अत्र चेदमेव भाष्यं मानम्॥ प्रशामाविति तु शान्तिमद्वाचकस्य शान्त्यर्थकस्यैत्र च गणे पाठस्तस्यैव स्वभावेन लिङ्गाद्यभावात्। वस्तुतो गणे मान्तपाठः प्रयोगे एव तु नत्वं यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्गादीति भाष्याशयः॥

अस्मादेवेति। (कै)

धातुमात्रापेक्षं ज्ञापकमिति भावः॥

लाक्षणिकत्वादेति। (कै)

वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्पर्य्यम्॥ भाष्ये

अनिकारोकारेति। (भा)

यत्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थादत्र न दोष इति। तन्न। परिभाषयैव सिद्धे अन्तग्रहणं न कार्य्यमिति तदाशयात्॥

गुणे कृते इति। (कै)

तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाऽव्ययसंज्ञासुप्सम्बन्ध्यजपेक्षत्वाद्यादयो बहिरङ्गाः॥

## अन्तरङ्गत्वाद्वेति। (कै)

ननु वर्णमात्रापेक्षयाऽयादय एवान्तरङ्गाः। एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते। तेना"ऽन्तरङ्गानपी"ति न्यायेन लुगिति बोध्यम्। तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणेऽयादीन् बाधित्वाऽव्ययत्वं बोध्यम्॥ "तद्विघातस्य" इति कर्मण्यणित्याह

## तमिति। (कै)

नचाऽनया लुको बाधेऽपि संज्ञाबाधे मानाभावः। साक्षात् परम्परया वा तद्विघातकमात्रस्याऽनयाप्रतिबन्धात्। अत एवोपादास्येत्यत्र कित्त्वं न। अन्यथाऽनया साक्षादेज्विषयसन्निपातविघातक "[१]क्ङिति चे"ति निषेधाऽप्रवृत्तिः स्यात्। कित्त्वं तु स्यादेव। तत्कालं तु सन्नियोगशिष्टत्वसिद्धिरेव। एवं चोपादेस्तेति रूपं स्यात्। अत्र हि किदिति न कार्य्यातिदेशः। इत्त्वकाले तत्कार्य्याऽसम्भवात् तस्माद्व्यपदेशातिदेश एव। तस्मात् सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यनेनाऽप्रवृत्तिः। अकजाद्यर्थसंज्ञा तु न। अन्तरङ्गायां तस्यां वहिरङ्गगुणादेरसिद्धत्वात्॥

## पूर्वोत्तरेति। (कै)

अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः॥

## अवयवेति। (कै)

तथाप्रतीतेरित्यभिमानः। वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसन्निपातविघातस्येति भाष्याशयः।

---

१ अ १। पा १। सू ५॥

एवं "वृत्रहभिः" इत्यत्र नान्तस्य स्वादिसन्निपातविघातः । नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति । लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात् कैयटोक्तं चिन्त्यम् । किं च । भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवेकत्वेन प्राप्तस्य गुणस्य "[1]दीधीवेवीटाम्" इति निषेधो व्यर्थः स्यात् । न च ह्रस्वावयवत्वे तुको "यदागमा" इति न्यायेनेग्ग्रहणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः । "[2]आनेमुग्" इति ज्ञापकेन तदनङ्गीकारात् । एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविना समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाऽप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम् । भूयोऽवयवसन्निकर्षस्यैव फलबलात्कारणत्वेनाऽक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलबलादिति दिक् ॥ असिद्धत्वेन समाधानं चावश्यकमित्याह

यदपीति ॥ (कै)

अर्थाश्रयत्वादिति । (कै)

इदं "[3]त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः" इति स्थानिवत्सूत्रस्थेन वार्त्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धं प्रातिपदिकरूपसमुदायाश्रयत्वादिति वक्तुं युक्तं तदेवाह

वर्णाश्रयत्वादिति । (कै)

---

१ अ १ । पा १ । सू ६ ॥ २ अ ७ । पा २ । सू ८२ ॥

३ त्रयादेशे स्रन्तप्रतिषेधः (वा) । १ । १ । ५६ ॥

इयं च बहिरङ्गत्वेन सिद्धिः "नाजानन्तर्य्ये" इति निषेधमनाश्रित्य कुलं ग्रामणि इत्यत्र नपुंसकह्रस्वत्वे सन्निपातपरिभाषयैव न तुक्। प्रातिपदिकस्याजन्तत्वसन्निपातेन जातह्रस्वस्य तद्विघातकत्वात्। एतेन परनिमित्तकत्वेन ह्रस्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तम् इत्यनुपदमेव वक्ष्यामः। तुकि सन्निपातपरिभाषाश्रयणे दोषमप्याह

## यदित्विति। (कै)

अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गस्तद्दोषेष्वस्याऽगणनाच्च तस्मादत्र तुग्भवत्येवेत्यन्ये। "वृत्रहभिः" इत्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम्॥

## असिद्धमिति। (कै)

सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः॥ "यद्दीर्घत्वं प्राप्नोति" इत्यस्य तत्रापि मुभावः सिद्ध इत्यर्थ इति शेषः॥ "तत्र" इत्यस्य च एवं चेत्यादिः॥ क्वचित्तु "प्राप्नोति तत्र तथा च तत्र" इति पाठः॥

## असिद्धत्वादिति। (कै)

शास्त्रासिद्धत्वादिति भावः॥

## कृतेऽदसोऽसेरिति। (कै)

ननु मुत्वाऽसिद्ध्या उकारे एवाकारबुद्धौ "[1]सुपि च" इत्यन्तरतमे दीर्घ आकारे मस्य खत एव सत्त्वाद्दात्परत्वाभावेन कथम-

---

[1] अ ७। पा ३। सू १०२॥

नेन दीर्घाकारप्रवृत्तिरिति चेन्न । लोकसिद्धसन्नियोगशिष्टन्यायेन मतस्यापि निवृत्तेर्दात्परत्वसत्त्वात् । न च "[1]अचः परस्मिन्नि"ति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम् । "पूर्वत्रासिद्धीये न स्थानिवद्" इति निषेधात् । "लक्ष्ये लक्षणस्ये"ति न्यायस्तु न । लक्ष्यभेदादित्यभिमानः । केचित्तु अमाना अदाना इति वापत्तिरित्याहुः ॥

## दीर्घत्वस्येति । (कै)

उकारस्वरूपविनाशकस्येत्यर्थः ॥ नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह

## अनेकेति । (कै)

अनेकविभक्त्यन्तपूर्वपद इत्यर्थः । सम्बन्धसामान्यषष्ठ्यासमास इति तात्पर्य्यम् ॥

## कित्त्वस्येति । (कै)

भाष्येऽपि "[2]स्थाघ्वोरिच्च" इति कित्त्वं प्राप्नोतीति पाठः ॥ "इत्त्वमिति" पाठे कित्त्वसहितमित्त्वमित्यर्थः । कित्त्ववारणेऽपीत्त्वं स्यादत आह

## कित्त्वेति ॥ (कै)

## नास्ति ङीप इति । (कै)

यत्त्वन्तरङ्गत्वात् समासात् पूर्वमेव ङीबिति । तन्न । "अन्तरङ्गानपी"ति न्यायेनाऽन्तर्वर्त्तिविभक्त्याश्रयतिसादेशस्याऽप्रवृत्तेः ॥

---

[1] अ १ । पा १ । सू ५७ ॥ [2] अ १ । पा २ । सू १७ ॥

ज्ञापकमेवेति। (कै)

ङ्यन्ते तु नास्य प्रवृत्तिर्विभक्तौ लिङ्गविशिष्टाऽग्रहणात् ॥ नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह

ज्ञापकाद्वेति। (कै)

एवं चैतज्ज्ञापकपरभाष्यप्रामाण्यात् स पाठोऽप्रामाणिक इति भावः ॥

विभक्तिलुक इति। (कै)

तन्निमित्तसंज्ञायाश्चेत्यपि बोध्यम् ॥

अन्तग्रहणमिति। (कै)

तत्सामर्थ्यादिति मन्यते ॥ सामर्थ्यमसिद्धमिति परिहारः।

संख्येति ॥ (कै)

बहुव्रीहेः फलं संख्यासंप्रत्ययः ॥

विभक्तीति। (कै)

"१घेः परस्य ङेरौत् घेरन्तादेशश्चाकार" इति सूत्रार्थाद् ङ्यादेशौत्त्वसन्नियोगेन विधीयमानमत्त्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः ॥ नन्वेकादेशेऽन्तवद्भावान्न टाब् व्यवधायकोऽत आह

शास्त्रीये चेति ॥ (कै)

ननु टापि वृद्ध्येकादेशे शकटावितिसिध्येदत आह

टापि चेति। (कै)

वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति भावः ॥

---

१ अ ७। पा ३। सू ११९।

## सम्पद्यत इति। (कै)

तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् टाप्तु स्यादेव। किं च शक-टावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम्॥

## लुक् स्यादितीति। (कै)

लुगभावेऽपि शकटावितिवद्यत्सन्निपातेन गुणो जातस्तदानन्तर्य-विघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः॥ ननु उषविदेत्याम् विधानाद् "उवोष" इत्यसंगतमत आह

## [1]उषविदेति। (पा)

तत्र न द्विर्वचनात् प्राग् गुरुमत्त्वमिति भावः॥

## प्रतिपदविधेरिति। (कै)

क्वचिद्गुणे क्वचिद्वृत्तिकादेशे गुरुमत्त्वादिजादेरित्येतत्प्राप्तमि-ति भावः॥

## परत्वादिति। (कै)

तदुक्तस्य ऊषतुरित्यस्यात्रकाशत्वमभ्युपगम्येदमुच्यते। उवोखेति कवर्गद्वितीयान्तो वा भाष्ये पाठः। उषेर्विकल्पेन पचे आमभावे-ऽपि कृतद्वित्वाद् [2]उवोषाद् आम् दुर्वार एव। रूपे चास्यैव वि-शेष उवोषांचकारेति। उषेस्तामि ओषांचकारेति परे॥

## नित्ययोगे इति। (कै)

इजादेर्गुरोरित्युक्तावपि "ऋनृच्छ" इति प्रतिषेधादिजादेर्गुरु-मत इत्यर्थ लाभे मतुब्ग्रहणादितिभावः। परेत्वेवं मत्यनृच्छ

१ अ १। पा १। सू ३८॥ २ उवोषो दुर्वार एवाम्। क। ग। इ॥

इत्यस्यानर्थक्यापत्तिः । तुगुत्पत्तेः प्राग्गुरुमत्त्वाभावात् । उम्भादीनां गुरुमतामामनापत्तेश्च । तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशयमाहुः ॥ नन्विञ्प्रत्ययो नोभयाधिष्ठानसम्बन्धलक्षणसन्निपाताश्रय इत्यत आह

**प्रयोगे इति ॥** (कै)

"अन्वाख्यानं" साधुत्वेन ॥ "प्रत्ययस्य" साधुत्वावच्छिन्नस्य ॥

**अविद्यमान एवेति ।** (कै)

मन्दमध्यानां तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं न प्रत्ययस्येति भावः ॥

**सत्यामिति ।** (कै)

[1]"यस्माद्" इत्यस्य प्रत्ययविधावुद्देश्यताऽवच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञि तदङ्गसंज्ञमिति सूत्रार्थ इति भावः ॥ यद्यङ्गसंज्ञाऽनिमित्तं कथं तर्हि वार्त्तिके प्रत्यय इत्युक्तमत आह

**तच्चेति ॥** (कै)

**आचेयेति ।** (कै)

[2]"इतश्चानिञः" इति ढक् । परे तु वार्त्तिकस्यायमाशयः । निमित्तनिमित्तिनोः सम्बन्धवद्विशेषणविशेष्ययोः सम्बन्धोऽपि सन्निपातः । एवं च प्रातिपदिकत्वादन्तत्वसम्बन्धनिमित्तः प्रत्ययस्तद्विघातस्याऽनिमित्तमिति । इदमाशयमजानानः शङ्कते

---

१ यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १ । ४ । १३ ॥
२ अ ४ । पा १ । सू १२२ ॥

**न प्रत्यय इति ॥** (भा)

एकदेश्युत्तरयति

**अङ्गसंज्ञा तर्हीति ॥** (भा)

युक्तं चैतद् उपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु एतन्न्यायस्याऽनित्यत्वेन सुग्रकवारणः । अत एव "ग्रामणि कुलम्" इत्यादौ नपुंसकह्रस्वत्वे तुग्न । [1]उपजीवनस्य प्रातिपदिकाजन्तत्वसम्बन्धस्य विघातात् । बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न । तस्य तत्त्वाभावात् । ग्लैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यंशस्य वार्त्तिके वैयर्थ्यापत्तेरित्याहुः ॥ "आत्वम्" । "क्रौङ्जीनां णौ" इति ॥ स्वाङ्गस्याऽव्यवधायकत्वादाह

**आकार इति ।** (कै)

श्रुतत्वात्तस्यैव पुगिति भावः ॥ परे तु पुकोऽङ्गभक्तत्वेऽपि न क्षतिः । याद्दृशयोस्सन्निपातः पुग्निमित्तं तस्य विघातसत्त्वाद् [2]"यदागमा" इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याऽभावात् । अत्र चेदमेव भाष्यं मानम् । "ह्रस्वत्वं तुग्विधेरि"त्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः ॥ भाष्ये

**पुग् ह्रस्वत्वस्येति ।** (भा)

---

१ उपजीव्यस्य । क । ख । ग । ङ ॥

२ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते । परिभा–११ ॥

ण्याकारसन्निपातनिमित्तः पुक् । ह्रस्वे हि तद्विघातः स्पष्ट एव । न च ह्रस्वस्य घङ्परणिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात् कथमत्र परिभाषाप्राप्तिः । एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । किं च तथा शास्त्रीये कार्य्येऽसिद्धत्वेऽपि लौकिके सन्निपातेऽसिद्धत्वाभावात् ॥ भाष्ये

**इड्विधिरिति ।** (भा)

[१]"वस्वेकाजाद्" इत्याकारान्तलक्षणइट् । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति भावः ॥

**पूर्वमिति ।** (कै)

[२]"ह्रस्वनुड्भ्याम्" इत्यत्र "अन्तोदात्ताद्" इत्यनुवृत्तेरिति भावः । ह्रस्वत्वम् [३]"अम्बार्थे"त्यनेन ॥ ननु ह्रस्वग्रहणं निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्यादत आह

**सम्बुद्धिलोपस्येति ॥** (कै)

भाष्ये

**एते दोषाः समा इति ।** (भा)

वार्त्तिककारोक्तसकलप्रयोजनापेक्षमिदम् । यद्यपि प्रयोजनानि नव दोषा अष्टौ तथापि अल्पान्तरत्वात् समत्वोक्तिः । यद्वाऽन्यत्रापि दोषः सम्भाव्यत इत्यभिमानः ॥ ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न कुतस्तदतिशयोऽत आह

**दुष्टत्वेति ।** (कै)

---

१ अ ७ । पा २ । सू ६७ ॥ २ अ ६ । पा १ । सू १७६ ॥
३ अ ७ । पा ३ । सू १०७ ॥

अन्ये तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरिति वदन्ति॥ ध्यायतेर्विचि "[1]आतो धातोरि"ति लोपे "[2]दुरोदाशनाशदभध्येषु" इति उत्वे उत्तरपदादेष्टुत्वे "दूड्य"इति तदाह

दुर्धिय इति। (कै)

सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मावधीदित्यर्थः। दुस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वत्वाभावाद्यत्र॥ "[3]तस्मा-न्नार्थ" इति पूर्वपक्षाऽऽशयमाह

तत्रेति॥ (कै)

सिद्धान्ती समाधत्ते भाष्ये

नहीति। (भा)

परिभाषायाः कर्त्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती

दोषाः खल्वपीति॥ (भा)

लक्षणमिति। (भा)

उपलक्षकं रूपं नास्तीत्यर्थः॥

तत्र विधानेति। (कै)

यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताऽङ्गसंज्ञातादृशसन्निपातवि-घातं विना "[4]यस्येति" लोपस्य चारितार्थ्याभावादिति भावः॥

---

१ अ ६। पा ४। सू १०॥

२ अ ६। पा ३। सू १०९ (एतत् सूत्रस्थवार्त्तिकम्)॥

३ अत्रैव भाष्ये॥ ४ अ ६। पा ४। सू १४८॥

[1]कष्टायेति । (कै)

अकारसन्निपातनिमित्तो "[2]ङेर्यः" यञादिनिमित्तदीर्घस्याऽनिमित्तं स्यादिति भावः । न चैवं "दोषाः साकल्येनेति" भाष्यविरोधः । "कष्टायेति यादेशो दीर्घत्वस्य" इति ग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः । एवं च "समा" इत्यपि यथाश्रुतमेवेत्याहुः ॥

लिङ्गादिति । (कै)

इत्वनिषेधवैयर्थ्यादिति भावः ॥

न त्वपूर्व इति । (कै)

क्रादिनियमाद् "[3]आर्द्धधातुकस्येड्" इत्येवेट् सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः ॥ परे तु नियमशास्त्राणां विधित्वमेव आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसम्मतत्वेनाकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः ॥

आकारान्तेति । (कै)

"अङ्गस्य" इत्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ॥

तज्ज्ञापयतीति । (कै)

अत एव "[4]भरज्ञपो"ति निर्द्देशः सङ्गच्छते । मितां ह्रस्वेवोपधाया इत्यनुवर्त्तत इति भावः ॥

---

१ अ ३ । पा १ । सू १४ ॥ २ अ ७ । पा १ । सू १३ ॥
३ अ ७ । पा २ । सू ३५ ॥ ४ अ ७ । पा २ । सू ४९ ॥

**ह्रस्वभाविनीति ।** (कै)

"[1]अचश्च" इत्युपस्थितेरिति भावः ॥ "अचश्च" इत्यस्य श्रुतत्वेन तद्बाधकल्पनापेक्षयाऽस्यैवाऽनुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्य्यम् ॥

**बाधत इति ।** (कै)

"[2]ह्रस्वनुड्भ्याम्" इत्यत्रो[3]पस्थिततयोपस्थितिसामर्थ्यादिति भावः ॥

**गुणाऽभावेति ।** (कै)

"[4]जसादिषु छन्दसि वा वचनम्" इति वचनादिति भावः ॥

---

# अव्ययीभावश्च । १ । १ । ४१ ॥

उपचारो नाम "[5]अतः कृ" इति विहितविसर्गस्थानिकसत्वम् ।

**यथा मशकार्थ इति ।** (कै)

एतदेव निवृत्तिकारणम् इति पातञ्जलैर्व्यवह्रियते ॥

**अनेनेति ।** (कै)

स्वव्यन्तरवचनसंवादेनेत्यर्थः । तत्र वक्तव्य इत्यन्तं तत् । तत्र

---

१ अ १ । पा २ । सू २८ ॥ २ अ ६ । पा १ । सू १७६ ॥

३ उपस्थिततयोपस्थिति -- । क । ख । ग । ङ ॥

४ अ ७ । पा ३ । सू १०९ (एतत् सूत्रस्थवार्त्तिकम्) ॥

५ अ ८ । पा ३ । सू ४६ ॥

यदन्यदित्यन्यत्वे प्रतियोगिनस्तस्य उक्ता इत्याहुः ॥ किं पुनस्तत्प· राङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् ॥

षष्ठ्येति । (कै)

अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठम् "[1]आमन्त्रितस्य च" इत्याद्युदात्तत्वम् ॥ भाष्ये

यदयं नाव्ययीभावादिति । (भा)

स ह्यनन्तरत्वाद् "[2]अव्ययादाप्सुपः" इत्यस्यैव निषेधो न तु "[3]सुपो धातु" इत्यस्येति उपमणिकसुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् ॥

न चोक्तमिति । (कै)

भाष्ये "यदि" इत्यसन्दिग्धे सन्दिग्धवचनम् । "वेदाः प्रमाणं चेद्" इति वत् । तस्मात् तत्र ग्रहणं कर्त्तव्यम् ॥ सूत्रं च न कार्य्यमिति भाष्याशय इति वयम् ॥

अन्येत्विति । (कै)

[4]चिना ह्यारोपितमव्ययत्वम् । वास्तवमनव्ययत्वं च प्रतीयत इति यथालक्ष्यं किं चिदव्ययकार्य्यं भवति किं चिन्नेतीष्टं सिद्धमिति भावः ॥ "विशेषे" । कार्य्यविशेषे ॥ किं च द्विर्बद्धं सुबद्धमिति न्यायेन पुनर्विधानात् सार्वत्रिकमेव स्यादित्यपि द्रष्टव्यम् । एवं

---

१ अ ६ । पा १ । सू १९८ ॥ २ अ २ । पा ४ । सू ८२ ॥

३ अ २ । पा ४ । सू ७१ ॥

४ विना । क । ख । ग । ङ ॥

चाव्ययीभावस्याव्ययत्वात् क्यजनेति हरदत्ताद्युक्तं चिन्त्यम् । भाष्यविरोधात् ॥ अन्ये तु मुखस्वरे नाव्ययीभावादिति नोक्तं सूत्रं च कृतं तस्मादन्यदपि प्रयोजनं यथा उपकुलमित्यादौ षष्ठीसमासप्रतिषेधादौत्याहुरिति मतं हरिटीकायां स्पष्टम् । तद् "अपि [1]खल्वप्याहुरि"त्यादि भाष्याऽननुगुणम् ॥

---

# शि सर्वनामस्थानम् ।१।१।४२॥

भाष्ये "असमर्थसमासश्च" इति दूषणान्तरम् । तच्चासामर्थ्यमसम्बन्धात् चेन वाक्यभेदस्यापि संग्रहः ॥

**पर्युदासेति ।** (कै)

एवं हि समर्थसमासैकवाक्यते लभ्येते । यद्यपि पर्य्युदासेऽपि लक्षणा तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः । वस्तुतो नञो निपातत्वेनानेकार्थत्वात् पर्य्युदासपक्षे लक्षणेति रिक्तं वचः । पर्य्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्य्यम् ॥ भाष्ये

**नपुंसके न व्यापार इति ।** (भा)

निषेधस्येति शेषः ॥ "[2]अप्राप्तेरि"ति वार्त्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाऽप्राप्तेरित्यक्षरार्थः ॥ भाष्ये तु वस्त्वर्थ उच्यते ।

---

१ अपि खल्वाहुः । इति किल्हर्णमुद्रापितभाष्यपुस्तकेऽस्ति ।

२ अप्राप्तेर्वा । भा ॥

अन्यथेति। (कै)

सुडित्यनपेक्ष्यनपुंसकसम्बन्धिमात्रस्य निषेध इत्यभिमानः। सुट्सम्बन्धे तु इदं चिन्त्यम्। शसः शौ चरितार्थत्वात्॥ ननु संज्ञाया एकत्वेन कार्य्यैक्ये विरोधाभावात् कथं परत्वमत आह

प्रतिषेधेति। (कै)

शषि सावकाशत्वात्। एवं चोभयोर्यौगपद्यासम्भवरूपो विरोधोऽस्तीति भावः॥

पूर्वां प्राप्तिमिति। (कै)

एवं च सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इति भावः॥

अपवादेति। (कै)

एवं च स्वयमप्रवर्त्तमाना कथमन्यत्र बाधिकेति तन्न्यायावसरो नेति भावः॥

इदानीमित्यर्थ इति। (कै)

तथापीत्यर्थ इति उचितम्। यद्यपि वक्तव्य इत्युपक्रमात्॥

स्त्रीपुंसयोरिति। (कै)

मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः। पुंस्त्रियोरिति तु वक्तुमशक्यं तस्यासाधुत्वादिति बोध्यम्। अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधे विकल्प इति मीमांसकोक्तं चिन्त्यम्। सामान्यविशेषन्यायेन बाधस्यैवौचित्यात्। स्वाऽभावे सम्भावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः॥

---

# नवेति विभाषा । १ । १ । ४४ ॥

ननु समुदायस्य समासग्रहणनियमेनाऽप्रातिपदिकत्वान्नवेति विभाषायामित्यनुपपन्नमत आह

**समुदायस्येति ।** (कै)

वार्त्तिकोच्चारितसमुदायस्येत्यर्थः ॥ नन्वेवमपि समुदायस्याना बन्तत्वात् कथं याडादीत्यत आह

**स्त्रीप्रत्यये चेति ।** (कै)

"[1]स्त्रीप्रत्यये चानुपसर्जने न" इति "[2]ष्यङः सम्प्रसारणम्" इत्यत्र भाष्यपठितवचनेनेति भावः । यत्तु "[3]हल्ङ्याब्" इति दीर्घग्रहणादिति । तन्न । "बहुश्रेयसी"त्यादौ लोपार्थं "प्रत्ययग्रहण" इति तदन्तविधिना ङ्यन्तेत्यर्थे तस्य स्वादिप्रत्ययलक्ष्यस्मादिहित- स्तदादेरित्येतद्विशेषणतया ङ्यन्तान्तेत्यर्थेन "निष्कौशाम्बि" व्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् । अनुकरणस्याबन्तत्वन्तु प्रकृतिवदनुकरणमिति न्यायात् । तस्यानित्यत्वाच्च न प्रत्ययान्तत्व- प्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् ॥

**अथवेति ।** (कै)

इता । उच्चारिता । समासत्वादेव प्रातिपदिकत्वमसमासेऽपि

१ परिभाषेन्दु— । २६ ॥ २ अ ६ । पा १ । सू १३ ॥
३ अ ६ । पा १ । सू ६८ ॥

लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः॥ नामपदश्रवणानाभिधाने न वा शाटीत्यादौ प्रत्ययार्थोऽवगतेराह

**क्रियापदेति॥** (कै)

**अन्यथेति।** (कै)

प्रकरणादिवशाच्चार्थविशेषावसाय इति भावः॥ ननु "[1]दाधाघु" इत्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः किन्तु दाधाशब्दैरेवेत्यत आह

**प्रदेशेष्विति॥** (कै)

भाष्ये "घुग्रहणेष्वि"त्यादिर्घुप्रदेशेष्वित्यर्थः॥ करणल्युटि अर्थासङ्गते राह

**कर्मणीति।** (कै)

बाहुलकादिति भावः॥

**सामान्येति।** (कै)

पाकं पचतीतिवत्॥ भाष्ये "स्वस्मात् पदार्थात् प्रच्युतः" शब्दपदार्थकः सम्पद्यत इत्यन्वयः॥ "स्वस्मात् पदार्थात्" इत्यस्य विवरणं "योऽसौ" इति॥ दार्ष्टान्तिके च शब्दपदार्थकता "[2]स्वं रूपमि"ति वचनात्॥ "तस्या" इत्यस्य "प्रच्युत" इति शेषः॥ कोऽसौ लौकिकोऽर्थस्तत्राह

**नवेति यद्गम्यते इति॥** (भा)

---

१ अ १। पा १ सू २०॥ २ अ १। पा १। सू ६८।

तद्विवृणोति

नवेति यत्प्रतीयत इति। (भा)

स लौकिकोऽर्थ इति शेषः॥

यद्यपीति। (कै)

एवं च "स्वस्मात् पदार्थाद्" इत्यनुपपन्नं सर्वस्यापि स्वपदार्थत्वात् प्रच्युतिश्चाऽनुपपन्नेति भावः। त्यागेनास्तीति चार्थान्तरग्रहणाऽभावस्याऽप्युपलक्षणम्॥

प्रसिद्धिवशादिति। (कै)

लोकप्रसिद्धैव तत्र स्वपदार्थत्वव्यवहारस्तेषामेवास्य[redacted]ऽर्थस्त्यक्तोऽप्रसिद्धस्य गृहीत इति प्रसिद्धा भाष्ये प्रच्युत्यङ्गीकारावुक्तौ इति भावः। वस्तुतो न प्रच्युत्यादिकमित्याह

तत्त्वत इति॥ (कै)

सादृश्यादिति। (कै)

अर्थभेदाच्छब्दभेद इति पक्षे इदम्। एकशब्दत्वे त्वभेदादिति बोध्यम्। वस्तुतः प्रच्युत्यङ्गीकारौ तयोरर्थयोर्बोधाविषयत्वबोधविषयत्वे एव न तु मुख्याविति बोध्यम्॥

पदार्थविपर्यासकृदिति। (कै)

लोके शब्दविशेषणकार्थप्रतीतिः शास्त्रेऽर्थविशेषणकशब्दस्य।[1]इति शब्दसमभिव्याहारे विपरीतमिति विपर्यासः। भाष्येऽपि "स्वस्मात् पदार्थात् प्रच्युत" इत्यस्य विशेषभूतादिति शेषः।

---

१ इति समभिव्याहारे। क। ग॥

अन्यथार्थप्रतीतेश्शब्दानामिश्लिष्टताया अभावेन एतदसङ्गतिः स्यादिति दिक् ॥ इति करणस्याऽर्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह

**समान इति ॥ (कै)**

**प्रत्यग्रेति। (कै)**

यद्यपि नचेह वयं विभाषा ग्रहणेन सर्वादीन्यभिसम्बध्नीम इति भाष्यपर्य्यालोचनया सर्वादिविशेषणत्वलाभात् प्रत्ययत्वं समासविशेषणमयुक्तं तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो नवपुराणत्वाऽसम्भवादुदाहरणपरभाष्याच्च तत्र [१]"सर्वादीनि" इत्यनेन तद्घटितसमासो लक्षणीय इति भावः ॥

**तन्निमित्त इति। (कै)**

लक्षणयेत्यर्थः ॥

**तदा संज्ञेति। (कै)**

[२]"न बहुव्रीहौ" इति निषेधे प्राप्ते इदं नित्यार्थं स्यादिति भावः ॥ भाष्ये

**अचिरकृतायामिति। (भा)**

तस्यां बोध्यायामित्यर्थः ॥

**संप्रत्ययः स्याद् (भा)**

इत्यस्य संज्ञाया इति शेषः ॥ ननु प्रदेशे [३]"विभाषा दिग्"

---

१ अ १। पा १। सू २७। २ अ १। पा १। २९ ॥
३ अ १। पा १। सू २८।

इत्यादौ न नवाशब्द उच्चारितो "नवेति विभाषा" इति सूत्रे तु न किं चिद्विधायोक्तं पूर्वोत्तरशास्त्रचर्य्याणास्य संज्ञासूत्रत्वादित्यत आह

प्रदेशेति ॥ (कै)

इयं संज्ञेति। (कै)

"नवेति विभाषा" इत्येतत् संज्ञासूत्रार्थं इत्यर्थः ॥ "कार्य्याणि" सर्वनामसंज्ञादीनि ॥ "नवार्थम्"। नवाशब्दार्थम्। विभाषा-शब्दस्याऽर्थसंज्ञात्वात्। क्वचित्तु तथैव पाठः॥ भाष्ये "न वा इत्युच्यते" इत्यस्य तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः ॥

प्रतिषेधवाचिन इति। (भा)

प्रतिषेधवाच्ययं शब्द इति प्रत्ययो भवतीत्यर्थः ॥

न त्विति। (कै)

एवं च प्रदेशानुगुण्येन प्रकृतसूत्रेऽपि न [1]प्रत्ययवाचिनो ग्रहण-मित्यर्थः ॥

भिन्नेति। (कै)

अग्रे "समानलिङ्ग" इति दर्शनादिशब्दो भिन्नार्थ इति भावः ॥

न त्विति। (कै)

अव्ययत्वादिति भावः ॥

नैवेति। (कै)

भाष्ये "क्वचित् क्रियत" इति "एतच्चैव न जानीम" इत्यन्वयः।

---

१ प्रत्ययवाचिनः। क ॥

नवा विधीत्युक्तवतोऽयं ग्रन्थः । एवं च शास्त्रे समानलिङ्गनिर्देशस्य क्वाप्यभावान्न क्वापि प्रत्ययार्थावगतिरित्याशयः ॥ ननूभयविधान्वय-संभवे कथमन्यतरनिर्णय इत्यत आह

तत्रेति ॥ (कै)

अप्राप्ते यवागूभोजन इति । (कै)

अकर्त्तव्यत्वेनाऽवगते इत्यर्थः । प्ररोचनायेति शेषः ॥

न तु तदङ्गमिति । (कै)

भवतिक्रिया[१]कर्त्तुरुद्देश्यरूपं तदङ्गमित्यर्थः ॥ भाष्ये

विभाषा भवन्तीति । (भा)

अत्र विभाषेत्यग्रे सर्वनामानीति शेषः ॥ "भवन्ति विभाषा" इत्यस्य सर्वनामानीत्यादिः ॥ ननु दिक् समासेऽपि नित्यनिषेधे "न बहुव्रीहौ" इति सामान्यसूत्रेणैव सिद्धे "विभाषा दिग्" इति सूत्रस्य वैयर्थ्यापत्तिरित्यत आह

परिहारान्तरेति । (कै)

इति सिद्धे "विभाषा दिग्" इत्यसम्बद्धं स्यादित्यर्थः ॥ ननु प्रसक्तस्य निषेधेऽभाव एव दृष्टो न तु विकल्पोऽत आह

प्रतिषेधादिति । (कै)

[२]"विभाषा श्वेः" इत्यादौ पिद्विषये विधेरनुमानं करिष्यत इत्यर्थः । निषेधानुपपत्तिकल्पितशास्त्रेण प्रसज्येति वार्त्तिकार्थ इति

---

१ कर्त्रुद्देश्यरूपम् । क । ख । ग । इ ॥

२ अ ६ । पा १ । सू ३० ॥

भावः। एवं च षोडशीग्रहणाग्रहणवदेकविषयत्वादिकल्पसिद्धिरिति तात्पर्य्यम् ॥

**तत इति।** (कै)

अन्यथा [1]कल्पितशास्त्रं व्यर्थं स्यात् प्रक्षालनाद्धीति न्यायविरोधाच्च निषेधार्थमेव तदिति भावः ॥ ननु विकल्पो विरुद्धविषय एवेति किमुच्यते "विप्रतिषिद्धं त्वि"ति अत आह

**एकेति।** (कै)

युगपदिति शेषः ॥ विप्रतिषेधोपपादकं भाष्यम्

**अच नेति॥** (भा)

**प्रसजति।** (भा)

भावमिति शेषः॥ "प्रसज्यते" इति प्रसङ्गो विधिः "प्रतिषेधविषयाद्" इत्यस्य कालविशेषविशिष्टात्ततोऽन्यत्र तत्रैव कालान्तरविशिष्टे इत्यर्थः। निषेधसामर्थ्यलभ्योऽयमर्थः॥ सामर्थ्यात् प्रतिषेधविषयात् अन्यत्र विधिरित्युक्ते यत्फलितं तदाह

**प्रतिषेधसामर्थ्याच्चेति॥** (भा)

इदमपि पूर्ववद्व्याख्येयं तद्ध्वनयन्नाह

**पर्य्याय इति॥** (कै)

भाष्ये

**याहि प्राप्ते इति।** (भा)

केवलोभयत्र विभाषारूपा वेत्यर्थः ॥

---

१ अन्यथा कल्पितं शास्त्रम्। क। ड॥

कृतसामर्थ्ये इति । (भा)

"पूर्वेणैव" । कृप्तशास्त्रेणैव । विधिः कृतसामर्थ्यो विहितविधि-कल्पकनिषेधीयशक्तिक इत्यर्थः । एवं च तत्र विधिकल्पनाभावात् प्रतिषेधमात्रप्रत्ययः स्यादिति भावः । एतद्भाष्यादपि सामान्यशास्त्र-प्राप्तनिषेधे विकल्पं वदन्तो मीमांसकाः परास्ताः ॥ "महत्याः संज्ञाया" इति भाष्येण संज्ञैव न कर्त्तव्येति विवक्षितं न तु लघ्वी कर्त्तव्येतीत्याह

यदि होति ॥ (कै)

समुदायस्येति । (कै)

प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः ॥

विकल्पप्रतिषेधाविति । (कै)

प्राप्तविभाषाविषये इत्यर्थः ॥

विकल्प एवोपेति । (कै)

उभयोः संज्ञाकरणेऽपि निषेधस्यान्वयायोग्यत्वाद्वितीयस्यैवोप-स्थितिरिति भावः । अत्राप्राप्तविभाषाशब्देन केवलाऽप्राप्तविभाषो-च्यते ॥

युगपदिति । (कै)

अनवगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः ॥

भावाभावाविति । (कै)

इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ ॥ भाष्ये

पूर्वस्योत्तरेणेति । (भा)

पूर्वस्य प्रतिषेधस्य उत्तरेण विकल्पेन। बाधश्चात्र न निषेध-प्रवृत्तिप्रतिबन्धः किन्तु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रति-बन्ध इति बोध्यम्॥ नन्वेवमपि पूर्ववाक्येन नशब्द एवादेशः स्यात् तत्रार्थपरत्वे मानाभावादत आह

**इति करण इति।** (भा)

एवं चोभयत्रापीतिशब्दान्वय इति भावः। एवं चार्थद्वयक-संज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वय इति भावः। एवं च केवलप्राप्तविभाषायामुभयत्र विभाषायां च क्रमेण निषेधविकल्पयो-रुपस्थितिः। शुद्धाप्राप्तविभाषायां तु निषेधस्यान्वयायोग्यत्वाच्छुद्ध-विकल्पोपस्थितिरिति तात्पर्य्यम्। पूर्वं विकल्पाप्रवृत्तौ हेत्वन्तरमाह

**आनुपूर्व्यां चेति॥** (कै)

**अनुपयोगादिति।** (कै)

"उभयगतिरिह" इत्युक्तेर्लौकिकगृहीतविकल्पशक्त्यैव सिद्धेरिति भावः॥

**पक्षे निवृत्तिरिति।** (कै)

एवं च तत्र निषेधतात्पर्य्यकतयैव प्रवृत्तिरिति भावः॥

**अप्राप्तेति।** (कै)

तत्र विधि तात्पर्य्यकतयैव प्रवृत्तिरिति भावः॥

**पित्स्वेवेति।** (कै)

तत्राप्राप्तेरिति भावः॥ एकस्योभयत्र तात्पर्य्यन्तु न सम्भवती-त्याशयः। भावतात्पर्य्यकतालोभेन पिद्विषयतैव स्यादिति तत्त्वम्।

अस्योभयत्र विभाषाविषयत्वं भाष्ये [1]"विभाषा श्वेः" इत्यस्यैवोदाहरणदानेन बोधितम्। एवं च तदर्थमावश्यकेऽस्मिन् अन्यत्रापि लघ्वाशास्त्रगृहीत सङ्केतेनैव बोधाच्च या हि प्राप्ते विभाषा तत्रोभयमुपस्थितमित्याद्युक्तभाष्यविरोध इति दिक्॥ "साधुत्वप्रतिपादनाच्छास्त्रस्येति" पाठः। "शास्त्रस्य" इतिकर्त्तुः शेषत्वे षष्ठी। [2]क्वचित्तु साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्येति पाठः॥

## प्राधान्यादिति। (कै)

यदिह परिनिष्ठितं तत्साध्विति [3]अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः॥

## तदङ्गभूतानामिति। (कै)

तदुद्देश्यभूतानामित्यर्थः॥ भाष्ये

## यस्य विभाषा क्रियत इति। (कै)

यत्सम्बन्धेन विभाषोच्यते इत्यर्थः॥

## समासस्यैव हीति। (भा)

हि यतः समासो विभाषेत्युच्यते तत्र समासोद्देशेन साधुत्वविधानात् तस्यैव विकल्पः स्यादिति भावः। साधुत्वं च जातिविशेषः। समासप्रकरणीयविभाषाधिकारस्य भाष्ये प्रत्याख्यानादाह

## [4]विभाषा श्वेरिति। (भा)

---

१ अ ६। पा १। सू ३०।

२ क्वचित्तु साधुत्वप्रतिपादनार्थत्वादिति पाठः। क। ख। ग। ङ॥

३ अर्थापत्तिकल्प्य वाक्यस्यैव। क। ग। ङ॥

४ अ ६। पा १। सू ३०॥

साधुत्वविकल्पे दूषणमाह भाष्ये

**नचैवेत्यादिना ॥** (भा)

तद्व्याचष्टे

**सर्वदा त्विति।** (कै)

सादृश्याद् असाधुत्यागपुरस्सरं साधूपादानं दुष्करमित्यपि बोध्यम् ॥ तच्च साध्वनुशासन इत्युक्त्या शब्दनित्यत्वपक्ष एवायं दोषो न तु कार्य्यत्वपक्षे इत्युक्तं तदुपपादकं "यस्य पुनः" इत्यादि भाष्यम्। प्राधान्यात् साधुत्वस्यैव विकल्पः स्यादिति यदुक्तं तत्राह

**साधुत्वस्येति।** (कै)

संज्ञायाः श्रुतत्वेन साधुत्वस्याऽश्रुतत्वेन श्रुतस्य श्रुतेनैव सम्बन्धस्य न्याय्यत्वात् प्रयोगाऽसमवायित्वाभादिस्थले श्रुते विधेयत्वस्याऽवश्य-कत्वाच्चेत्यपि बोध्यम् ॥

**पशुत्वेति।** (कै)

साक्षात् श्रूयमाणेऽपि अयोग्यत्वाद्यदा न सम्बन्धस्तदा किं वक्तव्यमश्रूयमाणेऽयोग्ये सम्बन्धो नेतीत्यर्थः ॥

**अन्यथेति।** (कै)

[१]समर्थसूत्रे ॥ "मुख्यः" प्रधानः ॥

**अभिन्नार्थत्वमिति।** (कै)

एवं च तदर्थे कश्चित् साधुत्वेनाऽन्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्यान्यस्य निवर्त्तकः स्यादिति तस्यापि साधुत्वार्थं विभाषा-

१ अ २। पा १। सू. १ ॥

धिकार आवश्यक इति भावः। वाक्ये व्यपेक्षा परस्पराऽऽकाङ्क्षा-रूपा पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो वृत्तिविषयः। एवं च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्याऽनुज्ञानाय विभाषाग्रहणं किन्तु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यं न च वृत्तौ संज्ञायाः स इष्यते तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषण-मिति तत्रोक्ततात्पर्य्यमित्यविरोध इति भावः॥ भाष्ये

**समाससंज्ञा** (भा)

इत्यस्य तद्विषयैकार्थीभाव इत्यर्थः॥ ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य सप्तम्यर्थवृत्तेरन्वाचयशब्देनातादृशेन कथं द्वन्द्व इत्यत आह

**युगपद्भाव इति।** (कै)

कार्य्येषु शब्देषु यौगपद्यान्वाचयविषये तेषां यौगपद्यं युगप-त्प्रयोगः प्राप्नोतीति वार्त्तिकाक्षरार्थः॥ भाष्ये "युगपद्वचनता" इति बहुव्रीहेस्तल्। "अन्वाचयेन" इत्युक्त्वा "ढक् च" इति समुच्चयोदाहरणमसङ्गतमित्यत आह

**समुच्चय इति॥** (कै)

**स्वरितत्वेन चेति।** (कै)

यथा [1]"काश्यादिभ्यष्ठञ्ञिठौ" इति वर्त्तमाने [2]"वाहीक-ग्रामेभ्यश्च" इत्यत्र॥ नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः। रेखागवयस्य [3]"आद्य-न्तौ" इति सूत्रे भाष्ये एव वक्ष्यमाणत्वात्॥

---

१ अ ४। पा २। सू ११६॥ २ अ ४। पा २। सू ११७॥
३ अ १। पा १। सू ४६॥

## व्यवहितेऽपीति। (कै)

लोके तथा दर्शनादिति भावः॥

## आनन्तर्य्यमारोप्येति। (कै)

अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिरत एव [1]"व्यवहिताश्च" इति सूत्रं सार्थकमिति भावः॥ शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह

## निर्दिष्टग्रहणं त्विति। (कै)

तुश्चार्थे॥ [2]"छन्दसि परेऽपि" [3]"परश्च" इत्यादावपि उत्तराङ्ग-विकल "तस्मात्" इति परिभाषाः प्रवृत्तेरिति भावः॥

## कथं तर्हीति। (कै)

[4]सरूपसूत्रे इति भावः॥

## एकाऽऽकृतीति। (कै)

आनुपूर्वी हि एकाऽऽकृतिरत्र॥ भाष्ये "नापि ब्रूम" इत्यस्य नैव ब्रूम इत्यर्थः॥ अर्थोऽपि समुदायस्येति शङ्कमानं प्रत्याह

## तव्यदिति। (कै)

प्रत्ययादिसंज्ञा [5]"तव्यत्तव्यानीयर" इति बहुवचननिर्देशात् प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः॥

---

१ अ १। पा ४। सू ८२॥ २ अ १। पा ४। सू ८१॥
३ अ ३। पा १। सू २॥ ४ अ १। पा २। सू ६४॥
५ अ ३। पा १। सू ९६॥

पुनः पुनः संकीर्त्तनमिति । (कै)

अत्र पुनः पुनरित्यस्योपयोगश्चिन्त्यः । एकैकस्मिन् शास्त्रे तदभावाच्च । तस्मात् संकीर्त्तनमात्रमेवात्र शीलनमिति बोध्यम् ॥ तेन यत्कार्य्यमुच्यत इति वार्त्तिकाक्षरार्थः । अत एवाग्रे भाष्ये "तत्कीर्त्तने च" इत्येवोक्तम् ॥ तद्विषयत्वमुपपादयति

सर्वप्रयोक्तॄति । (कै)

इको ह्रस्वो भवति तत्प्रयोक्तृत्वं "गालवस्य" इत्यादि क्रमेणार्थः ॥
भाष्ये

प्राक्षु चैवेति । (भा)

प्राग्देश एव क्विन्प्रयोगः स्यादित्यर्थः ॥

अनादित्वादिति । (कै)

एवं च गालवातिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासम्भवः । किं चैतत्पक्षे शास्त्रं रेखागवयन्यायेन कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमाऽसम्भव इति भावः ॥

शास्त्रस्य प्रामाण्यमिति । (कै)

एवं च पूजार्थमित्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः ॥
तदेवाह

शास्त्रस्य हीति ॥ (कै)

भाष्ये

देशग्रहणं चेति । (भा)

चेनाचार्य्यग्रहणम् । देशग्रहणस्य पूजार्थत्वन्तु वक्तुमशक्यं देशस्य स्वर्तृत्वाद्यभावादिति भावः ॥

स्थिरं भवतीति । (कै)

ततश्च देवकीर्त्तौ तद्देशीयानां स्वरवत्त्वानमित्यर्थः । तेन च पाणिनेरपि तदिति भावः ॥ ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाभावविशिष्टस्य साधुत्वबोधनं न स्यात् तत्पक्षे सम्रघूपायेन साध्वसाधुविवेकाय शास्त्रमिति चेन्न । गालवः स्मर्त्ता नान्य इति स्मृत्यन्तराऽनुसन्धानद्वारेण विकल्पसिद्धेः । वा ग्रहण एव कर्त्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये "पूजार्थम्" इत्युक्तम् ॥ भाष्ये

तत्कीर्त्तने चेति । (भा)

आचार्यदेशकीर्त्तने चेत्यर्थः । यस्य कार्य्याश्शब्दास्तस्येति शेषः । तदेवाह

इदानीमिति ॥ (कै)

प्रयुक्तमिति । (कै)

कृतमित्यर्थः ॥

नित्यपक्षे त्विति । (कै)

कार्य्यपक्षे त्वेवं वक्तुमशक्यं यतो गालवेन कृतोऽतः कर्त्तव्यो नान्येन कृतोऽतो न कर्त्तव्य इति । अन्येन कृतस्य पुनः करणवैयर्थ्यात् । न ह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाकृतस्याकरणम् । तादृशस्यैव करणात् । एतेनान्येन कृतस्यानुवादोऽन्याकृतत्वबोधनद्वारा विकल्पबोधक इति परास्तम् । पाणिनिकृतानामपि [1]"पचो व" इत्यादीनामन्याकृतत्वेन तेषामपि विकल्पा-

---

[1] अ ८ । पा २ । सू ५२ ॥

पत्तेश्च तस्मात् कार्य्यवादोऽसङ्गत इति दिक्॥ ननु लोकतोऽनित्यत्वार्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह भाष्ये

**आचार्य्यः खल्वपीति ।** (भा)

एवं च [१]"ह्रक्रोरि"त्याद्युभयत्र विभाषायां यथा तत्र तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थः सूत्रेणेति भावः॥

**वाशब्दो विकल्पे इति ।** (कै)

यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वम् । तच्चापीतेः सम्बन्धात्। न च पदजन्यपदार्थोपस्थित्यभावेनान्वयासम्भवः। विकल्पवाचिपदस्य तदर्थे लक्षणाभ्युपगमात् । एवं च लक्षणा तात्पर्य्यग्राहकमिदं सूत्रम्। अर्थे न संज्ञात्वमिति चेत्तदर्थाचिशब्दमात्रस्य संज्ञात्वमस्तु इतिशब्दसम्बन्धसामर्थ्यादिति । तन्न । एकस्याऽनेकसंज्ञायाः शास्त्रेऽदर्शनात् । "अनाकृतिः संज्ञा" इति वृद्धिसूत्रस्य भाष्यविरोधाच्च॥

**तेनाकृतीति ।** (कै)

तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्याद् निषेधमुखेन प्रवृत्तौ कित्येव स्याद् न तु सर्वत्रेति सूत्रं कर्त्तव्यं सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानस्सर्वत्र सिध्यतीति भावः॥ प्रत्याख्यानाशयमाह

**व्यक्तिपक्षे त्विति ।** (कै)

क्वचिद्विधिमुखेनेत्यन्वयः॥

---

[१] अ १। पा ४। सू ५३॥

## किं चिल्लक्षणम् । (कै)

उभयत्र विभाषारूपम् । उत्तरत्र तु क्वचित् प्रतिषेधमुखेनेत्येव पाठः ॥ परे तु आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम् । उत तज्जात्याश्रययत्किञ्चिद्विषयम् । नाद्यः । सूत्रारम्भेऽपि नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किञ्चिद्विषयता वाघटितस्य सर्वविषयतेति तु दुर्लभम् । नान्त्योऽपि । "न ब्राह्मणं हन्याद्" इत्यादौ जातितत्त्वे सर्वविषयताया एव दृष्टत्वात् । किं च । तत्र विधिमुखप्रवृत्त्या पिद्विषयत्वं निषेधमुखप्रवृत्त्या किद्विषयत्वं वा इत्यत्र विनिगमनाविरहात् सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः । न च भावतात्पर्य्यकता पिद्विषयत्वे विनिगमिका । "विभाषोपयमने" इत्यादौ त्रिसंशयताऽनुपपत्तेः । भावतात्पर्य्यकतात्वेनाप्राप्तविभाषात्वस्यैव सम्भवात् । विप्रतिषेधशास्त्रबलात् तेष्वभावतात्पर्य्यकतापि स्यादिति चेत् प्रकृतेऽपि तुल्यम् । तस्मात् पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्य्यम् । किं च सूत्रे कृते त्रिसंशयाऽप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छिद्येतैव । लक्ष्यानुसाराद्प्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः । एतदेव ध्वनयन् त्रिसंशयाप्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेतिभ्रमनिरासायेतरयोरपि कथनमित्याहुः ॥

"इत उत्तरम्" इत्यस्य लाभे युक्तिमाह

## अधिकार इति ॥ (कै)

संशयत्रयस्य क्वाप्यभावादाह

**त्रिष्विति ॥ (कै)**

[1]"द्वन्द्वे च" [2]"विभाषा जसि" इत्युक्तोभयशब्दोदाहरणमसङ्गतमत आह

**उपलक्षणेति । (कै)**

"विभाषा जसि" इत्यस्य द्वन्द्वविषयतया "द्वन्द्वे च" संज्ञानिषेधेन सर्वनामसंज्ञो या प्राप्तविभाषात्वनिश्चयेन निषेधीयप्राप्तविभाषात्वनिश्चयेन वा त्रिसंशयत्वाभावादिति भावः । द्वन्द्व इत्यस्यासम्बन्धे पूर्वादीनां जसि विकल्पाऽऽरम्भो व्यर्थः स्यादिति तात्पर्य्यम् ॥ ननु तयशब्देऽपि कथं संशयः प्रथमादिसूत्रेण प्रत्ययमात्रस्य संज्ञा सर्वादिसूत्रेण तु उभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाऽप्राप्तविभाषात्वनिर्णयादत आह

**तत्रेति ॥ (कै)**

"तयशब्देन" इत्यस्य तदन्तविधिरित्यनेनान्वयः ॥ अन्वर्थत्वेन कथं तदन्तविधिरत आह

**केवलस्येति ॥ (कै)**

**सर्वनामत्वसम्भवात् । (कै)**

सर्वार्थबोधकत्वसम्भवात् । तथाच तस्य सर्वार्थबोधकत्वासम्भवात् सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः ॥

---

१ अ १ । पा १ । सू ३१ ॥ २ अ १ । पा १ । सू ३२ ॥

## पूर्वविप्रतिषेधश्चेति । (कै)

सर्वादित्वनिबन्धना संज्ञा जस्भिन्ने सावकाशा द्वितीयादिषु च विकल्प उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः। न च नित्या संज्ञाऽन्तरङ्गा। [१]अन्तरङ्गपरिभाषाया अप्रवृत्तेः। तथाहि। "नान्तरङ्गं बलीय" इत्यस्या अत्र विषयः। युगपत्प्राप्त्यभावात्। जसादेस्सर्वनाम्नो विहितत्वसम्पत्तये तस्याः पूर्वमेव प्रवृत्तिरस्यास्तु जसुत्पत्त्यनन्तरमिति स्पष्टमेव। ना"प्यसिद्धं बहिरङ्गमन्तरङ्ग" इत्यस्याः। अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात्। बहुशस्तथा सत्त्वात्। तदुत्तरमपि एतत् प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनम्। पूर्वादिष्विव त्रिसंशयत्वस्य भाष्योक्तस्याऽसङ्गत्यापत्तेश्चेति दिक्॥ भाष्ये

## तेन वेत्यादि । (भा)

तेन नित्ये प्राप्ते वा अन्यत्राप्राप्ते वेत्यन्वयः॥

## प्रत्ययान्तरेति । (कै)

एवं चोभयशब्देऽस्याप्राप्तेरप्राप्तविभाषात्वमेवेति भावः॥

## न विशेषित इति । (कै)

न प्रत्याहारघटक इतरव्यावर्त्तकः। समुदायानुबन्धस्यावयवानुबन्धत्वाभावादिति भावः॥

## प्रमाणे इति । (कै)

सदृशस्यैव तत्सन्निवेशे सत्त्वादिति भावः॥ भाष्ये

---

१ असिद्धं बहिरङ्गमन्तरङ्गे। परिभाषेन्दुशे – ५० ॥

ऊर्णोतेर्विभाषेति। (भा)

ऊर्णुधातोः कित्त्वविषये विभाषेत्यर्थः॥

वाक्यभेदेन (कै)

इत्यस्य विकल्प्यत इत्यनेनान्वयः। इदं सर्वं ङित्त्वकित्त्वयोरैक्याभिमानेन॥ किमर्थं तर्हि पुरस्तात्कृतमत आह

इडुपेति॥ (कै)

प्रकृते भाष्ये

अन्यद्वीति॥ (भा)

तद्व्याख्या

भेद इति। (कै)

तथाच त्रिसंग्रयत्नानुपपत्तिरिति भावः॥

गुणनिषेधस्येति। (कै)

यद्यपि ङित्किर्त्कार्य्याणि भिन्नानि बहूनि सन्ति तथापूर्णोतावन्याऽसम्भव इति भावः॥

इत्यत्रेति। (कै)

इत्यत्रैवेत्यर्थः॥

वाक्यभेदेनेति। (कै)

पृथक् पाठसामर्थ्यादिति भावः॥

परविप्रतिषेधे त्विति। (कै)

[1]"विज इट्" इत्यतोऽर्थाधिकाराद्वेडागम एव गृह्यत इति

---

१ अ १। पा २। सू २॥

पक्षे नित्यपि बोध्यम् । [1]"यमो गन्धने" [2]"विभाषोपयमने" इत्येते सिचः कित्त्वविधायके ॥

## यदेति । (कै)

गन्धनं सूचनम् । उपयमनं स्वीकारः । गन्धनाङ्गमिति बहुव्रीहिः । तत्र गन्धनपूर्वके स्वीकरणे यदि कित्त्वविकल्पः । ततः प्राप्तविभाषेत्यर्थः । परभूतासु [3]"दीपजन" इति भिन्नासु अप्राप्तविभाषासु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाप्राप्तविभाषात्वे बीजमिति बोध्यम् । [4]"वृत्तिसर्ग" इत्यात्मनेपदविधायकम् ॥ ननु मृगादीनामप्राणित्वादप्राणिनामिति नित्ये प्राप्ते इत्ययुक्तं मृगादिविषयके एव च चिसंशयत्वादत आह

## चर्मादीति ॥ (कै)

## प्रत्ययान्ता इति । (कै)

प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः । उषादयश्च तदेकदेशा न प्रत्ययान्तरूपा इति भावः ॥

## संज्ञा संज्ञिसम्बन्धार्थे इति । (कै)

अत एव क्यजाद्यन्तानां संज्ञासिद्धिरावृत्तौ तु गौरवमिति भावः । केचित्तु प्रत्ययान्तादित्यनुवृत्तौ उषादिभ्यः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तेभ्य एव स्यादिति प्राप्तविभाषा तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा निवृत्तौ परविप्रतिषेधे उभयत्रेति भाष्याशयः ॥

---

१ अ १ । पा २ । सू १५ ॥ २ अ १ । पा २ । सू १६ ॥
३ अ ३ । पा १ । सू ६१ ॥ ४ अ । पा ३ । सू ३८ ॥

**प्रत्ययान्ता धात्वन्तराणीति ।** (भा)

अस्यायं भावः । हलन्तेभ्यः आचारक्विपोऽनभिधानमेवेतरप्रत्ययान्तास्तु नोषादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ॥ "एकपरिहारः" कर्मस्थभावकत्वाऽभावरूपः ॥ ननु कर्त्तरीत्यनुवृत्तिर्व्यर्था कर्मणि भावे कर्मकर्त्तरि च परत्वात् [१]"चिण्भावकर्मणोः" इत्यस्य प्रवृत्तेरिति चेन्न । विप्रतिषेधत्वस्यार्थस्यैव स्फुटत्वायाऽनुवृत्त्या प्रदर्शनादितिदिक् ॥

**तृन्नादीनामिति ।** (भा)

[२]**आक्रोशे च** (पा)

[३]**संज्ञायाम्** (पा)

[४]**विभाषा तृन्नन्नतीक्ष्णशुचिषु** (पा)

इति सूत्रे इत्यर्थः ॥

**यद्यच्काविति ।** (कै)

[५]**अच्कावशक्तौ** (पा)

इत्यतस्तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः ॥ एतद्भाष्यविरोधाच्च तत्राच्कावित्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्य्यम् ॥

**यङ्लुकीति ।** (कै)

[६]"अचि विभाषा" इत्यत्र "यङि" इति वर्त्तते तत्रोभयोर्यङजाद्योरव्यवहितपरत्वासम्भवात् अतस्याचीत्यस्य परविशेषणत्वं

---

१ अ ६ । पा १ । सू ६६ ॥ २ अ ६ । पा २ । सू १५८ ॥
३ अ ६ । पा २ । सू १५९ ॥ ४ अ ६ । पा २ । सू १६१ ॥
५ अ ६ । पा २ । सू १५७ ॥ ६ अ ८ । पा २ । सू २१ ॥

यङीति विषयसप्तमी अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः। तत्र विभाषारम्भसामर्थ्याद् यङ्लुकः पूर्वं [1]"ग्रो यङी"ति न भवति। [2]"न लुमता" इति निषेधानित्यत्वेन पृथगस्लोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः। यङीत्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव [3]नित्यलत्वं समुदायलुक्यपि "न लुमता" इति निषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः। उभयत्रविभाषात्वे त्वियमुपपत्तिः। "ग्रो यङि" इत्येतत्प्रति प्रकरणे प्रकरणमसिद्धमिति विभाषाया असिद्धत्वाभावः। लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः। "अन्तरङ्गानपि" इति न्यायेन लुकस्तत्प्रयोजकाच्प्रत्ययस्य च पूर्वम्प्रवृत्तेः। न च लुकि "न लुमता" इति निषेधे यङ्परत्वाभावाद् "ग्रो यङि" इत्यस्याप्राप्तेः कथमुभयत्र विभाषात्वमिति वाच्यम्। दत्तोत्तरत्वादिति दिक्॥

## अथ त्विति। (कै)

तथा च स पच एतद्भाष्यविरुद्ध इति भावः। वस्तुतो द्योतकत्वपचेऽपि "व्यतिलुनीते" "गार्ग्यायणी"त्यादौ द्योतकसमुच्चयस्य दावित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनाऽत्राप्यात्मनेपद[4]प्रवृत्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत्॥ भाष्ये

## [5]गतिबुद्धीति (पा)

---

१ अ ८। पा २। सू २०॥ २ अ १। पा १। सू ६३॥
३ नित्यं लत्वम्। क। ग॥ ४ प्राप्तिरस्तीति। क। ग। ङ॥
५ अ १। पा ४। सू ५२॥

**नित्ये प्राप्ते इति।** (भा)

नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः॥

**तत्र विपूर्व इति।** (कै)

विहरति ग्रामम् इत्यादौ गच्छतीत्यर्थाऽवगमादिति भावः॥ भाष्ये

**अप्राप्ते हरति भारमिति।** (भा)

ननु गत्यर्थत्वादत्रापि प्राप्तिरस्त्येवेति चेन्न। प्रापणार्थत्वेऽपि गत्यर्थत्वाभावस्य [१]"न गतौ"ति सूत्रे वच्यमाणत्वात्॥

[२]**दैवयज्ञीत्यादीति।** (कै)

अनार्षयोरित्यनुवृत्त्यादिनाऽत्रापि सन्देहसम्भव इति भावः। आदिना [३]"विभाषा पुरुषे" इति॥

**इति शिवभट्टसुतसतीगर्भजनागोजिभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम्॥**

---

१ अ १। पा ३। सू १५॥ २ अ ४। पा १। सू ८१॥
३ अ ६। पा ३। सू १०६॥

# इग्यणः सम्प्रसारणम् ।१।१।४५॥

लिङ्गेति । (कै)

प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञाया अन्यविभक्तिनिर्देशस्तु वर्णसंज्ञाया लिङ्गमिति भावः॥ ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह

[1] युगपच्चेति । (कै)

अनेकस्यार्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः॥ ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह

वाक्यार्थ इति । (कै)

पूर्वसूत्रादितीत्यनुवर्त्य "इग्यण" इति सम्प्रसारणसंज्ञमित्यर्था-दिति भावः॥ स्वं रूपमित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेति-समभिहारं विनार्थपरत्वाऽसम्भवादिति बोध्यम्॥ ननु यणस्थानि-कत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह

---

१ पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन् वाक्येऽनु-पादानादेकतरपक्षाऽऽश्रयणे सर्वकार्यासिद्धिप्रसङ्गात् प्रश्नः (भाष्ये) किमियमिति॥

भवतीति। (कै)

एवं चेत्भवनं वाक्यार्थ इति भावः॥

तत्प्रतिपादितमिति। (कै)

संज्ञयोपस्थितस्यानर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम्। नचैतदुभयमप्यस्तीति भावः॥

प्रतिपादयतीति। (कै)

[1]"ष्यङः सम्प्रसारणम्" इत्यादौ। "उच्चारितस्यैव प्रत्यायकत्वम्" इति [2]"अणुदित्" इति सूत्रस्थभाष्यविरुद्धमिदम्॥ [3]"वर्णविधिरि"त्यस्य वर्णविषयविधानमित्यर्थेऽसिद्धेरभावादाह

वर्णाश्रय इति। (कै)

सम्बन्धसामान्यषष्ठ्या समासो विधिरिति "कर्मणि क्तिरि"ति भावः॥ आदिना एकादेशः॥

वाक्यार्थेनेति।

क्रियारूपेणेत्यर्थः॥ [4]"नाप्येतयोरि"ति भाष्यं व्याचष्टे

तस्य चेति। (कै)

चोऽसम्भवादित्युत्तरं योज्यः॥ भाष्ये

एतयोः कार्य्ययोरिति। (भा)

पूर्वरूपदीर्घयोरित्यर्थः॥ स एव तावन्नास्तीति वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह

---

१ अ ६। पा १। सू १३॥ २ अ १। पा १। सू ६९॥
३ सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञाचेद् वर्णविधिर्न सिध्यति। भा॥
४ नाप्येतयोः कार्य्ययोः सम्भवोऽस्ति। भा॥

**कार्य्यपक्षे इति । (कै)**

अनेन भाष्येणातीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितं चेदं मञ्जूषायां नामार्थवादे ॥

**नित्यपक्षे त्विति । (कै)**

अनेन [1]"अथापि कथंचिद्" इत्यपि भाष्यं व्याख्यातम् ॥

**शास्त्रेति । (कै)**

सितमित्यादौ यण्स्थानिकत्वाभावेन शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः ॥ भाष्ये

**केनासाविति । (भा)**

केन मानेन यणः स्थाने इति ज्ञातः स्यात् ॥

**अनेन । (भा)**

सम्प्रसारणसंज्ञाविधायकेन शास्त्रेणासाविग् यणःस्थाने स्थाप्यत इत्यर्थः ॥ उभयोः संज्ञात्वमित्यर्थोऽसंभवी एकस्यैव संज्ञात्वादत आह

**[2]उभयोः संज्ञेति । (कै)**

---

१ अथापि कथं चिल्लभ्येत केनासौ यणः स्थाने स्यात् । भा ॥

२ विभक्तिविशेषनिर्देशस्तु ज्ञापक* उभयसंज्ञात्वस्य । ( वा ) । उभयोः संज्ञा ( षष्ठीतत्पुरुषः ) उभयसंज्ञा । तस्या भाव उभयसंज्ञात्वम् । तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयेणोभयोः संज्ञा सिध्यति । भर्तृहरिस्त्वाह –

---

* "ज्ञापकमुभयसंज्ञात्वस्य" इति पाठोऽप्यस्ति भाष्ये ॥

एकशेषस्य प्रतिपदमनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादन्याऽऽवृत्तेः क उपयोग इति चिन्त्यम् ॥ भाष्ये

यथा काकादिति । (भा)

अज्ञात एव काकत्वे तज्ज्ञातत्वमात्रेण तथा व्यवहारवदन्यापीत्यर्थः ॥ तत्र शङ्कते

नन्विति ॥ (कै)

"[1]अन्यत्र"। "[2]एको गोत्रे" इत्यत्र ॥

यदाऽनुपेति । (कै)

---

सम्प्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः ।
प्रविभागस्तथा सूत्र एकस्मिन्नेव जायते ॥
तथा द्विर्वचनेऽचीति तन्त्रोपायादिलक्षणः ।
एकशेषेण निर्देशो भाष्य एव समर्थितः ॥

तन्त्रं च शब्दतन्त्रम् अर्थतन्त्रं वेति मतभेदेन व्यवस्था बोद्धव्या । अर्थभेदाच्छब्दभेदे आद्यः पक्षः । शब्दैक्ये द्वितीयः । आद्येऽपि व्यञ्जकध्वनिमात्रभेदे व्यङ्ग्यैक्ये आवृत्तिरेवेत्यादि बोध्यम् । एवं च

तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम् ॥

इति मीमांसकमर्यादानुरोधो वैयाकरणैर्न कर्त्तव्यः । तस्य भाष्यादिसकलवैयाकरणग्रन्थविरुद्धत्वात् । मूलयुक्तिशून्यतयादुरुपपादत्वाच्च ॥

१ अन्यत्र चोक्तम् । तदेतत् — "येनैव हेतुनैकः काकस्तेनैव हेतुना द्वितीयस्य तृतीयस्य काको भविष्यति" । ४ । १ । ९३ ॥

२ अ ४ । पा १ । सू ९३ ॥

न उपजातो जात्यभिव्यञ्जकः संस्थानविशेष आकारविशेषो यस्येत्यर्थः॥ कथन्तर्हि तथा व्यवहार इत्यत आह

निर्वृत्तमिति। (कै)

एवं च तस्माज्जातत्वेनाऽवगते तच्छब्दप्रयोग उभयत्रापीति दृष्टान्तत्वोपपत्तिः। अन्ये तु काकाज्जातो यथा काकत्वाभिसम्बन्धात्काक एवं सम्प्रसारणाज्जातोऽपि सम्प्रसारणत्वारोपात् सम्प्रसारणमिति भाष्यार्थमाहुः॥

वाक्येष्विति। (भा)

स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः॥ योग्यक्रिया दर्शनादिरपीत्यत आह

प्रकरणेति। (कै)

तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः। पूर्वपरिहारे सम्प्रसारणपदस्य तज्जन्यवर्णे उपचारात् प्रयोगः॥ अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदस्तदाह

आक्षेप्स्यतीति। (कै)

आक्षेपोऽत्र बोधनमेव॥ भाष्ये

इत्येतस्य वाक्यस्यार्थे इति। (भा)

अत्र वाक्यपदं पदसमुदायपरम्॥ "इत्येतस्य" इत्येतदर्थकस्य सम्प्रसारणादुत्पन्नो यस्तस्मादिति सम्प्रसारणस्य यत्कार्यं तस्येति च वाक्यस्यार्थे इत्यर्थः॥ पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह

यथा ब्राह्मणेति । (कै)

एवं च यथा तत्र संख्याऽन्वयसंख्येयद्वारा तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः ॥ तदेवाह

तत्फलस्येति । (कै)

यथा पितृनाम्ना संकल्पितं द्रव्यं तस्याऽयोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः ॥ भाष्ये

एकत्वेनेति । (भा)

साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः ॥

नेदं तुल्यमिति । (भा)

नित्यशब्दवादेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः ॥

भाविसंज्ञेति । (कै)

सम्प्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेति भावः । अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः ॥

बुद्धीति । (कै)

तदयं सूत्रार्थः । यणः प्रयोगे प्राप्ते इक्प्रयुज्यमानः सम्प्रसारणसंज्ञ इति । तज्ज्ञानं च यजाद्युपदेशज्ञानमात्रेण "[१]वचिस्वपि" इत्येतज्ज्ञानं विनापि जातमिति नान्योऽन्याश्रय इत्यर्थः । "वचिस्वपि" इत्यादेस्त्वायमर्थः । एतत्सम्बन्धियण् प्रयोगे प्राप्ते इक्प्रयुज्य-

---

१ अ ६ । पा १ । सू १५ ॥

मानः साधुरितीति भावः। असाधोः साधुत्वं ब्रह्मणाप्युपपादयितुमशक्यमत आह

## प्रागिति। (कै)

एतदेव ध्वनयितुमभिमतस्येत्युक्तम्॥ ननु दुहेर्लिङि उत्तमपुरुषे लघेटि तस्य सम्प्रसारणत्वेऽदुहितरामित्यादौ "[1]हल" इति दीर्घः स्यादत आह

## यथासंख्येति। (कै)

एवं हि यथासंख्यार्थं लृकारोपदेशस्यावश्यकत्वे "लृकारोपदेशः किमर्थ इति" [2]"ऋलृक्" सूत्रस्थभाष्यासङ्गतिरिति चिन्त्यमिदम्। तस्मात् सम्प्रसारणस्येत्यादौ तद्भावितपरत्वाश्रयणान्न दोषः। ध्वनितं चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता। एतेन द्युभ्यामद्युवावित्यपि सिद्धम्॥

## अचः पश्चादिति। (कै)

समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चानङ्गत्वादित्यर्थः॥ तत्प्रत्याख्यानेऽप्याह

## वार्णेति। (कै)

आङ्गसुवङ्॥

---

१ अ ६। पा ४। सू २॥

२ प्रत्याहारसूत्रम् – २॥

# आद्यन्तौ टकितौ । १ । १ । ४६ ॥

[१] अपि त्विति । (कै)

एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि [२] "यथा संख्य" सूत्रमावश्यकमिति भावः ॥ "अभिन्नस्य" । अपृथग्भूतस्य ॥

सुतरामिति । (कै)

यत्र न साहित्यस्य नियमेन प्रतीतिः पृथगुपस्थितिश्च तत्रापि चेन्न क्रमव्यवस्था किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः । तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारण्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तन्त्रमिति तात्पर्य्यम् ॥

अन्तो निश्चय इति । (कै)

दर्शनस्यावसानं निश्चये सत्याकाङ्क्षाऽभावाद्भवतीति दृष्टान्तशब्देन निश्चय उच्यते इत्यर्थः ॥

एतद्दर्शनमिति । (कै)

निश्चय इत्यर्थः । एवं च यथासंख्यान्वयाभिप्रायेणेदृशप्रयोगो लोकेऽसाधुरिति भावः ॥ भाष्ये

---

१ लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति अपि तु शास्त्रेणैवेति-प्रदर्शनाय भाष्ये "समासनिर्देशोऽयमिति" ॥

२ अ १ । पा ३ । सू १० ॥

[1]अस्ति वेति (भा)

प्रश्नः। चपाठस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात्॥ भाष्ये

कौ पुनरिति। (भा)

यौ टकितौ आद्यन्तौ तौ किमागमावुताऽऽदेशाविति प्रश्नः॥

आगमावित्याहेति। (भा)

आद्यन्तपदसत्त्वादिति भावः॥

नित्येष्विति। (भा)

वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणकार्य्या आकाशवन्नित्या इतिमते इदम्॥

तत्र शब्दान्तरादिति। (भा)

प्रसक्तां शब्दान्तरबुद्धिं विहायेत्यर्थः॥ "[2]अनागमकानाम्" इत्यादेर्यद्यपि घुसंज्ञासूत्र आशय उक्त एव तथापि तं विस्मृत्य तत्कथमिति प्रश्ने एकदेशी साहचर्य्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह

संज्ञाधिकारोऽयमिति॥ (भा)

तत्र शङ्कते

---

१ किल्पुरशमुद्रापितभाष्यपुस्तके "अस्ति चेति" इति पाठोऽस्ति॥

२ "शुक्तं पुनर्यद्" इत्यारभ्य "अनागमकानां सागमकाः। तत्कथम्
सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥"
इत्याद्यन्तमुक्तम् भगवता घुसंज्ञासूत्र (१। १। २०) व्याख्यानावसरे॥

**यद्येवमिति ॥** (कै)

**उपलक्ष्यत इति ।** (कै)

एवं चानयोरित्त्वमेव नेति भावः ॥

[1]**आटजिति ।** (कै)

यद्यपि प्रत्ययविधौ नास्य प्रवृत्तिः षष्ठीत्यपकर्षणात् । अत एव "टाटिटन्" "[2]ऐकागारिकट्" इत्यादौ नास्य प्रवृत्तिः । तथापि टुकः पर्य्यायेणाद्यन्तता स्यादिति दोष इति बोध्यम् । "[3]आटश्च" इत्यादिभिस्तु टकारार्थादित्वोपलक्षिताकाराद्यनुवादेन वृद्ध्यादि-विधानम् ॥ भाष्ये

**संकीर्त्त्येते ।** (भा)

प्रथमत उच्चार्य्येते ॥

**उदाह्रियेते ।** (भा)

पश्चादुच्चार्य्येते इत्यर्थः ॥

**अन्तरतम इति ।** (कै)

अर्थतः श्रुतितश्चेति भावः ॥ ननु प्रथमातिक्रमे कारणाभावा दाद्युदात्तत्वेनेष्टसिद्धिरत आह

**तच्चेति ॥** (कै)

भाष्ये

---

१ अ ५ । पा २ । सू १२५ ॥
२ अ ५ । पा १ । सू ११३ ॥
३ अ ६ । पा १ । सू ९० ॥

तत्र वाक्ये एवेति। (भा)

त्रिपदे वाक्य एवेत्यर्थः॥ "[1]एवः" प्रसिद्धौ॥ एवं च तत् समानार्थकत्वात्तावत्प्रकारविशेषणत्वं सुलभमिति भावः॥

प्रत्याख्यानादिति। (कै)

यासुड् विधायकं च "यासुडुदात्तः परस्मैपदेषु" इति पाठ्यमिति न दोषः॥ "[2]आडजादीनाम्" इति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्य्यविषयीभूत इत्यतो घुसंज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह भाष्ये

अथवेति॥ (भा)

परिभाषापक्षेऽपीति। (कै)

परिभाषात्वेनाऽऽगमत्वपक्षेऽपीत्यर्थः॥ भाष्ये

तेनाऽयं विशेषेणेति। (भा)

"ततः पश्चादिकारम्" इत्यन्तेनेत्यर्थः। शब्दान्तरं तव्याद्यपेक्षया भिन्नसमुदायम् इतव्यादिरूपमित्यर्थः॥

प्रतिपद्यते (भा)

तत्त्वबुद्धिनिवर्त्तनेनेत्यर्थः॥

नित्यं पदमिति। (कै)

व्याकरणानिष्पाद्यमित्यर्थः॥

अन्वाख्यायत इति। (कै)

क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धि-

---

१ "एव" प्रसिद्धौ। इ॥ २ अ ६। पा ४। सू ७२॥

विपरिणामद्वारा प्रत्याय्यते इत्यादिग्रन्थश्च इवाचापि बुद्धि-विपरिणामाच्च नित्यत्वहानिः॥ तदेव दर्शयति

न तत्र कङ्कटा इति। (कै)

कङ्कटः सन्नाह उपरितनशृङ्खलत्रः॥ भाष्ये

[1]खदिरबर्बुरयोरिति (भा)

सामान्यमुपदिशतीत्यध्याहृतसामान्यापेक्षया षष्ठी॥ सामान्यमेव दर्शयति

खदिरबर्बुरौ गौरकाण्डाविति। (भा)

द्रव्यान्तरं कङ्कटाद्भिन्नं तदवयवकं समुदायमिति पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः। तत्र यथा गौरकाण्डत्वादिना खदिरेऽपि प्रसक्तां बर्बुरबुद्धिं कङ्कटवानित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते तथेहापि सामान्योपदेशात् सर्वत्र तव्यबुद्धौ प्रसक्तायाम् इड्बोधकविशेषणागमित्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यते इत्यर्थः। निरूपितं चैतद् घुसंज्ञासूत्रे। अत्र पक्षे वाचकस्यैवानया प्रणाड्या व्युत्पादनम्। उत्तरपक्षे तु कल्पितस्थानेन साक्षाद्बोधनं तेन च बोधकस्याखण्डस्य बोधनमिति भेदः॥

रूपार्थान्वयाभावादिति। (कै)

व्याकरणेन यस्य अषितिरूपस्यार्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाभावः स एधीत्यादौ व्यभिचारादित्यर्थः॥

---

१ खदिरबुर्बुरयोरिति। इ। "बुर्बुर" इति पाठः किल्हहररयमुद्रापित-भाष्यपुस्तकेऽप्यस्ति॥

असत्येति। (कै)

शास्त्रप्रक्रियाकल्पिता असत्या इत्यर्थः। यद्यपि सत्यगवयो रेखागवयवत्सावयव एव। अत्र कल्पिताऽवयवसदृशाऽनवयवानां तत्रान्वयात् तथापि सत्यमदमखण्डमेव। एधीत्यादौ शास्त्रकृत्-कल्पिताऽवयवसदृशानामनुपलम्भादित्येतत्पचनिष्कर्षः॥

सत्यस्य पदस्येति। (कै)

एवं च रेखागवयवत्कल्पिताऽनित्यपदविषयकं शास्त्रं तत्रागमेष्वपि न चतिर्न च तल्लोके प्रयुज्यमानं किन्तु तत्सत्याख्यमेव पदं तथेति भावः॥ "एतया" इत्यादि भाष्यस्यायमर्थः। "एतया" वक्ष्यमाणया-"ऽऽनुपूर्व्या अयं" पाणिनिः "शब्दान्तरं" बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयम् "उपदिशति" प्रतिपादयति। तत्राऽऽगम-बुद्धावपि न शब्दनित्यताहानिरिति॥ ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याऽप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह

प्रत्ययपरत्वस्यापीति। (कै)

अपिना स्थानेयोगत्वस्य॥ भाष्ये

युक्तं तत्रेति। (भा)

नुम्श्नमादीनां मित्त्वमनवकाशम्॥

उभयम्। (भा)

प्रत्ययसम्बन्धि टित्त्वं कित्त्वं च। एवं चागमटित्त्वकित्त्वयोरन-वकाशत्वात् प्रत्ययसम्बन्धिनस्तु सावकाशत्वा"द्येन नाप्राप्तन्यायेने"दं स्थानेयोगत्वस्यैवाऽपवाद इति भावः॥

**सति परत्वे इति ।** (कै)

टिद्न्तान् ङीब्विधानात् किति परे आलोपविधानाच्चेति भावः ॥ टित्परो भवतीति वचनाऽभावादाह

**ङीबर्थादिति ।** (कै)

यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात् "परस्य" इत्यस्य प्रवृत्त्या पर एव भविष्यति तथापि "मिद्चोऽन्त्यात्" इति साहचर्यादाद्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥ अभ्युपगम्याऽपि "परस्य" इत्यस्य परत्वात् प्रवृत्तिमाह

**टितः खल्वपीति ।** (भा)

एष परिहारो युक्तं "तत्र" इत्यादिनोक्तस्थितो यथा कथंचिद्भवेदपीत्यर्थः। तत्राऽसंभवरूपविरोध सद्भावात् । किति तु तदभावात् समावेशः स्यादिति भावः ॥ तत्र दोषमाह

[1]**नोङित्यादि ॥** (भा)

**अवयवत्वेति ।** (भा)

अन्तशब्दोऽवयववाचीति भावः ॥

**पूर्वोक्तम् ।** (कै)

"[2]कुतो नु खलु" इत्यादिनोक्तम् ॥

**अधिकम् ।** (कै)

---

१ अ ६। पा १। सू १७५॥

२ "कुतो नु खल्वेतत् टित्करणादयं परो भविष्यति" इत्यादिनात्रैवोक्तं भाष्ये ॥

ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् ॥ भाष्ये

**स्यादेव ह्यीति ।** (भा)

बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥

**परत्वादिति ।** (कै)

शब्दपरविप्रतिषेधात् । "आद्यन्तावि"ति सूत्रे च किदन्त इत्यस्य परत्वादित्यर्थः ॥ भाष्ये

**[1]गापोष्टगिति** (भा)

उपलक्षणम् । नदट्चोरडादीनाम् ॥ बाध्यसामान्यचिन्ताश्रयणेऽपि दोषाभावमाह

**सिद्धन्त्विति ॥** (भा)

**षष्ठ्यधिकार इति ।** (भा)

तत्राऽनुवर्त्येदं व्याख्येयम् । तत्रत्य षष्ठीपदं वात्राऽपकृष्टव्य-मिति भावः ॥

**प्राप्नोति ।** (कै)

एतदुपस्थितेः प्रागिति शेषः ॥

**नत्विति ।** (कै)

प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ॥ भाष्ये षष्ठीपदा-ऽसम्बन्धेऽपि समाधानमाह

**आद्यन्तयोर्वेति ॥** (भा)

---

१ अ ३ । पा २ । सू ८ ॥

अर्थशब्दःप्रयोजनवाची "षष्ठ्यर्थत्वाद्" इति बहुव्रीहिरित्याह

षष्ठ्याः प्रयोजकाविति। (कै)

षष्ठ्यर्थस्य प्रयोजकावित्यर्थः। षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम्। यद्यचावयवभूताद्यन्तरूपोऽर्थः स्यात् तदा तस्य निरूपकाकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थस्तद्बोधनाय च षष्ठीप्रयोगो न च सोऽस्ति तस्मादाद्यन्ताभावावगतिरिति भावः॥ भाष्ये

षष्ठ्या अभावे (भा)

इत्यस्य तदर्थाभावे इत्यर्थः। षष्ठीरूपशब्दाभावात्तदर्थाभावस्तदर्थाभावाच्चाऽऽद्यन्ताभाव इत्यर्थं मन्वानस्य शङ्का॥ भाष्ये

युक्तं पुनरिति। (भा)

"नार्थे"त्यत्र काकुः॥

शब्दभावेति। (कै)

षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः षष्ठ्यभावे तदर्थाऽभावादाद्यन्ताभाव इत्युक्तेरितिभावः॥ कारकत्वे बाधकमाह

सर्वेण। (कै)

रत्नादि शब्देन॥

सर्वस्य। (कै)

रत्नादिरूपस्य॥ भाष्ये समाधत्ते

अर्थनिमित्तक एवेति॥ (भा)

तद्व्याचष्टे

**अर्थ एवेति ॥** (कै)

**अनुमीयत इति ।** (कै)

कार्य्याभावेन कारणाभावोऽनुमीयते यथा नदीपूराऽभावेनो-परिदेशे वष्ट्यभाव इति भावः ॥ भाष्ये "आद्यन्तावर्थौ" षष्ठ्यर्थद्वारा षष्ठीप्रयोजकावित्यर्थः ॥ एवं कार्य्याभावात् कारणाऽभावानुमाने कारणाऽभावात्कार्य्यमपि नेति नियमयति भाष्ये

**तयोरभाव इति ॥** (भा)

ननु प्रत्ययविधावपि क्वचित् षष्ठी दृष्टेत्यत आह

[1] **चरेष्ट इत्यादि ॥** (कै)

**नत्विति ।** (कै)

एतत्सुचोपस्थानेनेति भावः ॥ तत्र हेतुमाह

**प्रत्ययेति ॥** (कै)

**आकाङ्क्षेति ।** (कै)

देशांश इत्यर्थः ॥

**अनर्थित्वात् ।** (कै)

एतदाकाङ्क्षाभावात् । अत एव धातोः प्रातिपदिकादित्यधि-काराऽनुग्रहो भवति। धात्वादिभ्यः परो गादिभ्योऽनन्तर इत्यर्थात् ॥

**न कार्य्यकालेति ।** (कै)

एतत्तत्त्वम् [2]"इको गुणवृद्धी" इत्यत्र निरूपितम् ॥ वस्तुत"स्था-

---

१ अ ३ । पा २ । सू १६ ॥ २ अ १ । पा १ । सू ३ ॥

श्रित एव परवचनात्सिद्धम्" इत्यस्यैव सिद्धान्त्युक्तित्वात् "नापवादत्वात्" इत्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥

---

# मिदचोऽन्त्यात् परः । १ । १ । ४७ ॥

प्रयोजनप्रश्नेऽपवादत्वाभिधानमसङ्गतमत आह

**किमिति ।** (भा)

किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः । उभयापवादत्वे बीजन्तु तत्र तत्र मित्त्ववैयर्थ्यरूपम्पूर्वसूत्र एवोक्तम् ॥ ननु [1]"नपुंसकस्ये"ति सूत्रे "झलच" इति पंचमीति क्व स्थाने योगत्वप्रसङ्गोऽत आह

**नपुंसकस्येति ।** (कै)

पंचम्यां हि [2]"तस्मादि"ति परिभाषोपस्थाने "यशांसि" "ज्ञानानि" इत्युभयोरप्यसिद्धिरिति षष्ठ्येवेति भावः ॥ भाष्ये

---

१ अ ७ । पा १ । सू ७२ ॥
२ तस्मादित्युत्तरस्य । १ । १ । ६७ ॥

[1] नैवेश्वर इति। (भा)

ईश्वरो वेदः। धर्मसूत्रं धर्मशास्त्रम्॥ भाष्ये "अपवादैः" इत्यस्याऽसम्भवे इत्यादिः। [2]क्वचित्तथैव पाठः॥ "बाध्यन्ताम्" इति लोट्॥ मग्ने मस्जेर्नात्पूर्वनुमि [3]"अनिदिताम्" इति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम्। अन्त्यात्चः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि तस्याऽसिद्धत्वान्नलोपधात्वाभावान्नलोपो न स्यादिति भावः। संयोगादिलोपस्तु "बहूनां समवधाने बहूनामेव संयोगसंज्ञा" इति पक्षे फलत्वेन बोध्यः॥ "मङ्क्ता" इत्यादि त्वनुषङ्गलोपाभावेऽप्युदाहरणमुक्तं भाष्ये।

---

१ अत्राह भगवान् महाभाष्यकारः। अस्ति हि सम्भवो यदयमचोऽन्त्यात्परस्स्यात् स्थाने चेति। एतदपि युक्तम्। कथम्। नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्त्यपवादैरुत्सर्गा बाध्यन्तामिति। किं तर्हि। लौकिकोऽयं दृष्टान्तः। लोके हि सत्यपि सम्भवे बाधनम्भवति। तद्यथा। दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति। सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्त्तकं भवति। एवमिहापि सत्यपि सम्भवे अचामन्त्यात्परत्वं * षष्ठीस्थानेयोगत्वं बाधिष्यते॥

२ "अपवादैः" इत्यस्याऽसम्भव इत्यादिः। क्वचित्तथैव पाठः। इत्युक्तं नागेशेन। परं तु नाद्यापि कस्मिंश्चिद्भाष्यपुस्तके एवंविधपाठो दृश्यते॥

३ अ ६। पा ४। सू २४॥

---

* "षष्ठी" इति बहुषु भाष्यपुस्तकेषु न दृश्यते॥

[1]उमीमावौणादिकौ॥ ननु च अन्त्यादचः परत्वं तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह

सङ्घातेति। (कै)

"अन्त्याद्" इत्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात् समुदायावयवसन्निधौ समुदायग्रहणस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वासम्भवाच्चेत्याशयः॥ नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो न इत्यत आह

न हीति॥ (कै)

परादित्वमिति। (कै)

वाचनिकमेव वर्णस्य वर्णावयवत्वं "[2]ङःसीति" धुडादेरिवेति भावः॥ "[3]अभक्ते" इति वार्त्तिकस्यैते न सिध्यन्तीति शेषः॥ नन्वभक्तत्वेऽपि नान्तमस्त्येवेत्यत आह

---

१ "भरूजाः" इति। भ्रजधातोरौणादिकेऽचि कृते गुणे रपरत्वे च जकारात् पूर्वं उमागमः॥ "मरीचयः" इति। चौरादिकमर्चधातोर्णिचि "अच इः" (उ – ४ पा। सू ५७८) इति इ प्रत्यये णिलोपे "मृकणिभ्यामीचिः" (उ–४ पा। सू ५०९) इत्यनेन चकारात् पूर्वं ईमागमः। भर्जिमर्च्योश्च (वा) भर्जिमर्च्योश्चाऽन्तात् पूर्वौ मिदवयवः॥ वस्तुतो निपातनात् सिद्धम्। भरूजाशब्दो "अङ्गुल्यादिषु" (अङ्गुल्यादिभ्यष्ठक। ५। ३। १०८) पठ्यते मरीचिशब्दो "बाह्वादिषु" (बाह्वादिभ्यश्च। ४। १। ९६)॥

२ अ ८। पा ३। सू २९॥

३ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः। वा॥

नान्तमङ्गमिति । (कै)

दीर्घविधावङ्गाधिकारादिति भावः ॥

गौरवापत्तिरिति । (कै)

प्रतिपत्तिगौरवापत्तिरित्यर्थः ॥

[1]त्री ते इति । (भा)

[2]"शेश्छन्दसि बहुलम्" इति शेर्लोपः । त्रीणि वाजिनानि तानि तानीत्यर्थः ॥

नुमेति । (कै)

व्यञ्जनाविद्यमानवद्भावस्तु [3]हल्स्वरप्राप्तौ स्वरोद्देश्यकविधिप्राप्तौ वा नान्यत्रेति भावः ॥ [4]सुपीति न तदन्तसप्तमीत्यभिमानेनेदम् ॥

उत्तरपदस्येति । (कै)

एवं च सर्वपक्षेष्वपीदमावश्यकमिति भावः । भगशब्दादिनौ तन्नकारः प्रातिपदिकाऽन्तो भवतीति भगिनीत्यत्राऽनुच्यमाने उत्तरपदस्येत्यस्मिन् णत्वप्रसङ्गः । भगिनीत्यत्र च ह्यन्तमुत्तरपदं न नान्तम् । सूत्रन्तु माषवापिणावित्यादौ चरितार्थमिति भावः ॥

स हीति । (कै)

नुम्विधावङ्गस्येत्यधिकारादित्यर्थः । एवं च माषवापाणीत्यादि-

---

१ अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् । भा ॥

२ अ ६ । पा १ । सू ७० ॥

३ हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् । परिभाषेन्दु ८० ॥

४ सर्वस्य सुपि ( ६ । १ । १९१ ) इत्यत्र ॥

सिध्यर्थं नुम्ग्रहणमिति भावः । समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्गभगिनीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रतिपत्तिसि- त्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् । द्विषन्तपादौ [१]"द्विषत्पर- योस्तापेः" इति खच् । खचि ह्रस्वः । [२]"अरुर्द्विषद्" इति मुम् ॥

## प्रसङ्गेति । (कै)

द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात् तकारस्य संयो- गान्तलोपे एकदेशविकृतन्यायेन द्विषमित्यस्य मान्तस्य पदत्वात् सिद्धोऽनुस्वार इत्यर्थः । वस्तुतस्तस्य न्यायस्याद्याप्यज्ञानात्तदनाश्रये- णेदम् । बहिरङ्गासिद्धत्वं चिपाद्यां नेति तत्त्वोक्तम् । "बहंलिहे" [३]"वहाभ्रे लिहः" इति खश् ॥ [४]"परादौ" इति वार्त्तिके [५]"श्नीभावेनकारप्रतिषेध" इति पाठः । "श्नीभावे' इत्यलुगार्षः । एते दोषस्थानानीति शेषः ॥ टजभावाय नपुंसकत्वाय चाह

## बहुव्रीहिरिति । (कै)

भाष्ये

## अग्ने त्री त इति ॥ (भा)

ननु परादिपक्षे [६]"नलोपः प्रातिपदिकान्तस्य" इत्यस्याप्राप्ता-

---

१ अ ३ । पा २ । सू ३९ ॥

२ अ ६ । पा ३ । सू ६७ ॥

३ अ ३ । पा २ । सू ३२ ॥

४ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारश्नीभावेनकारप्रतिषेधः ( वा ) ॥

५ श्नीभावेनकारप्रतिषेधाः । क । ग । ङ ॥

६ अ ८ । पा २ । सू ७ ॥

वपि [1]"ग्रीष्मछन्दसि बहुलम्" इत्यनेन नलोपः सिद्ध इति चेन्न। [2]निर्दिश्यमानपरिभाषयाऽ[3]लोन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् ॥

तद्भक्तत्वात्पदान्त इति । (कै)

[4]"यदागमा" इत्यस्य तद्गाहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति भावः ॥

न हि द्वयोरिति। (कै)

ननु संयोगान्तलोपे उक्तरीत्याऽस्यैवमस्य पदान्तत्वमितिचेदुक्तमेवैतत् ॥

न तदन्तस्येति । (कै)

पादन्तस्यानुच्चारणादिति भावः ॥

श्रुतिसन्निपातीति । (कै)

उच्चारितमितियावत् ॥

धानाशष्कुलिनीति । (भा)

समाहारद्वन्द्वे तद्भिन्नविवक्षायां द्विवचनम् ॥ तत्र पूर्वं ह्रस्वस्ततो नुमि नास्ति दोष इत्यत आह

नित्यत्वादिति । (कै)

---

१ अ ६ । पा १ । सू ७० ॥

२ परिभाषेन्दु — १२ ॥

३ अ १ । पा १ । सू ५२ ॥

४ परिभाषेन्दु — ११ ॥

इदं च पदस्य विभज्याऽन्वाख्यानपक्षे बोध्यम् ॥

### अनजन्तत्वादिति । (कै)

"अच" इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः ॥

### परत्वादिति । (कै)

यद्यपि कार्यैक्ये यौगपद्यसम्भवेन विरोधाऽभावे परत्वादित्यसङ्गतं तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वेन च न भाष्ये काचिदनुपपत्तिः । अत एव भाष्ये "नपुंसकोपसर्जनहस्वत्वम्" इति संश्लिष्टमेवोक्तमिति बोध्यम् ॥

### तथैवेति । (कै)

अनजन्तत्वादिति भावः ॥

### अन्तरङ्गो बलीयानिति । (कै)

[1]असिद्धं बहिरङ्गमित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं पूर्वजातबहिरङ्गासिद्धत्वबोधकं चेति भावः । अत एव भाष्येणाऽविरोधः । [2]अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः ॥ पञ्चारत्निशब्दे समाहारे द्विगुः । [3]प्रमाणे मात्रचो लुग्वा ॥

---

१ असिद्धं बहिरङ्गमन्तरङ्गे । परिभाषेन्दु–५० ॥
२ अकृतव्यूहाः पाणिनीयाः । परिभाषेन्दु–५६ ॥
३ अ ५ । पा २ । सू ३७ ॥

# एच इग्घ्रस्वादेशे।१।१।४८॥



विनापीति। (कै)

वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः॥ एच इति वक्तव्ये एङ इति अनुचितमत आह

एङ इति॥ (कै)

प्रश्लिष्टेति। (कै)

पांशूदकवदित्यर्थः। प्रश्लिष्टावर्णत्वादिनाप्यान्तरतम्यं गृह्यत इति भावः॥ ऐचोस्तदप्राप्तौ हेतुमाह

नत्विति। (कै)

ऐचौ लब्धौ न स्त एवेति भावः॥ सवर्णाकारनिवृत्त्यर्थ-मित्येतद्विषयभेदेन योज्यत इति बोध्यम्। कर्मधारयसमाहार-शब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशस्य वर्णत्वाभावादत आह

समाह्रियमाणावयवेति। (कै)

[१]मध्यमपदलोपी समास इति भावः॥ "मात्रावर्णस्य" इति भाष्यस्य मात्राकालावर्णादिसदृश ऐचोरवयव इति तात्पर्य्यम्॥

---

१ समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च। (वर्षो वर्त्तन। २। १। ६९। एतत्सूत्रस्थवार्त्तिकम्)।

मात्रावयव इति। (कै)

तत्सदृशस्यैतयोरवयव इत्यर्थः ॥ नन्वस्य नियमत्वेन ह्रस्वविध्येक-वाक्यतया कथं दीर्घप्राप्तिरत आह

स्वतन्त्रमिति। (कै)

नियमत्वेऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः ॥

भाव्यमानस्येति। (कै)

सम्बन्धसामान्ये षष्ठी ॥

दैवेति। (कै)

दैवदत्त्येतद्विषयक १"गुरोरनृत" इत्येतत्प्लुतविधावित्यर्थः। आदिनोदात्तादिस्वरसंग्रहः ॥ नन्वनेनदीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह

ह्रस्वस्येति। (कै)

अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाप्रवृत्तेरिति भावः ॥

एकवाक्यभावेनैच इति। (कै)

एकवाक्यभावो नामैच इगित्यस्य ह्रस्वे शेषभावो न तु परस्पर-वियोगाभावः। अन्वयस्तु वाक्यभेदेनैवेति एतदजानानो नोदयति।

---

समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानं कर्त्तव्यमुत्तर-पदलोपश्च वक्तव्यः। शाकभोजी पार्थिवः। शाकपार्थिवः। कुतप-वासाः सौश्रुतः। कुतपसौश्रुतः। यद्यपि पूर्वपदस्य तत्तदर्थे लक्षणायां विशेषणसमासेन सिद्धं तथापि मुख्यार्थे शाकप्रियपार्थिव इत्यादि निवृत्त्यर्थमिदम् ॥

१ अ ८। पा २। सू ८६ ॥

यदीति ॥ (कै)

उक्ताभिप्रायेणैवोत्तरयति

पूर्वं ह्रस्वेति । (कै)

एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवतीति भावः ॥

एकारस्येति । (कै)

यत्तु कण्ठताल्वादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्थानतमादेशप्रयोजकः किन्तु परावयव एवेति न दोष इति । तन्न । अवयवगतपरत्वमादाय विप्रतिषेधशास्त्राऽप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम् ॥ भाष्ये

[1]अर्ध एकार ओकारो वा न भविष्यतीति । (भा)

तयोरसत्त्वादिति भावः ॥ इतरस्तु सस्थानत्वाभावादिति हेतुरनेनोक्त इति मत्वा चोदयति ।

ननु चेति ॥ (भा)

सस्थानतराविति । (भा)

---

१ एङः सस्थानत्वादिकारोकारौ भविष्यतोऽर्ध एकारोऽर्ध ओकारो वा न भविष्यति ॥ ननु चैङः सस्थानतरावर्धैकारार्धौकारौ । न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥ ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते । "सुजाते ए अश्वसूनृते" । "अध्वर्यो ओ अद्रिभिः सुतम्" । "शुक्रं ते ए अन्यद्यजतं ते ए अन्यदिति" । पार्षदकृतिरेषा तत्र भवतां नैव लोके नान्यस्मिन् वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति ॥

कण्ठतालुस्थानमिति पक्षेऽपि तालुस्थानसाम्यसत्त्वमिति बोधयितुमुत्तरनिर्देशः ॥ स्वाशयं प्रकटयति

**न तौ स्त इति ॥ (भा)**

**तावेवेति । (कै)**

प्रत्याहारसूत्र इति भावः । एतच्च [1]"एओङ्" सूत्रे निरूपितम् ॥

**पार्षदेति । (भा)**

तत्र भवतां या पर्षत्सभा तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् ॥

**[2]भूयस एवेति । (भा)**

भूयोंऽशस्याऽऽन्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः ॥ ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वाऽसङ्गतेराह

**वास्तव्यत्वे इति । (कै)**

वास्तव्यः कर्त्तरि तव्यान्तः । कुलालकर्मारवर्द्धकिनापितरजकाः पञ्चकारुकी ॥

---

१ ए ओङ् । ३ । प्रत्याहारसूत्रम् ॥

२ अकारनिवृत्त्यर्थेनापि नार्थः । ऐचोश्चोत्तरभूयस्त्वात् । वा । ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसीमात्रेवर्णोवर्णयोरल्पीयस्य वर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा । ब्राह्मणग्राम आनीयतामित्युच्यते तत्र चावरतः पंचकारुकी भवति ॥

# षष्ठी स्थानेयोगा।१।१।४९॥

युक्तिरिति। (कै)

षष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः॥

निपातनादिति। (कै)

तृतीयान्तस्य समासे तृतीयाया लुक्यत्वमित्यर्थः। तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाभावादिनादेशेऽन्यस्य स्याद् लुग्बाधे मानाभावाच्च वृद्ध्यापत्तेश्च। अत एवेत्वं नोक्तमिति बोध्यम्। अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धनिरूपका न तु षष्ठ्यर्था इति न [1]मतुप्सूत्रस्य भाष्यविरोधः। अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः। न तु समानाधिकरणबहुव्रीहिः। तद्ध्वनयतोक्तं स्थाननिमित्तसम्बन्धेत्यर्थ इति॥ ननु आदेशविधौ स्थानशब्दाभावेन कथं स्थाननिमित्तः सम्बन्धोऽत आह

यथेति। (कै)

तथा च देवदत्तस्य यज्ञदत्त इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा तथा प्रदेशेषु स्थानपदाध्याहारेण वाक्यैकदेशन्यायेन वा बोध इति भावः॥

अर्थे चेति। (कै)

---

१ तदस्यास्त्यस्मिन्निति मतुप्। ५।२।९४॥

वाच्यकत्वसम्बन्धेनेति भावः॥ [1]"अस्तेः प्रसङ्गे" इत्यस्य व्याख्या "अस्तेः प्राप्तौ" इति॥

प्रयोग इति। (कै)

"स्वाभाविक" इत्यनुषज्यते शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यते इति भावः। रम् विधौ रोपधघटित-स्यार्थे रम्घटित इत्यर्थे न क्षतिरित्यन्ये वदन्ति॥

आरब्धे चेति। (कै)

तथातिप्रसङ्गकरणाय "व्याख्यानत" इत्येतदाश्रयणे तथैव सिद्धौ परिभाषेयं व्यर्थेति भावः॥ षष्ठीदण्डकपाठो ग्रन्थविशेषः॥ भाष्ये

षष्ठ्यर्था इति। (भा)

षष्ठीप्रयोजकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः। यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम्॥ [2]"एकशतम्" इति निर्णयेनाभिधाय पुनः सन्दिग्धाभिधानमयुक्तमत आह

शब्द इति॥ (कै)

वाशब्दो वाक्यालङ्कारे॥ भाष्ये

प्राप्नुवन्तीति। (भा)

तेषां सर्वेषां बोधः प्राप्नोतीत्यर्थः॥ "नियमेन"। प्रकृतसूत्रेण॥

शासिनेति। (कै)

---

१ अत्रैव कैयटे।

२ एकशतं षष्ठ्यर्था यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति। भा॥

तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याभावादिति भावः॥

भाष्ये

**अवयवषष्ठ्यादीनामिति।** (भा)

अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाप्राप्तिरिति वार्त्तिकार्थः॥

**दक्षिणो यस्येति।** (कै)

दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः॥

**तिर्यक्पथः।** (भा)

अनृजुमार्ग इत्यर्थः। पूर्वपश्चिमाऽन्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत्॥

**विशिष्ट इति।** (कै)

निर्णयविशिष्ट इत्यर्थः॥ अयमेव भाष्येऽव्यक्तशब्दस्यार्थः। अस्य पक्षे योगशब्दः कर्मव्युत्पत्त्या सम्बन्धिपरः॥ [1]"योगवति" इति पक्षेऽप्येवमेव। स्थानरूपसम्बन्धिनियमार्थत्वादस्य॥ [2]"विशिष्टा वा" इति वार्त्तिकं व्याचष्टे।

**अथवा किंचिदिति॥** (भा)

भाष्ये

---

१ अथवा योगवती योगा। का पुनर्योगवती। यस्या बहवो योगाः। कुत एतत्। भूम्नि हि मतुप् भवति। भा॥

२ विशिष्टा वा षष्ठी स्थानेयोगा। वा। अथवा किं चिल्लिङ्गमासज्य वक्ष्यामीत्थं लिङ्गा षष्ठी स्थानेयोगा भवतीति। भा॥

## कश्चिदेकदेशस्थ इति । (भा)

इदं च यथोद्देशपक्षे स्पष्टमेव कार्य्यकालपक्षेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः ॥ पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात् । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकं न तु तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीतिबोध्यम् । पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्थ इत्युक्तम् ॥

## तस्यानिर्देशार्थ इति । (भा)

अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः ॥

## यदेवाऽद इति ॥ (भा)

शब्दाधिकार आश्रयिष्यत इत्यर्थः ॥

## अनुमानमिति । (कै)

[1]"उच्चारित एव प्रत्यायक" इत्यणुदित् सूत्रस्थभाष्यविरुद्धमिदम् । तस्माद्बोद्धुरनुमानपूर्वकमुच्चारणमस्त्याचार्य्यस्येत्यर्थः । शास्त्रप्रणयनकालिकतत्तत्लिङ्गाऽऽसङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यस्ततोऽतिप्रसङ्गात् । पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गाऽऽसङ्गः कर्त्तुमशक्य इति भावः ॥ भाष्ये

---

१ कृत्स्नसंप्रत्ययादिति चेदुच्चार्यमाणसंप्रत्यायकत्वाच्छब्दस्यावचनम् । वा । कृत्स्नसंप्रत्ययादिति चेदुच्चार्य्यमाणः शब्दः संप्रत्यायको भवति न संप्रतीयमानः । तद्यथा । ऋगित्युक्ते संपाठमात्रं गम्यते नास्या अर्थो गम्यते ॥

सम्प्रत्ययमात्रमिति । (भा)

स्वरितत्वबलात् स एवोत्तरत्रेतिज्ञानमात्रमाचार्य्यकृतमित्यर्थः ॥ "आचक्रुम्" इत्यस्याचार्य्येणेति शेषः ॥

यदि नियम इति । (भा)

स्थाननिमित्तसम्बन्धार्थकत्वनियम इत्यर्थः ॥

अनेकं विशेष्यम् । (भा)

प्रसङ्गरूपमवयवरूपं च तत्राऽऽद्यं [1]"आ हावि"त्यादौ अन्यं तु भाष्ये एव वक्ष्यति ॥

तत्र न सिध्यतीति । (भा)

अवयवादिनिमित्तसम्बन्धार्थकत्वं न सिध्यतीत्यर्थः ॥

अणपीति । (भा)

[2]"हलः" इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमण्ग्रहणस्यापि सम्बन्धादिति भावः। तत्र [3]"अलोऽन्त्यस्य" इत्येकवाक्यतया अङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाण्रूपं सम्प्रसारणं तस्य दीर्घ इति सूत्रार्थः। तत्र "अङ्गस्य" इत्यस्य "आ हावि" त्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः ॥

स्थानेति । (कै)

तस्माद् "हलः" इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः ॥

---

१ अ ६। पा ४। सू ३५॥ २ अ ६। पा ४। सू २॥
३ अ १। पा १। सू ५२॥

विशेषावसाय इति । (कै)

तत्तदर्थव्यर्थकपदकल्पनयेति भावः ॥

आर्याः । (भा)

खशामित्रादयः ॥

यौनाः । (भा)

पिहलादयः ॥

[1]मौखः । (भा)

गुरुशिष्य भावः ॥

[2]सौवाः । (भा)

खलिङ्गादयः ॥

स्थाने अनन्तरे इत्यादि । (भा)

स्थानादिरूपसम्बन्धिसन्देह इत्यर्थः । आनन्तर्यमव्यवधानम् । सामीप्यं साधारणम् ॥

अन्तरङ्गत्वादिति । (कै)

स्थानशब्दोऽर्थवाची प्रसङ्गवाची वोभयथाप्यन्तरङ्गत्वं स्थानिवदादेश इतिज्ञापकमप्यत्र बोध्यम् ॥

निर्दिश्यमानमिति । (कै)

उच्चार्यमाणमित्यर्थः । निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः । निर्दिश्यमानपदस्य चाध्याहार इति भावः ॥

---

१ "मौखाः" इति भाष्यम् ॥

२ सौनाश्चेति । औचाश्चेति पाठान्तरम् ॥

न बाध्यते इति । (कै)

किन्तु स्वव्यवस्थापकत्वेनाऽऽश्रीयत इत्यर्थः । एव "मनेकाल्सूत्र"-सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते । [1]"पद्न्न" इत्यादावपि आदेशैः पाणिनिकृतस्थान्युच्चारणाऽनुमानाद्व्यवस्थार्थत्वाद्वा न दोषः । यत्तु "अलोऽन्त्यस्य" [2]"आदेः परस्य" इत्यम् एतद्बाधकाविति तन्नु [3]"उदस्था" इति [4]"पादः पद्" इति सूत्रस्थभाष्यविरुद्धम् । व्यवस्थापकत्वे सम्भवति बाधकत्वकल्पनानौचित्यग्रस्तं च ॥

---

# स्थानेऽन्तरतमः । १ । १ । ५० ॥

इति प्रश्न इति । (कै)

एवं च परोक्तोदाहरणदूषणायाऽयम्प्रश्नो न तूदाहरणासम्भवकृत इति भावः ॥ उदाहरणप्रश्ने [5]"इकोयणचि" इत्यस्योल्लेखो व्यर्थोऽत आह

अस्य सूत्रस्येति । (कै)

सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमिति भावः ॥

---

१ अ ६ । पा १ । सू ६३ ॥
२ अ १ । पा १ । सू ५४ ॥
३ अ ८ । पा ४ । सू ६१ ॥
४ अ ६ । पा ४ । सू १३० ॥
५ इको यणचि । ६ । १ । ७७ ॥

षट् षष्टिरिति । (कै)

ऌवर्णस्य दीर्घाभावात् दीर्घप्लुतऋकारस्य प्लुतऌकारस्य चाऽनुनासिकस्याऽदर्शनादिदं चिन्त्यम् ॥

[1] सप्तेति । (कै)

रेफस्य सानुनासिकस्याऽभावादिति भावः । इदं चिन्त्यम् । [2]"अणुदित्" सूत्रेऽण्ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाऽभेदाय भेदकत्वस्यैवाऽऽश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति ।

संख्यातानुदेशः । (भा)

क्रमेणान्वयः ॥

शब्दत इति । (कै)

अयं भावः । यथा[3]"स्यतासी ऌलुटोः" इत्यत्राऽर्थवैषम्येऽपि बोधकशब्दसाम्याद् यथासंख्यं तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दतः साम्यमस्त्येवेति न दोष इति । न च ऋकारे लकारस्य ऌकारे रेफस्य चाऽऽपत्तिः । ऋदिॢदितोर्भेदेन निर्देशात् सावर्ण्यानित्यत्वेनाऽत्र ऋऌभ्यां ऋकारऌकारयोर्ग्रहण-

---

१ "क" पुस्तके "सन्त्येति" इति पाठोऽस्ति तत्त्वपपाठः कैयटे अदर्शनात् ॥
२ अ १ । पा १ । सू ६९ ॥
३ अ ३ । पा १ । ३३ ॥

मिति नोक्तदोष इति तदाशयात्॥ ननु ऌकारोदाहरणाभावात् कथं यथासंख्यमत आह

**घस्लेति।** (कै)

वस्तुतः प्रतिपत्तिकालिकं संख्यासाम्यमेव यथासंख्य[1]प्रवृत्ति-नियामकं न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम्॥ अनुनासिकस्थाने सानु-नासिकार्थमपि न तत्रैतदुपयोगः। विधेयेऽपि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः। आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वं किन्तु स्वभावत एव शब्दार्थसम्बन्धानां नित्यत्वादित्याशयेन भाष्ये

**एकार्थ इति॥** (भा)

तावन्मात्रोक्तौ तमस्तमपि प्राप्नोति यमस्तामपीत्यत आह

**साहश्येति।** (कै)

उत्तमे प्रत्यक्त्वरूपोऽहङ्कारास्पदचेतनधर्मो मध्यमे अहङ्काराना-स्पदचेतनधर्मः पराक्त्वं प्रथमे त्वनियतम्॥ भाष्ये

**अनुवर्त्तमान इति।** (भा)

एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः॥

**वाक्यभेद इति।** (कै)

अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यं ताल्वादिवाचीहत्यस्थान-शब्देनापरम्॥ अत्र च "स्थाने" इति तृतीयार्थे सप्तमीति भावः॥

**तमग्रहणमनर्थकमिति।** (कै)

---

१ प्रवृत्तौ नियामकम्। क। ग। ङ॥

प्रसङ्गे स्थानकृतान्तर्य्यवानित्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तं तथैकवाक्यतायान्तु स्थानकृतान्तर्य्याऽभावे तद्गुणतीत्यादावव्यवस्थैव स्यात्। वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः॥

ऊष्मत्वेति। (कै)

महच्छब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः॥ नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह

यदीति। (कै)

सूत्राभावे किमनिष्टमिति प्रश्नतात्पर्य्यमिति भावः॥

बहव इति। (कै)

एवं चैकत्वनिर्द्देशादित्यनुपपन्नमिति भावः॥

प्रयोग इति। (कै)

अक इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्य्यत इति भाष्याऽक्षरार्थः॥ यद्यपि पूर्वपरयोरित्युक्तेरेकः स्थानीत्ययुक्तं तथापि तत्समुदायाभिप्रायेणेदम्। युगपदेककर्त्तृकं सर्वोच्चारणमशक्यमत आह

पर्य्यायेणेति॥ (कै)

येन प्रकारेण संहिता पाठलक्षणेन (कै)

इति पाठः। अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम्॥ अस्तु तर्हि विच्छिन्नपाठोऽत आह

[1]पदप्रकृतिरिति । (कै)

षष्ठीतत्पुरुषः । बहुव्रीहिरित्यन्ये । तत्प्रकृतग्रन्थाननुगुणम् ॥ भाष्ये

सा किं प्रकृतित इति । (भा)

"सेति" इयमित्यस्य प्रतिनिर्देशः । इदं शब्दोऽपि यच्छब्दार्थः क्वचित् । केचित्तु येत्यर्थे यथा पुनरिति अव्ययसमुदायं वदन्ति । अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं षष्ठीस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनम्प्रति उताऽऽदेशम्प्रतीत्यर्थः ॥

षष्ठीति वर्त्तत इति । (कै)

अन्तरतमेऽर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्त्तव्येत्यर्थः ॥ [2]"यत्रैव षष्ठी"त्यादि तु पर्य्यवसितार्थकथनम् ॥ ननु भाष्ये संख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात् पुनरुपन्यासोऽयुक्तोऽत आह

आदेशेति ॥ (कै)

[3]भवत्येवैतदिति । (कै)

दीर्घव्यावृत्तये इत्यर्थः ॥ भाष्ये

---

१ पदप्रकृतिः संहिता ॥

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्त्ता धीरस्तत्त्वन्नीतिः ।
शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौ कुर्य्यात् पौर्वापर्य्यम् ॥

२ यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते ॥

३ भवत्येतदिति । ग । ङ । उपलब्ध कैयट पुस्तके "भवत्येवैतदुदाहरणम्" इत्यस्ति ॥

इको गुणवृद्धी इति । (भा)

विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् ॥ नन्विको गुणवृद्धी इत्युक्त्वा "चायक" इत्युदाहरणमसङ्गतमत आह

अच इति । (कै)

केचित्तु इको यत्र गुणवृद्धी इष्टे तत्रेति भाष्यार्थान्न दोष इत्याहुः॥ ननु ऋकारस्येगचोरन्तर्भावात् पुनरुपन्यासो वृथेत्यत आह

ऋकारस्येति । (कै)

एवं च सप्तम्यन्तच्छेदो लघ्वाऽसिद्धा दुष्ट इति भावः ॥

यादृश इति । (कै)

अचीत्यनुवृत्त्याऽचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः । अन्ये तु वाच्यवृत्त्येदृशार्थस्याऽलाभाद् यि प्रत्यये इति दृष्टाऽचीत्यस्याऽसम्बन्धाच्च भाष्योक्तं वचनमेव न्याय्यः इत्याहुः ॥ भाष्ये

[1]क्षिज्योरेवेति । (भा)

ह्रस्वनिर्देशात् "ज्यो" इति दीर्घान्तस्य "जै जय" इत्यस्य च नेदं निपातनमिति बोध्यम् ॥

योगविभागेनेति । (कै)

विनिगमनाविरहाद् [2]"ब्रह्मभ्रूण" इत्यादाविवोभयतो नियम इत्यन्ये ॥ भाष्ये

---

१ क्षिज्योरेवैच इति । भा ॥

२ ब्रह्मभ्रूणवृत्रेषु क्विप् । अ ३ । पा २ । सू ८७ ॥

तुल्यजातीयस्येति । (भा)

अन्यथा यि प्रत्यय इति विधिवैयर्थ्यं स्यादिति भावः । तत्त्वं च यद्येतेन तर्हि [1]ऐकारे आयादेशः स्यादत आह

कण्ठ्येति ॥ (कै)

भाष्ये एकारग्रहणमुपलक्षणमिति भावः ॥ एतदनभिज्ञः प्रकृते भाष्ये

रायमिच्छतीति ॥ (भा)

तदाह

एकारस्यैवेति । (कै)

एकारस्य तालव्यत्वमेवेति भाष्याशयः ॥

क्यजन्तेति । (कै)

"रा" रैशब्दः "यि" यकारादिप्रत्ययः इति भाष्यार्थ इति-भावः ॥ भाष्ये विसर्गरहित एव पाठः । एतेन रायिरित्ययुक्तम् आलस्य दुर्लभत्वाद् रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् ॥

नास्ति प्रयोग इति । कै

अनभिधानादिति भावः ॥ [2]"क्यच् तु" इत्यादिः "वचनाद्" इत्यन्तो ग्रन्थस्तत्रैकीयमतत्वात् । अत एव [3]"नः क्ये" इति सूत्रे "वाच्यति" इति भाष्ये प्रयुक्तम् ॥

---

१ एकारे । क । इ ॥

२ "क्यच्" लिकारान्तान्नास्ति गोसमानाच्चरमान्तादिति वचनात् ॥

३ अ १ । पा ४ । सू १५ ॥ वाच्यति । स्रुच्यति ॥

अन्ये त्विति। (कै)

अत्राहुरिति बोध्यम्। "रायमिच्छती"ति भाष्यप्रयोगविरोधः। नहि विप्रश्च्छन्द इति बोध्यम्। भाष्ये "चि" इत्यस्य वैयर्थ्याच्च। भाष्ये गोह: सम्बन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः॥

स्थानिन्युपसंख्रियत इति। (कै)

एवं च "गोह" इति गोहावयवत्वाच्चाणिकमूकारान्तरतमस्य गोहावयवस्योदित्यर्थ इति भावः॥ ननूपधाग्रहणाकरणलाघवे दर्शिते [1]"क्रियत" इत्युत्तरमसङ्गतमत आह

अन्यथेति। (कै)

परत्वाद् [2]"अलोऽन्त्यस्य" इत्येव व्यवस्थापकं स्यादित्यर्थः। एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः॥ ननु तद्ग्रहणाभावे "चरितम्" इत्यादावपि रेफाऽनन्तरा निष्ठेति नत्वं स्यादत आह

चरितमिति॥ (कै)

[3]"रदाभ्याम्" इत्यस्य प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासम्बन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ इति भावः॥ [4]"आदेः परस्य" "स्थानेऽन्तरतम" इत्याभ्यामादेरन्तरतमस्य न इत्यर्थे इकारस्याऽन्तरतमत्वाभावेन तकारस्य आदित्वाभावेनाप्राप्तिरिति परे॥ पक्षान्तरेऽपि तुल्यत्वाच्च गौरवमित्याह

---

१ क्रियते एतन्न्यास एव। भा॥ २ अ १। पा १। सू ५२॥
३ अ ८। पा २। सू ४२॥ ४ अ १। पा १। सू ५४॥

अन्यथेति ॥ (कै)

इकारस्य नत्वं स्यादिति। (कै)

अनया परिभाषयेति भावः॥ वस्तुतस्तु "आदेः परस्य" इत्यनेनाऽन्त्यस्याऽप्राप्तिः। सूत्रं तु उभयाविरोधेन भिन्नमित्यादौ चरितार्थमित्यच प्रयोगे न स्यादेव नत्वमित्युभाभ्यामपि तग्रहणं कर्त्तव्यमिति भाष्यतात्पर्य्यम्। एवं च प्रथमान्तच्छेदो निर्द्दोषः। सप्तम्यन्तच्छेदस्तु दुष्ट एव। अत एव [1]"न भूसुधियोः" इत्यादि चरितार्थम्॥ "नृनरयोर्वृद्धिश्च" इति [2]शार्ङ्गरवाद्यन्तर्गणसूत्रं यद्यार्षं तदा नरः अ इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः। तत्र नृनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी पृथगपि वा तौ गणे पठ्येते इति बोध्यम्॥

अथेति। (कै)

वाक्यभेदाऽभेदाभ्यां पक्षद्वयभेद इति बोध्यम्। तत्र तृतीयः सिद्धान्तो भविष्यति॥

भिन्नरूप इति। (कै)

पर्य्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च तथापि विनिगमकाऽभावादुभयोः स्थानित्वमादेशत्वं च वाच्यम्। तथाच सूत्रमनारम्भसमं स्यादिति भावः। शास्त्रप्रवृत्तौ हेतुर्वचनसामर्थ्यम्। सदृशादेशे हेतुः

शब्देति॥ (कै)

---

१ अ ६। पा ४। सू ८५॥ २ अ ४। पा १। सू ७३॥

भाष्ये

**[1]यदि चैवमिति ।** (भा)

स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्रैव दोष इत्यर्थः ॥

**नहि तदेति ।** (कै)

आदेशरूपस्यैव तेन षत्वविधानादिति भावः ॥

**यदा त्विति ।** (कै)

तद्ध्वनयन् भाष्यकृदाह्यति

**इमे वर्णा** (भा)

इत्यादि ॥ नन्वस्य निर्वर्त्तकत्वे आर्द्धधातुकेऽप्यस्त्यादीनामस्त्याद्या-देशाः स्युरिति कुतो नोक्तं किं चानेन सिद्धे तद्ध्यर्थं चेत्यत आह

**अस्तेरिति ।** (कै)

विध्यतिनिवृत्तिस्तत्फलमिति भावः । सदृशाऽऽदेशविषयेऽपि दोषमाह भाष्ये

**अपि च इष्टेति ॥** (भा)

ननु सदृशाऽऽदेशे कथमिष्टव्यवस्थाऽसिद्धिरत आह

**पुनरिति ॥** (कै)

ननु "लक्ष्ये लक्षणस्य" इति न्यायविरोधोऽत आह

**प्रयोजनमिति ।** (कै)

सप्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न

---

१ यदि चैवं क्वचिद्वैरूप्यं तत्र दोषः स्यात् । भा ॥

द्वितीयादिप्रवृत्तिरिति तद्बीजं न चेदं प्रकृते इतिभावः॥ भाष्ये "व्यवस्था" इत्यस्य सापेक्षत्वादाह

**साधुत्वस्येति।** (कै)

परिनिष्ठितत्वव्याप्यत्वात् साधुत्वस्येति भावः। एवं च दोषान्त-मेव शास्त्रं स्यादिति तात्पर्य्यम्॥

**निर्वृत्तेष्विति।** (कै)

अन्येन निर्वृत्तानां मध्येऽनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इतिभावः॥

**अभिमतस्येति।** (कै)

शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वाऽऽपत्तेरितिभावः॥ दीर्घादेरिष्टा व्यवस्था न भविष्यतीत्यत आह

[1]**अक इति।** (कै)

एकप्रमाणबोधितस्य सामान्यविशेषभावाभावेन प्रमाणान्तरेण आत्यन्तिको निरासोऽशक्यः कर्त्तुमिति भावः॥ ननु शास्त्र-प्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादिति पृच्छति

**इदमिदानीमिति॥** (भा)

उत्तरयति

**अनर्थकमिति॥** (भा)

**भुक्त्वा इति।** (भा)

निरनुस्वारः पाठः॥ आनर्थक्यं परिहरति

१ अकः सवर्णे दीर्घः। अ ६। पा १। सू १०१॥

**उक्तं वेति ॥** (भा)

द्वितीयपक्षाङ्गेदमुपपादयति

**एकवाक्यतेति ।** (कै)

एवं चेतरस्याविधानमेवेतीष्टव्यवस्थासिद्धिरिति भावः ॥ परे तु उत्पन्नानामनेन निवृत्तिर्लुगादिनेवेति भावः ॥ एतदाशयमजानान आह

[1]**निर्वृत्तिर्न सिद्ध्यतीति ॥** (भा)

तदभ्युपेत्य समाधत्ते

**उक्तं वेति ।** (भा)

भुक्तवतो भोजनफलत्वप्रेञ्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे [2]"वृद्धिरादैच्" सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः ॥

**आत्मानमिति ।** (कै)

[3]"अनसः" इति टच् ॥

**स्थान्यात्मन इति ।** (कै)

स्थानिरूपपदार्थस्येत्यर्थः ॥ नन्वन्तरतमशब्दस्य बहुशार्थकत्वेन [4]"तुल्यास्य प्रयत्नम्" इत्यत्रेव "सम्बन्धिशब्दत्वाद्" इति कुतो नोक्तमत आह

१ निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्नसिध्यति । उक्तं भाष्ये ॥

२ अ १ । पा १ । सू १ ॥ ३ अ ५ । पा ४ । सू १०८ ॥

४ अ १ । पा १ । सू ९ ॥

तुल्येति ॥ (कै)

प्रत्यात्मं चासते इति । (भा)

स्वस्वसमाजेष्वेवासत इत्यर्थः ॥

कस्यां चिदिति । (कै)

धर्मनिर्णयादिक्रियायामित्यर्थः ॥ अर्थकृतासाम्ये सति तदेव प्रयोजकमित्याह

गुणेत्यादि । (कै)

पाण्डुत्वं गुणः । कृशत्वादि प्रमाणम् ॥

विद्यादीति । (कै)

आदिनोत्सवागमनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसंग्रहः । एवं च [1]"अन्तरतमो भवतीति" [2]"यत्रानेकविधमिति" च न्यायसिद्धमिति भावः ॥ दृष्टान्ते विवक्षितार्थमाह

संकीर्णानामिति । (कै)

भाष्ये "प्रसवो" वत्सः "तेन सह" स्वस्वप्रसवेन सह "शेरते" इति शेतिः स्थितौ ॥

एवं चोदनायामिति । (कै)

अनया रीत्या विधिशास्त्रेऽपीत्यर्थः ॥ "युक्तक" शब्दो युग्म-

---

१ अन्तरतम आदेशो भवतीति । भा ॥

२ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः । परिभाषेन्दु-१३ ॥

वाची ॥ "संघुष्टक" शब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची अनेनापि ग्रन्थेन यथाऽनेकविधमित्यर्थः साधित इत्याहुः ॥

साहश्यादिति । (कै)

तत्तद्युगवहनाद्यत्र सादृश्यम् ॥

अन्तरिक्ष इति । (कै)

अन्तरिक्षे भवा आन्तरिक्ष्यः । अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः । तस्यैव च रविकिरणसम्पर्केण मेघरूपतया वायुयोगाद्वृष्टिः । आन्तरिक्षौणामपाम्परम्परया धूमो विकार इति दर्शयति

तद्विकारः सर्वा इति ॥ (कै)

सूर्य्यविकार इति । (कै)

अत एव दावाग्नेर्मध्याह्नादौ सूर्य्यकरसम्पर्कात् क्रौर्य्यातिशयो दृश्यते ॥

तदनाश्रयेणेति । (कै)

मन्दमध्यबुद्ध्यर्थमित्यर्थः ॥ ननु नार्द्धमात्रिक[१] इत्यत आह ।

इदमेवेति । (कै)

[२]"कार्य्याः शब्दा" इतिदर्शने प्रमाणादिना तत्तदन्तरतम-

---

१ ननु नार्द्धमात्रिक इगित्यत आह । क । ग । इ ॥

२ एवं तर्हि भवति वै किंचिदाचार्य्याः कार्य्यवद्बुद्धिं कृत्वा पठन्ति कार्य्याः शब्दा इति (२ । १ । ६९) ॥

वर्णनिर्वर्त्तकमित्यर्थः। एवं च लोकवेदयोरभावेऽपि एतच्छास्त्रसिद्ध एव स इति भावः॥ यदुक्तमिदमेवेति तत्राह

**नित्या इति॥ (कै)**

**निर्वृत्तिपक्षेऽपीति। (कै)**

"शास्त्रकार्य्याः शब्दा" इति दर्शनेऽपीत्यर्थः॥

**उच्चारणस्येति। (कै)**

तस्य लोकाधीनत्वादिति भावः॥ इदमस्त्रिमात्रिकत्वेनाऽर्द्धतृतीयमात्रिक इत्ययुक्तमत आह

**अत्वेति। (कै)**

परत्वादत्वेऽन्तरङ्गत्वादेकादेश इति भावः॥

**प्लुताप्लुतेति। (कै)**

तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्याऽसिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति शास्त्रवैरूप्यापत्तिस्तद्बीजम्। शास्त्रं त्वप्लुतविधानेन चरितार्थमिति। प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांशेऽनुवादत्वकल्पना सोढव्यैव। सामर्थ्येनाऽन्तरतमपरिभाषाबाधकल्पनापेक्षयाऽनुवादत्वस्य युक्तत्वाच्चेति भावः॥

**संज्ञा चेति। (कै)**

[1]कार्यकालपक्षेऽपि यथा भाव्यमानत्वाभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे॥

---

१ कार्यकालं संज्ञापरिभाषम्। परिभाषेन्दु-३॥

**प्रत्याहार इति। (कै)**

वार्त्तिके गुणवृद्ध्येज्भावेष्विति द्वन्द्वो न तु कर्मधारयो भाष्यविरोधादिति भावः॥

**तच्च हीति। (कै)**

प्रमाणत आन्तर्यादिति भावः॥ नन्वेवं हृस्वे सर्वगुणप्रसङ्गस्याऽनुपपादनादृवर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह

**समुदायापेक्षयेति। (कै)**

ऋवर्णीयहृस्वादिसमुदायापेक्षयेत्यर्थः॥

**गुणवृद्धिशास्त्रस्येति। (कै)**

प्रतिलक्ष्यं लक्षणभेदादृवर्णविषयगुणादिशास्त्रस्येत्यर्थः। अङ्गान्तस्यैक ऋवर्णस्य रपरोऽणूरूपो गुण इति वाक्यार्थ इति भावः। ऋश्रुतेरित्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम्॥

**ऋवर्णस्येति। (कै)**

ऋवर्णान्ताङ्गस्येत्यर्थः॥

**सर्वादेशाविति। (कै)**

तत्त्वेऽपि समुदायान्तवर्त्तित्वादृवर्णस्य तदादेशत्वमपि खट्वर्श्य इत्यादाविव वक्तुं शक्यमिति भावः॥

**पूर्वमेवेति। (कै)**

अन्यथा ऋवर्णस्थानिकत्वाऽभावाद्रपरत्वमेव न स्यात्। न च समुदायान्तःपाति ऋकाराश्रयेण रपरत्वम्। प्रत्यक्षे ऋवर्णस्थानिके

चरितार्थस्याऽनुमानिके प्रवृत्त्ययोगात्। खट्वर्श्य इत्यादौ तु पूर्वपरयोरित्यधिकारात् प्रत्यक्षमेव स्थानित्वमिति भावः॥

पूर्वप्रवृत्तमिति। (कै)

उपजीव्यं चेत्यपि बोध्यम्॥ "न बाधत" इत्यत्र "[1]अनेकाल्शित् सर्वस्य" इति सूत्रं कर्तृ। रेफवतो रेफवानन्तरतम एवेति "अथवा" इत्ययुक्तमत आह

निवृत्तस्येति॥ (कै)

परिग्रहाच्चेति। (कै)

[2]"पाददन्त" इत्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः। सदृशसम्बन्ध्यभावकत्वमुभयोः साधारणधर्मरूपं सादृश्यमिति तात्पर्य्यम्॥

यत्नस्येति। (कै)

परिहारान्तराभिधानरूपस्येत्यर्थः॥

स्थानकृतमिति। (कै)

"आन्तर्य्यमि"तिभाष्यस्य स्थानकृतान्तरतमाभाव इत्यर्थः॥

नष्टाऽश्वदग्धरथवदिति। (भा)

बहुव्रीहिगर्भद्वन्द्वाद् वतिः॥ पूर्वोक्तेनाऽथवेत्यनेन पौनरुक्त्यमपरिहरति

यदेति॥ (कै)

केचित्तु तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृशत्वयादेश इत्यर्थः

---

१ अ १। पा १। सू ५५॥ २ अ ६। पा १। सू ६३॥

साधितो भगवतेति प्रत्याख्यानाप्रत्याख्यानयोः को विशेषस्तस्मादनान्तर्य्यस्याऽभावरूपस्य सादृश्यत्वानङ्गीकारेऽप्याह

नष्टाश्वेति। (भा)

ऋवर्णस्य स्थानित्वेनाऽवर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावो यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि सम्प्रयोग इति तात्पर्य्यमित्याहुः॥ "प्रधानत्वं" भूयस्त्वेन॥ न्यायस्तर्हि क्वेत्यत आह

ह्रस्वेति॥ (कै)

---

# उरण् रपरः।१।१।५१॥

भाष्ये

उरण् रपरवचनमिति। (भा)

सूत्रस्थविसर्गप्राग्भागानुकरणेन षष्ठीसमासः॥ नन्वन्यशब्देन न स्थानी आदेशस्य स्थानिनिवर्त्तकत्वस्वभावत्वाद् न स्थानिव्यतिरिक्त उरण् इत्येतावतः स्थानिव्यतिरिक्तनिवर्त्तने सामर्थ्याभावादत आह

षष्ठीति। (कै)

यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः॥ स्थानन्तरेणाऽस्य विधायकत्वं तु "[१]इको गुणवृद्धी" इत्यत्र भाष्ये एव निराकृतम्।

१ अ १। पा १। सू ३॥

तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन तदा "अथ मतमेतद्" इति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह

## तत्रेति ॥ (कै)

## अपूर्व इति । (कै)

वाक्यभेदेन "[1]अनित्यादिः" उदात्तो भवति ऋवर्णस्य त्वण् भवति स च रपर इत्यर्थ इति भावः ॥

## तत्र सामर्थ्यादिति । (कै)

विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थो न तु वाक्यवृत्त्याऽस्य नियमपरत्वमिति भावः ॥

## स चोदात्तादिगुण इति । (कै)

अत्र पक्षेऽनन्तरस्येति न्यायेनाऽन्तरतमपरिभाषाया अनेन बाध इति भावः ॥

## न वेति । (कै)

यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः ॥ भाष्ये "कृतिः" नित्स्वरेणाद्युदात्तः । "कृतम्" इत्यत्र प्रत्ययस्वरेणान्तोदात्तशेषनिघातेन ऋकारोऽनुदात्तः । प्रकृते "[2]गतिरनन्तर" इति पूर्वपदप्रकृतिस्वरे शेषनिघाते "[3]उदात्तादनुदात्तस्य" इति स्वरितत्वम् । "[4]उच्चैरुदात्त" इत्यादिषु षष्ठ्यन्तम् अच इत्यनुवर्त्तते इति पक्षे "अनित्यादिः" इत्यादावस्य इत्युपस्थितेः षष्ठीसद्भावाद् उरण्

---

१ अ ६ । पा १ । सू १९७ ॥ २ अ ६ । पा २ । सू ४९ ॥
३ अ ८ । पा ४ । सू ६६ । ४ अ १ । पा २ । सू २९ ॥

इत्यस्योपस्थानमिति द्रष्टव्यम्॥ नियमपक्षे वक्ष्यमाणदोषमनाध्या-त्मीकृत्य दर्शयति

प्रतिपदेति॥ (कै)

तेषामिति। (कै)

प्रत्यासत्त्योरण् इत्यनेन विधीयमानस्याणो विधीयमान-मिति शेषः॥

दुर्लभ इति। (कै)

ह्रस्वस्य गुणाकारलाभेऽपि दीर्घस्याऽकारगुणालाभः। वृद्धिस्तु नियमेन अण् न लभ्यत इत्यर्थः। "कर्त्ते"त्याद्युदाहरणं भाष्ये दीर्घान्तस्याऽप्युपलक्षणम्॥ "किम्" इत्यस्य विशेष्यमाह

कारणमिति॥ (कै)

भाष्ये "असवर्णे" सदृशाभावे इत्यर्थः॥ ननु नियामकाभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाऽप्रतिपत्तिरत आह

ततश्चेति॥ (कै)

दोषपरिहारायाक्षेपवाद्येवाऽन्यनिवृत्त्यर्थमित्यस्य नियमपरतया व्याख्यानमाशङ्क्य दूषयति भाष्ये

अथ मतमिति। (भा)

एतद्वक्ष्यमाणं नियमरूपलमन्यनिवृत्त्यर्थमिति वदतो मतं सम्मतं विवक्षितमित्यर्थः॥

सिद्धा पूर्वस्मिन्निति। (भा)

अन्यनिवृत्त्यर्थमिति पक्षे इत्यर्थः॥

**स चेति ।** (कै)

वाक्यभेदेनेत्यर्थः ॥ न चैवमिकारोकारावपि स्यातामत आह

**न च गुणेति ॥** (कै)

**भवानिति ।** (कै)

नियमपक्षवादीत्यर्थः ॥

**स एवेति ।** (कै)

विचारक एवेत्यर्थः ॥ प्रकृते भाष्ये

**यद्यप्यणोऽपीति ॥** (भा)

परिहरति

**कुतो न्विति ॥** (भा)

तमब्ग्रहणसहितस्याप्यवकाशप्रदर्शनाय "[1]इणोः" इत्युक्तम् ॥

**उरण् रपर इत्यस्यावकाश इति ।** (कै)

गुणविधौ "स्थानेऽन्तरतम"परिभाषानुपस्थितिः । ऋवर्ण-समुदायान्तरतमगुणाभावादिति भावः । यद्यपि भाष्याद् विनि-गमनाभावो लभ्यते । तथापि "एष दोषो जायते" इत्युत्तर-ग्रन्थासङ्गतेर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाऽप्रवृत्तिमुपपादयति

**परत्वादिति ॥** (कै)

[2]भाष्ये

---

१ अ ८। पा ४। सू ६२॥

२ ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वाप्राप्तिरत आह यत्र ह्रीति ॥ ग्रोयङीति लत्वविधानादावृत्त्या तेषामपि परत्वमिति चेत् ऋकारान्तर्गते रेफस्य लत्वार्थं तत् स्यादिति न दोषः । क । ग । इ ॥

ये चाप्येते इति। (भा)

बहुवचनेन "[1]आपञ्चप्यृधाम्" इति ईत्वसंग्रहः॥

विधीति। (कै)

ऋवर्णस्थानिकाऽण्विधिवाक्यैरित्यर्थः॥

एकवाक्यतायामिति। (कै)

वाक्यैकवाक्यतायामित्यर्थः॥ ननु "उर्" इति षष्ठ्या स्थानेयोगत्वस्य लाभः स्यादत आह

नहीति। (भा)

एवंचायमनुवाद इति भावः॥

विध्यङ्गेति। (कै)

विधेयेन साक्षाद् यत्र सम्बन्धस्तत्र परिभाषेत्यर्थः॥ [2]"उदात्तस्वरितयोर्यणः" "[3]लः परस्मैपदम्" इत्यादावनुवादेऽप्यस्याः प्रवृत्तेः "यद्येवम्" इत्यादिभाष्यमेकदेशिनोक्तिरिति बोध्यम्॥

उः समीप इति। (कै)

तथा च तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः। [4]सामीप्ये च षष्ठी व्यवस्थितेऽपीति भावः॥

स्थाने य आदेशोऽणिति। (कै)

---

१ अ ७। पा ४। सू ५५॥

२ अ ८। पा २। सू ४॥

३ अ १। पा ४। सू ९९॥

४ सामीप्यंचेषष्ठ्यवस्थितेऽपीति भावः। क। ग। ङ॥

अनुवर्तमानस्थाने ग्रहणमुरित्यस्य सम्बन्धिशब्दत्वात्तचैव सम्बन्धेतेत्यर्थः॥ नन्वेवमादेशः स्थानेन विशेषित एवेति "आदेशोऽविशेषित" इति भाष्याऽसंगतिरित्यत आह

प्रसज्यमानत्वेनेति॥ (कै)

अथवा स्थानेति। (कै)

स्थानशब्दस्य प्राधान्यात् "रपर" इत्यनेन सम्बन्ध इति भावः॥

तत इति। (कै)

अणः स्थाने पदार्थेनाविशेषणादित्यर्थः। एवंच नाऽऽदेशान्तराणां बाधकोऽण् विधीयते नाऽपि नियमो नाऽपि विहितस्य रपरत्वं प्रसज्यमानत्वेन विशेषणात् किन्तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवाऽस्येति बोध्यत इति बोध्यम्॥

अथवेति। (कै)

स्थानपदेन प्रसङ्गकालो लक्ष्यते इति भावः॥

ऋकार एवेति। (कै)

स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वादिति भावः॥ ननु वार्त्तिकोक्तरोरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रामाणाभावात् "के पुनरि"ति प्रश्नानुपपत्तिरत आह

बहुवचनेति॥ (कै)

"सौधातकी" "[1]सुधातुरकङ्च" इति "इञ्"। "पैतृष्वसेये" ढकि लोपस्तत एव ढक् च॥ ननु लोपस्य रपरत्वे तं विनापि यणादेशेन तत्साध्यरूपसिद्धिरत आह

---

१ अ ४। पा १। सू ९७॥

लोपेति । (भा)

रपरत्वाभिधानमुखेन सर्वादेशत्वमेव लोपस्याभिधित्सितमिति भावः । यदि सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपरत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् । आनङनङौ "[१]आनङृतो द्वन्द्वे" "[२]ऋदुशने"ति विहितौ ॥

रेफस्येति । (कै)

झल्ग्रहणापकर्षणाद्यण: प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफग्रहणमेव दोषोऽत्रेति बोध्यम् ॥

समुदायस्येति । (कै)

द्वन्द्वस्य सत्त्वादिति भावः ॥

उद्भूतेति । (कै)

अत एव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः ॥ नन्ववयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसंख्यायाः समुदाये आरोपो नैतावता प्रत्येकं स्थानित्वलाभोऽत आह

अवयवावेव चेति । (कै)

इतरेतरयोग इति शेषः । एवंच तत्र समुदायस्यावयवाभेदेन बोधनाद् द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभोऽयमेव चोद्भूतावयवभेदः समुदाय इत्यस्याऽर्थ इति भावः ॥ भाष्येऽगृहीताभिप्रायः समुदायस्याऽतिरिक्तस्य स्थानित्वेऽपि तदन्तर्गतावयवस्याऽपि स्थानित्वमादाय कस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह

---

१ अ ६ । पा ३ । सू २५ ॥ २ अ ७ । पा १ । सू ९४ ॥

अवयवग्रहणात्सिद्धमिति चेदिति ॥ (भा)

रान्तस्येति । (भा)

रान्तलस्येत्यर्थः ॥

ऋवर्णान्तेति । (भा)

शब्दशास्त्रप्रस्तावात् शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेरृवर्णान्तस्य गुणेन भाव्यमत आह

अङ्गस्येति षष्ठीति । (कै)

इगन्ताङ्गान्त्यस्य गुण इति वाक्यार्थ इति भावः ॥ भाष्ये लक्ष्यासिद्धिदोष ऋवर्णान्तस्येत्यर्थ उक्तः । स्वयं तदर्थाऽसम्भवमप्याह

नचेहेति ॥ (कै)

भूतानुवादादिति । (कै)

एवं चानुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः । यद्वा समानविभक्त्यन्तविशेष्यरहितभूतानुवादादित्यर्थः । यत्र हि साचाद्यर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः । गमकं विना शब्दरूपविशेष्यमादाय तु न तदन्तविधिरिति भावः ॥

न च प्रदेशेष्विति । (कै)

इह तदन्तविध्यभावेऽपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात् ततस्तदनुरोधेनाऽनुवादेऽप्येकदेशद्वारा

श्चवर्णान्तं ग्राह्यं तदपि नास्तीति भावः। इदं चिन्त्यम्। "[1]वृद्धि-र्यस्य" इत्यादौ "[2]ईदूदेद्द्विवचनम्" इत्यादौ चानुवादेऽपि संज्ञा-प्रवृत्तेः। वर्णविधौ च सर्वचेति च शब्दरूपविशेष्यमादाय तदन्त-विधौ गमकमतो भाष्योक्त एव दोषः॥ भाष्ये

अर्थवतेति। (भा)

इदमसहायत्वोपलक्षणमत एव कुरुते इत्यादौ अनर्थकेनाऽपि सः। तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक्॥ भाष्ये

इह चेति। (भा)

एकदेशस्योपसंख्यानमित्यौपसंख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः॥ मातुरित्यादौ तदुपसंख्यानातिव्याप्तेरिति भावः॥

मातुरितीति। (कै)

उः रपर इति पूर्वोक्तभाष्यप्रयोगविरोधाद् "[3]ऋत उद्" इति तपरत्वान्मातुरित्यादौ न दीर्घ इत्यपास्तं वेदितव्यम्॥ उक्तार्थे गमकमाह

अत एवेति। (कै)

पंचम्यन्तात् तसिल्यर्थाऽसंगतेराह

तृतीयान्तादिति॥ (कै)

समुदायस्येति। (कै)

प्रत्येकमादेशत्वे प्रमाणाभावादित्यर्थः॥ भाष्ये

---

१ अ १। पा १। सू ७३॥ २ अ १। पा १। सू ११॥
३ अ ६। पा १। सू १११॥

रात्सस्येति। (भा)

सलोपे हलस्याऽसिद्धत्वादिति भावः॥

[1]असित्ययमिति। (कै)

प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः॥

अकारोऽपीति। (कै)

सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इति भावः॥

उत्वे च कृत इति। (कै)

न चैकादेशस्य परादिवत्त्वेनोर्सित्यस्य प्रत्ययतया लोपे एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्येवेति वाच्यम्। त्रिपाद्या असिद्धत्वेन तत्राऽन्तादिवद्भावाऽप्रवृत्तेः। स्थानिवत्त्वेन त्वनिर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात् "सर्वे सर्वपदादेशा" इत्यनेन तु मात्र असित्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वालाभात्। भाष्ये "[2]लुप्यतेऽत्र प्रत्ययविसर्जनीय" इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाऽभिमतो विसर्जनीयः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः॥

एवं तर्हि भ्रातुष्पुत्रेति। (भा)

त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति गूढोऽभिसन्धिः॥

---

१ असिप्रत्ययमिति। क॥

२ पुण्यपत्तनस्थराजकीयदक्षिणविद्यालयस्थभाष्यपुस्तके इंगलण्डीयभाष्यपुस्तके च "लुप्यते तत्र प्रत्ययो रात्सस्येति" इति पाठोऽस्ति। वंगीयेसियाटिक्समाजस्थभाष्यपुस्तके "लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति"। इति पाठोऽस्ति॥

कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपदे लक्षणां च दर्शयति

एकादेशशास्त्रमिति ॥ (कै)

यद्यपीति । (कै)

तथा च तस्यैव विशेषणं स्यादिति भावः ॥

प्रधान्यादिति ।(कै)

रपरशब्दतात्पर्य्यविषयत्वादित्यर्थः । एवंच पूर्वान्तावयवभूत-रेफपरोऽणित्यर्थः । सूत्रे रपर इति समासस्य सौत्रत्वात् साधुः ॥ सस्वराराादिरूपेण विधानात् कथमभक्तत्वादिशङ्केत्यत आह

यद्यपीति ॥ (कै)

अविधानादिति । (कै)

अनुच्चारणादित्यर्थः ॥

तात्पर्य्येति । (कै)

प्राप्ताप्राप्तविवेकन्यायेनेत्यर्थः ॥

केवलेति । (कै)

रेफमात्रविधौ सूत्रतात्पर्य्यादिति भावः ॥ यत्तु अयमपि विचारो भूतस्याणो रपरत्वमिति पक्षे नष्टाश्वरथन्यायनाऽऽमान्तर्य्य-मेवान्तर्य्यमिति ऋकारस्याकाराकारावेव गुणवृद्धी भविष्यतः । अरादिरूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथाऽत्रापीति तत्त्वमिति तन्तु प्रकृतसूत्रे तस्य पक्षस्याश्रितत्वादयुक्तम् ॥ वार्त्तिके प्रतिषेधोऽभावो निवर्त्तनं च आद्ये स्यादिति शेषः ॥

## [1]द्वितीये वक्तव्य इति ।

"गृप्रोः" क्विपि "गीः" "पूः" "[2]ऋत इत्" "[3]उदोष्ठ्य" इतीत्त्वोत्त्वे ॥ भाष्ये

## पदमिति । (भा)

पदस्येत्यनुवर्त्तमानमित्यर्थः ॥

## अनन्तरयोगेति । (भा)

अनन्तरशब्दोऽव्यवहितवाची ॥

## स्वरविधाविति । (भा)

यद्यपि हल् स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम् । अत एव "[4]अचः कर्त्त" इति सूत्रेऽच इति चरितार्थम् । तथापि तदना-श्रयेणैकदेशयुक्तिर्भाष्यमिति तत्त्वम् ॥ भाष्ये "माङ्" प्रयोगोऽड-भावाय । तस्मिन् "हि" अट्स्वरः स्यात् । हि प्रयोगो "[5]हि च" इति निघातनिषेधाय । "स्म" शब्दो लङ्सिद्धये ॥

## अभ्यासावयवस्येति । (कै)

गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं "तन्मध्यपतित" न्यायेन न लेतावतावयवत्वमिति भ्रमितव्यमिति भावः । यद्वा ऋवर्णान्ता-भ्यासस्येत्यर्थे पूर्वंतकारस्य "हलादिः शेषेण" निवृत्तौ उरदत्त्वं ततः

---

१ द्वितीये वक्तव्यमिति । क । ग । इ ॥

२ अ ७ । पा १ । सू १०० ॥ ३ अ ७ । पा १ । सू १०२ ॥

४ अ ६ । पा १ । सू १९५ ॥

५ अ ८ । पा १ । सू ३४ । हि युक्तं तिङन्तं नानुदात्तम् । आ हि स्मा याति ॥

पुन"र्हलादिः शेषो" न स्याद् अनवयवत्वादिति भावः । न चैवं "लक्ष्ये लक्षणस्य" इति न्यायेन पुन"र्हलादिः शेषा"नापत्तिरिति वाच्यम् । लक्ष्यभेदात् । [1]नृकुटीशब्दात्तु भवादावण् । नृपते- "[2]र्दित्यदित्यादित्य" इति ण्यः ॥ ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह

यस्मादिति । (कै)

यस्माद् विधिस्तद्वृत्तिनृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन तदादित्वं च रेफान्तस्य मुख्यं सुबन्तत्वं च प्रत्ययलक्षणेनेति भावः ॥ एकवचनान्ताऽनुदाहरणे बीजमाह

एकेति ॥ (कै)

नित्यत्वादिति । (कै)

विकरणविधौ "सार्वधातुक" इति विषयसप्तमी अन्यथा- ऽभक्तत्वेऽनन्तरसार्वधातुकाऽभावेन विकरणाप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः ॥

नित्यत्वादिति । (कै)

तयो ङित्वादित्वस्यैव प्रवृत्तेः ॥

न प्रकल्पत इति । (कै)

नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः ॥

नृकल्पेति । (कै)

नृशब्दात् कल्पः प्रत्ययः ॥

---

१ नृकुटीशब्दाद्भवादावण् । क । ग । इ ॥

२ अ ४ । पा १ । सू ८५ ॥

पदसंज्ञेति। (कै)

"स्वादिष्वि"त्यनेन यद्यसौ कल्पशब्दावयवस्स्यात् तदा स्वावयवभूतरेफान्तस्य मारित्यस्य न स प्रत्ययः परः स्वादिति भावः॥ परादिरित्यत्र परशब्देन परत्वपर्य्याप्त्यधिकरणो यावान् स सर्वोऽपि गृह्यते न तदवयवोऽपीति तात्पर्य्यम्॥ ननु प्रत्ययस्य कथं पदत्वमत आह

पदशब्देनेति। (कै)

[1]कल्पिरूपः पदसंघातः पदसमुदाय इति भाष्यार्थः। तस्मात् पक्षत्रयेऽपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः। वृद्धेर्बहिरङ्गाऽसिद्धत्वं तु नोक्तं त्रिपादीस्थेऽन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः॥ भाष्ये

उपदेश इति वर्त्तते इति। (भा)

"[2]अचः कर्त्ति"त्यत्र "[3]तास्यनुदात्तेद्" इत्यत इत्यर्थः॥ भाष्ये

अथवा पुनरस्तु परादिरिति। (भा)

[4]वेंवधारणविसर्जनीयप्रतिषेधयोः कर्त्तव्यतायाः पूर्वान्तपरादिपक्षयोस्समत्वात् परादिपक्षो वा वक्तव्यः पूर्वान्तो वा इत्यत्र न विशेष इति चेत् कश्चिद् ब्रूयात् तत्राह वार्त्तिककारः "परादा-

---

१ भाष्ये "कल्पिपदसंघातभक्तः" इति पाठोऽस्ति। क्वचिद् "कल्पपदसंघातभक्त" इति पाठोऽप्यस्ति॥

२ अ ६। पा १ सू १९५॥ ३ अ ६। पा १। सू १८६॥

४ पूर्वान्ते वेंवधारणं विसर्जनीयप्रतिषेधो यकारस्य। वा॥

वि"तीत्यर्थः॥ "[1]परादौ" इति वार्त्तिके पुगन्तद्वन्द्वस्य प्रतिषेधपदेन षष्ठीतत्पुरुषो वक्तव्य इति शेषः॥ षड्गुपधाद्ध्रस्वत्वं वक्तव्यम् अग्रे सर्वत्रायमेव शेषो बोध्यः॥

## उपदेश इति वर्त्तते इति। (भा)

"[2]अतो लोप" इत्यत्र "[3]अनुदात्तोपदेश" इत्यत इत्यर्थः॥ "पररूपेण"। "[4]अतो गुण" इत्यनेन॥

## नन्विति। (कै)

"[5]आदेः परस्य" इति "[6]निर्दिश्यमान" परिभाषाबाधकमित्यभिमानः। तस्यैवायमनुपसंहार इत्युत्तरम्॥ ननु सूत्रे उच्चारितस्य ण्लो नादेशः किन्तु तत्[7]प्रत्यायिताकारस्येति षष्ठीनिर्दिष्टस्यादेशा इत्ययुक्तं स्यादत आह

## प्रत्याय्येति। (कै)

"निर्दिश्यमानस्य" इत्यस्य प्रतिपादितस्य इत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरिति बोध्यम्॥

## यदि त्विति। (कै)

तथा तु वक्तुमशक्यम्। सर्वत्रादेशापत्तेरिति भावः॥ कथं तर्हि "इडपि" इत्यादि भाष्यमत आह

---

१ परादावकारलोपौत्व पुक्प्रतिषेधषड्गुपधाद्ध्रस्वत्वमिटोऽव्यवस्थाऽभ्यासलोपोऽभ्यस्तादिस्वरो दीर्घत्वं च। वा॥

२ अ ६। पा ४। सू ४८॥ ३ अ ६। पा ४। सू ३७॥

४ अ ६। पा १। सू ९७॥ ५ अ १। पा १। सू ५४॥

६ निर्दिश्यमानस्यादेशा भवन्ति। परिभाषा—१२॥

७ तत्प्रत्यायिताकारस्य। इ। तत्सुत्यायिताकारस्य। ग॥

प्रवृत्तौ वेति। (कै)

"[1]नेड्वशी"त्यत्रोपदेश इत्यपहत्योपदेशे वशादेरेव निषेध इति भावः॥ भाष्ये

वद्वत इति। (भा)

ऋवर्णान्ताभ्यासस्याऽदित्यर्थं पूर्वं तल्लोपे पश्चाद्रेफान्तस्य लोप इति पक्षे इदम्। "वव्रे" इत्यप्युदाहार्य्यम्॥

प्रकर्त्तेति। (भा)

तृन्॥ "एष स्वरः"। पूर्वपदप्रकृति स्वरः॥ कृदुपदेशकालि-कतादिप्रत्ययप्रतीत्यर्थं "[2]तादौ" इति सूत्रे कृद्ग्रहणम् इति भाष्योदाहृतवार्त्तिकार्थः॥ "तादौ" इति सूत्रेण गतेः स्वरो विधीयते क्रियायोगेच गतित्वम्। क्रियावाची च धातुः। तत्र तिङन्ते पूर्वपदाभावेन कृदन्ते एव सिद्धमिति कृद्ग्रहणमुक्तार्थम्। न च कृद्ग्रहणाभावे तादित्वमुत्तरपदस्य विशेषणं स्यात्। तथा च प्रतरितेत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति वाच्यम्। अतन्निप्रत्ययविशेषणताया एव न्याय्यत्वादितिदिक्॥ ननु रेफस्य पराद्विलेऽप्रकृत्वाऽभावाद्धिलोपो न प्राप्नोतीति कुतो नोक्तमत आह

अन्तरङ्गत्वादिति। (कै)

तदानीं सुपोऽभावादाह

कल्पनायामिति। (कै)

पदस्य विभज्यान्वाख्यानमिति भावः

---

१ अ ७। पा २। सू ८॥ २ अ ६। पा २। सू ५०॥

## पूर्वान्तेति। (कै)

नार्कुटादौ वचनेनैव निर्वाहो भाष्ये उक्त इति बोध्यम्। एवं च रपर इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरितिध्वनितम्। अवयवत्वं चावयवसादृश्ये पर्य्यवस्यति न हि वर्णस्य वर्णान्तरमवयवो भवति अत एव प्रसङ्गावस्थायां रपरत्वे गुणादिशब्देन विधानं "[1]यदागमा" इति न्यायेन विशिष्टस्य गुणादित्वात्। एवं च ऋवर्णादचि पूर्वपरयोरन्तरतमो रपरोऽण् भवतीत्यर्थ इति बोध्यम्। गुणादिशब्देनाऽरारोर्ग्रहणाऽभावे तु ऋकारस्य गुणवृद्धी अरारावेव इति नियमो न स्यात्। गुणादिशब्देन अकारादे रेफः परो यस्मात् तादृशस्य विधानं गुणत्वादिकं चाकारादिनिष्ठमेव तेन च नान्तर्य्यम्। एतदेवाभिप्रेत्य "[2]रदाभ्याम्" इति सूत्रे भाष्ये "गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत" इति वक्ष्यति। अतएव "[3]यद्यन्त इति वर्त्तते ततः पूर्वान्त" इत्युपक्रमस्थभाष्यमेकदेश्युक्तिः। तथाहि सति यथा परादिपक्षे नार्कल्पिरित्यादौ रेफस्य कल्पीतिसमुदायावयवत्वोपपत्तये परत्वपर्य्याप्त्यधिकरणादिरित्यर्थस्तथा "पूर्वान्त" इत्यस्य पूर्वत्वपर्य्याप्त्यधिकरणान्त इत्यर्थापत्तौ उक्तदोषो "रदाभ्याम्" इति सूत्रस्थभाष्यविरोधश्चेत्याहुः॥

---

१ परिभाषेन्दु-११॥　　　　२ अ ८। पा २। सू ४२॥
३ अत्रैवोक्तं भाष्ये॥

# अलोऽन्त्यस्य। १। १। ५२॥

भाष्ये "[1]प्रसज्येत" इत्यनन्तरं तन्निवृत्तये अनेकाल् सर्वस्य इति वाच्यं स्यादिति शेषः॥ नन्वलन्त्यस्येत्युच्यमाने सूत्रभेदः स्यादत आह

**प्रथमेति।** (कै)

वक्तृत्वस्याविवक्षितत्वं दर्शयितुमेवमुक्तमिति भावः॥

**प्राप्नोतीति।** (कै)

लोपस्याभावरूपत्वेनाऽल्रूपत्वाऽभावादिति भावः। एवंचायं पक्षो दुष्ट एव। "[2]क्सस्याऽचि" इति लोपे प्रकृते "[3]लुग्वा दुह" इति लुग्ग्रहणस्य प्रथमान्तपक्षेऽलुग्रहणमनेकाल्भिन्नलक्षकमित्यर्थ-ज्ञापकत्वमिति नाऽयं दोष इति भाष्याशयमन्ये॥ भाष्ये

**इदं नियमार्थमिति।** (भा)

इदमा सूत्रं न परामृश्यते। अप्राप्तान्त्यादेशविध्यर्थत्वात्तस्य किन्त्वल्पदमिति तस्य नियमार्थमुपपादयति

**अन्त्यस्येति॥** (कै)

**अलोऽपीति।** (कै)

अलात्मकादेशस्याऽपीत्यर्थः। अपिना अनेकालोऽपि॥

---

१ अनेकालप्यादेशोऽन्त्यस्य प्रसज्येत। भा॥

२ अ ७। पा ३। सू ७२॥ ३ अ ७। पा ३। सू ७३॥

## न त्विति । (कै)

"[1]षष्ठी स्थान" इत्यनुवर्त्त्य स्थानषष्ठीबोधितान्त्यस्य इति व्याख्यानादित्यर्थः ॥ यत्तु "[2]यथातथयथापुरयोरि"ति सूत्रे "न यथातथाऽयथातथा अयथातथाभाव आयथातथ्यमि"ति भाष्यदर्शनात् तन्नामाण्येन निपातसमुदायात् प्रत्ययो निपातसमुदायेन नञ्समास इत्यङ्गीकार्य्यम् । तत्र अयथातथाशब्दात् ष्यञि "[3]यस्येति" लोपोऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्तस्य यथातथेति पदसमुदायस्य स्यादिति तन्न । निर्दिश्यमानपरिभाषया सिद्धेः । तदनाश्रयेण वा तदुक्तिः ॥

## पदस्य त्विति । (कै)

अधिकृतस्य पदस्येत्यस्य वस्वादिभिर्विशेषणादित्यर्थः ॥

## यदि खल्विति । (भा)

पराभिप्रायं वदता सूचितमन्यादृशं स्वाभिप्रायं प्रकटयति ।

## अवश्येति ॥ (कै)

## असौ योगः । (कै)

"[4]अनेकाल् शित्" इति योगः । "[5]अतो भिस" इत्यादौ "[6]आदेः परस्य" इत्यादिबाधनार्थ इति भावः ॥ नन्वस्यावश्यकत्वेऽ"[7]न्यविशेषणेऽपी"त्यादिग्रन्थोऽसङ्गतोऽत आह

---

१ अ १ । पा १ । सू ४९ ॥ २ अ ७ । पा ३ । सू ३१ । "अयाथातथ्यम्" इत्यपि ॥ ३ अ ६ । पा ४ । सू १४८ ॥ ४ अ १ । पा १ सू ५५ ॥ ५ अ ७ । पा १ । सू ९ ॥ ६ अ १ । पा १ । सू ५४ ॥
७ अन्त्यविशेषणेऽपि सति तन्न करिष्यते । भा ॥

अथेति । (कै)

अल् इति प्रथमान्तं मण्डूकानुवृत्त्या "आदेः परस्य" इत्यत्र सम्बध्यते इत्येषादौ न दोषः । तातङ्यपि ज्ञापकात् सर्वादेशत्व-म्भविष्यतीति भावः ॥ भाष्ये

ङिच्चेवाऽनेकालन्त्यस्येति । (भा)

अल्रूपङिदित्यस्य फलाभावादनेकालिति लभ्यम् । एवंचास्य सूत्रस्यानेकालादेशेऽप्रवृत्त्यैतत्साहचर्य्याद् "आदेः परस्य" इत्यस्या-ऽप्यनेकालादेशेऽप्रवृत्तिरिति दिक् ॥

किमर्थं पुनररिति । (भा)

किं स्थानषष्ठीनिर्देशविषयमुत षष्ठीमात्रविषयमिति प्रश्नः । "स्थाने विज्ञातस्य" कस्येत्यपेक्षायामाह

षष्ठीति । (कै)

स्थाननिरूपितसम्बन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः ॥ नन्वेवं विज्ञातायाः इति वक्तुं युक्तमत आह

आदेश इति । (कै)

स्थानषष्ठीसम्बन्धादादेशत्वेन यो विज्ञात इत्यर्थः । अन्ये तु "अलोऽन्त्यस्य" इति यदुच्यते तेन स्थाने विज्ञातस्य समुदाय-स्थाने प्रसक्तस्यान्त्येऽल्यनुसंहार उपसंहारस्तत्स्थानिकत्वमात्रं क्रियते बोध्यत इति भाष्याक्षरार्थः ॥ "स्थाने विज्ञातस्य" इत्यस्य व्याख्या स्थाने प्रसक्तस्य इति कैयटव्याख्याने एतदैयर्थ्यं भातीत्याहुः ॥

षष्ठीमात्रमिति । (कै)

उपलक्षणमेतत् । षष्ठीमात्रोच्चारणेन विधीयमानं चेत्यपि बोध्यम् ॥

ततो यदुक्तमिति । (कै)

आकारावयवत्वप्रणिदापयतीत्यादौ णत्वं न स्यादित्यर्थः । न च अवयवावयवः समुदायावयव इति निर्बाहः । यस्याऽवयवस्तत्र तद्विशिष्टे यत्र तदवयवत्तित्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायावयवत्वबुद्धिर्हि लोकसिद्धा यथा भुजावयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादौ । न चैवमत्राऽऽकारावयवपकारादिविशिष्टे वर्णत्वबुद्धिः । अर्थवत आगमेन तु तद्विशिष्टे तदर्थवत्त्वबुद्ध्या तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति भवितेत्यादावङ्गावयवत्वं सम्भवतीति इटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वन्तु वाचनिकं गौणं तत्र यावद्वचनं वाचनिकमिति न्यायेन समुदायावयवत्वे मानाभाव इत्याशयः ॥

सम्बन्धार्थमिति । (कै)

अन्त्यस्येत्यनेनेति भावः ॥

शास्त्रे येति । (कै)

या षष्ठी सा स्थानेयोगैव सा चाऽन्त्येऽलीति तु नार्थः । स्थानेयोगेति पदाऽऽवृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवं तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवाऽन्त्येऽल्येव चेति वाक्यार्थ इति भावः ॥

सा चेति। (कै)

सा षष्ठी स्थानेयोगैव चेत्यन्वयः। स्थानेयोगत्वमेव बाध्यत इति। अत्र हेतुस्तुस्थेत्यादिरुपपत्त्येत्यन्तः॥

सम्बन्धस्येत्यादि। (कै)

सम्बन्धनिरूपकस्य सम्बन्धनिरूपकान्तरेणेत्यर्थः। सन्नियोगशिष्टन्यायस्तु न परिभाषाविषये। "[1]तस्मिन्नि"त्यादेरुत्तराङ्गविकलायास्तत्र तत्रोपस्थितिस्वीकारादित्याशयः॥

इत्यनेन बाध्यत इति। (कै)

न "[2]आद्यन्तौ टकिताविं"त्यनेनेति भावः॥

---

# ङिच्च। १। १। ५३॥

भाष्ये

कस्मान्नभवतीति। (भा)

येन नाप्राप्तिन्यायेनाऽस्यानेकाल्शित्यस्यापवादत्वादिति भावः। उत्तरस्य त्वयं भावः। नेदमपूर्वविधायकं किन्तु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकाल्शित्येतद्बाधाऽनुवादकम्। अनुवादफलन्तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः। एवंच प्रकृते नास्य प्रवृत्तिः। प्रवृत्तौ हि शास्त्रस्यापूर्वविधायकतापत्त्या गौरवापत्तिः। एवंच

---

१ अ १। पा १ सू ६६॥ २ अ १। पा १। सू ४६॥

यत्र सर्वादेशे ङित्त्वस्य वैयर्थ्यन्तत्र तद्बाधः। यत्र तु न तत्र न तद्बाध इति भावः॥

## विप्रतिषेधादिति। (भा)

परिभाषात्वविरोधादित्यर्थः। यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात् तदाऽनुवादत्वासम्भवेन परिभाषाप्रकरणविरोध इति भावः। यथा चैतत् तथाऽनुपदमेव स्पष्टी भविष्यति। "[1]विप्रतिषेधे परम्" इति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात् सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजं न त्वस्य सूत्रस्य सर्वादेशाप्राप्तिविषये क्वचिच्चारितार्थ्यम्। अवश्यप्राप्तिरेव च बाध्यत्वे बीजं दृष्टम्। किं च। विप्रतिषेधशास्त्रपरवार्त्तिकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैलीभाष्यकारस्य दृश्यते न चात्र तथोक्तम्भगवता। यद्यप्यन्यत्रानुवादत्वे[2] दोष उक्तस्[3]शास्त्रस्य तथाऽपि परिभाषाणान्नियमरूपत्वेन तासु गुण एव तत्र हि प्राप्तानुवादाद्वेतरनिवृत्तिरर्थात्। यथा "व्रीहीनवहन्ति" इत्यवघातानुवादेन नखविदलनादिनिवृत्तिः। यथा च "तस्मिन्नि"त्यादौ प्राप्तपूर्वस्येत्याद्यनुवादेन परादिनिवृत्तिः। किं च "[4]टप् यप् अबादिष्वन्यार्थपित्त्वेषु चरितार्थस्य "[5]अनुदात्तौ सुप्पितौ" इत्यस्य जित्वरीत्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वरपि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिस्तदाह

१ अ १। पा ४। सू २॥ २ शास्त्रस्य। क। ग। ङ॥

३ अत शास्त्रस्य इति नास्ति क ग ङ पुस्तके॥

४ कप् यप् अनादिषु। क। ग। ङ॥ ५ अ ३। पा १। सू ४॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## आ कडारादेका संज्ञा । १ । ४ । १ ॥

नन्वविरुद्धानां संज्ञानां विषये विरोधमूलकविप्रतिषेधशास्त्राऽप्रवृत्तेरस्य वैयर्थ्यमनुपपन्नमत आह

**आकडारादिति ।** (कै)

अविरोधमजानतः शङ्केति भावः ॥ निरवकाशस्थले तु अविरोधं जानतोऽपि शङ्केत्याह

**विशेषेति ।** (कै)

नतु विरोधादपीत्येवकारार्थः ॥

---

आ कडारादेका संज्ञा । १ । ४ । १ ॥

किमर्थमिदमुच्यते । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् । क्व । अन्यत्र संज्ञासमावेशो भवति । क्वान्यत्र । लोके व्याकरणे च । लोके तावत् । इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकस्य

## न च संज्ञानामिति । (कै)

इन्द्रः शक्रः कृत् कृत्य इति च संज्ञानां लोकशास्त्रयोर्युगपत्प्रवृत्तिदर्शनादिति भावः ॥

## न चेति । (कै)

अनवकाशत्वप्रयुक्त इत्यर्थः ॥ एकफलकत्वे सहानवस्थानलक्षणविरोधे वा अनवकाशं बाधकं न चैतदुभयमप्यत्रेत्याह

## भिन्नफलत्वादिति । (कै)

वस्तुतः समावेशदर्शनादेवाविरोधो विशेषत्वेऽप्यबाधकत्वमिति भाष्याशयः। कैयटोक्तमेकफलत्वं विरोधश्च व्यभिचरितौ । अत एवाचिरादेशेन नुटो बाधमाशङ्क्य "न तिसृ" (६।४।४) इति ज्ञापकेन समाहितं सप्तमे (७।२।१००) भाष्ये । तादृशस्थले एकफलत्वाभावः स्पष्ट एव । तक्रेण दध्नो बाधनमविरोधे आस्वादरूपफलभेदे च दृष्टमित्यलम् । कृते तु सूत्रे अन्यत्र बलवत्त्वेन दृष्टतया व्यवस्थाकाङ्क्षायां परत्वानवकाशत्वाभ्यां सा इत्याहुः ॥

## यद्यपीति । (कै)

एवं च दृष्टान्तो विषम इति भावः ॥

---

शब्दस्य बह्व्यः संज्ञा भवन्ति । व्याकरणेऽपि कर्त्तव्यम् हर्त्तव्यमित्यत्र प्रत्ययकृत् कृत्यसंज्ञानां समावेशो भवति । पाञ्चालः वैदेहः वैदर्भ इत्यत्र प्रत्ययतद्धितवृद्धाजसंज्ञानां समावेशो भवति । अन्यत्र संज्ञासमावेशादेतस्मात्कारणाद् आ कडारादपि संज्ञानां समावेशः प्राप्नोति । इष्यते चैकैव संज्ञा स्यादिति तदन्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम् । एव-

## उदाहरणेति । (कै)

फलभेदेऽपि यदि समावेशः किमु वक्तव्यं तद्भेद इति दृष्टान्ततेति भावः ॥ ननु इन्द्रादीनामैश्वर्य्यशक्तिमत्त्वबहुधाज्ञानपूर्दारणानि प्रवृत्तिनिमित्तानीति । कथमेते संज्ञाशब्दाः शब्दप्रवृत्तिनिमित्तको हि स इति चेन्न । सत्यपि योगे रूढिमात्रेण संज्ञाशब्दत्वमिति भगवतोऽभिप्रायात् ॥

## कर्मणि विधानमिति । (कै)

एवं च फलभेदादविरोधान्न बाध इति कैयटाशयः । ननूभयथा पाठनिर्णये कथं संदेहोऽत आह ।

## गुणदोषेति । (कै)

किं सम्भवमात्रेण [1]द्विधापाठोऽयास्वरसादिति विवेक्तुं तद्विचारः कार्य्य इति भावः ॥

## यत्नः । (कै)

ज्ञापकाश्रयणचकारादिरूपः ॥ यद्यपि परं कार्य्यमिति [2]पाठेऽपि सूत्राणामन्यथा पाठः कार्य्यस्तथापि तत्र न वर्णगौरवं नापि प्रतिपत्तिगौरवमिति न स दोष इति भावः ॥

---

१ द्विधापाठोऽर्थास्वरसाद् । क ॥

२ "पाठे" इत्यारभ्य "स दोषः" इत्यन्तं नास्ति । इ ॥

---

मर्थमिदमुच्यते ॥ अस्तिप्रयोजनमेतत् । किं तर्हीति । कथं त्वेतत् सूत्रं पठितव्यम् । किमा कडारादेका संज्ञेति । आहोस्वित् प्राक् कडारात् परं कार्यमिति । कुतः पुनरयं सन्देहः । उभयथाह्याचार्य्येण शिष्याः सूत्रं

## कार्य्यशब्देनेति। (कै)

संज्ञा इत्येव तु नोक्तम् उपस्थानस्थयात्। यद्यप्यन्यान्यपि कार्य्याण्यत्र सन्ति वचनपुरुषनियमपूर्वनिपातादयः तथापि तेषां केनापि बाधप्रसक्त्यभावाद्बाधितप्रवृत्त्ये चैतत् सूत्रमस्त्याप्तलाभ इति भावः॥

## पूर्वया। (कै)

अनवकाशया॥

## न नियमार्थमिति। (कै)

आद्ये पाठे तु एकैव संज्ञा न द्वितीयेति नियमे विध्यर्थत्वासम्भवात्॥ अपच विध्यर्थत्वसम्भवेन नियमो न युक्त इति भावः॥ ननु पर्य्यायेण प्रवृत्त्या पूर्वस्यापि चारितार्थ्यसंभवेन संज्ञानां विरोधाभावेन च उभयोः प्रसक्तौ अत्रापि पाठे नियम एव स्यादत आह

## एतदेव चेति। (कै)

नियमेऽनुवाददोषापत्त्या वरं बाधकत्वकल्पनाद्वारा विधित्वमिति भावः॥

---

प्रतिपादिताः। केचिदा कडारादेका संज्ञेति। केचित् प्राक् कडारात् परं कार्य्यमिति। कश्चात्र विशेषः। तत्रैकसंज्ञाधिकारे तद्वचनम्। वा। तत्रैकसंज्ञाधिकारे तद्वक्तव्यम्। किम्। एका संज्ञाभवतीति॥ ननु च यस्यापि परं कार्य्यं तेनापि परग्रहणं कर्त्तव्यम्। परार्थं मम भविष्यति। विप्रतिषेधे चेति (१। ४। २)। ममापि तर्ह्येकग्रहणं परार्थं भविष्यति। सरूपाणामेकशेष एकविभक्तौ (१। २। ६४) इति। संज्ञाधिकारश्चायम्।

विप्रतिषेधे (कै)

इत्यस्य इष्टवाधयेति शेषः॥ भाष्ये

परार्थमिति। (भा)

अनच(अपि। का) अकरणार्थमित्यर्थः। परार्थं यत्त्वया कृतं तदेव ममात्र कृतं भविष्यतीत्यर्थः॥ ननु विशेष्यवाचिपदासन्निधाने नपुंसकमेव प्रयोक्तुमुचितं संज्ञापर्य्यायनामादिशब्दानामपि विशेष्यत्वसंभवादृत आह

संज्ञेति। (कै)

प्रचुरप्रसिद्धेः (सिद्धे। इ) संज्ञाशब्द एव प्रकरणादुपतिष्ठते इत्यर्थः॥ ननु "सरूपाणाम्" (१। २। ६४) इत्यस्यातिक्रान्तत्वात् कथं तदर्थतास्येत्यत आह

अस्माच्चेति। (कै)

एकसंज्ञाधिकारोत्तरमित्यर्थः॥

लिङ्गविपरिणामेनेति। (कै)

भावसाधने शेषशब्दे विभक्तिविपरिणामेनेत्यपि बोध्यम्। बहुयोगव्यवधानात् यत्त्वया परार्थं कृतं तदेव ममात्र बुद्धिस्थं भवि-

---

तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः। तत्रैतावद्वाच्यम्। आ कडारादेका। किम्। एकासंज्ञा भवतीति॥ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः। वा। अङ्गसंज्ञया भपदसंज्ञयोः (१। ४। १३-१४-१८) समावेशो न प्राप्नोति। सार्पिष्कः। बार्हिष्कः। याजुष्कः। धानुष्कः। (४। ४। ५१॥ (५। १। ६३) ७। ३। ५१॥ ८। ३। ३९॥ ७। २। ११८)

ष्यति इत्यर्थकतया तत्रत्यमत्रानुवर्त्तते इत्येव भाष्येण (भाष्यं न। का) व्याख्यातम्॥ नन्वेवमपि संज्ञेत्यधिककार्य्यमेवेत्यत आह

**संज्ञाधिकारस्येति॥** (भा)

**किम्** (भा)

इतिप्रश्नः। "एका संज्ञा" इत्याद्युत्तरम्। प्रश्ने सामान्ये नपुंसकम्। सर्पिः शब्दादार्हीयष्ठक् तदस्य पण्यमिति (वा। इ) इसन्तत्वात् कः। तत्राङ्गसंज्ञाभावे किं स्यादत आह

**असत्यामिति॥** (कै)

**अनङ्गस्यापीति।** (कै)

यद्यपीष्टानुरोधात् समावेशोऽपि ज्ञापयितुं शक्यस्तथापि लघ्वैकशरणानामिष्टानिष्टे दुर्ज्ञेये इति भावः॥

**देवदत्तो गार्ग्य इति।** (कै)

वाक्यसंस्कारपक्ष इदम्। प्रत्ययग्रहणपरिभाषया वृद्धिवारणं शक्यमिति चिन्त्यम्। कुमुदान् इति ड्मतुप्। सिद्धान्तस्थित एव ज्ञापकात् समावेश इति "परं कार्य्यत्वम्" इत्यत्र सुबन्तसमुदायात् कथं तद्धितस्तदुत्पत्तावपि कथं पूर्वपदे विभक्तिश्रवणमत आह

---

बाभ्रव्यः। माण्डव्य इति (४। १। १०६। (१०५) ६। ४। १४६॥ ७। २। ११७)। अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम्। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः। यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्। पूर्वं तस्य भपदसंज्ञे पराङ्गसंज्ञा। कथम्। एवं स वक्ष्यति। यस्मात्प्रत्ययविधिस्तदादिसुप्तिङन्तं पदम्।

**परं कार्य्येति। (कै)**

शब्दस्य भावस्यार्थः। सर्वैकदेशद्वारा एतत् सूत्रार्थरूपः। अनुवादेऽर्थविशेषणकशब्दस्वरूपप्रतीतेरितिभावः॥

**ततः इति। (कै)**

अनुवर्त्तमानस्यापि विषयकोटौ निवेशादितिभावः॥

**अङ्गं सदिति। (कै)**

स्वादिषु यदङ्गं तत्पदमिति व्याख्यानेनानुवादसामर्थ्यादङ्गपदत्वयोः समावेश इति भावः॥ नन्वनुवृत्तिसामर्थ्यात् समावेशोऽत आह

**एका संज्ञेति॥ (कै)**

तदुक्तं भाष्ये

**एका संज्ञेति वचनात्** (भा)

इत्यादि॥

**बाधे इति। (कै)**

उत्सर्गापवादन्यायेनेति भावः॥

---

नः क्ये (१। ४। १५)। सिति च (१। ४। १६)। स्वादिष्वसर्वनामस्थाने (८। ३। ६४)। यचि भम् (१। ४। १८)। तस्यान्ते प्रत्यये अङ्गमिति। तत्रारम्भसामर्थ्याच्च भपदसंज्ञे परं कार्य्यत्वाच्चाङ्गसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्याप्यङ्गसंज्ञापूर्विके भपदसंज्ञे। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्यते। एकासंज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः॥ कर्मधारयत्वे तत्पुरुषग्रहणम्। वा। कर्मधारयत्वे तत्पुरुषग्रहणं कर्त्तव्यम्।

**इह त्विति । (कै)**

इहापि तथैव स्यादितिभावः ॥

**कथमिति चेदिति । (कै)**

पदमित्यनुवृत्तावपि उभयोर्विधेयतया कथं भसंज्ञा पदकार्य्यमिति प्रश्नः ॥

**उच्यते इति । (कै)**

नानेन पदसंज्ञा विधीयते किन्त्वनूद्यते इतिभावः ॥

**पदसंज्ञा प्रवर्त्तते इति । (कै)**

तद्बुद्धिः प्रवर्त्तते इत्यर्थः । अनुवादसामर्थ्यादितिभावः ॥ इह तु "एका संज्ञेति" नियमबाधनाय विधेयतेति विशेष इति बोध्यम् । वस्तुतस्तद्भाष्यमन्यार्थकं न तु एवमर्थकमिति तत्रैव निरूपितम् ॥ नन्वनया रीत्या परकार्य्यम् इति पाठेऽपि ज्ञापितसंज्ञाबाधस्यासंज्ञाबाधाय पर्य्याय एव स्यात् न तु समावेश इति चेन्न । अनुमितासाप्यपवादभूतत्वादस्याः प्राप्तेर्ज्ञापितो बाधस्तदितरपर्य्यवसायीति समावेशसिद्धिरित्याशयात् ॥ ननु बहुव्रीहेः संज्ञानिवृत्तये तत्र तत्पुरुषग्रहणमावश्यकमत आह

---

तत्पुरुषः समानाधिकरणः कर्मधारयः (१ । २ । ४२) इति । एकसंज्ञाधिकार इति चोदितम् । अक्रियमाणे ह्यनवकाशा कर्मधारयसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेस्तस्योभयोःसंज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य कर्मधारयसंज्ञा परा तत्पुरुषसंज्ञा । कथम् । एवं स वक्ष्यति । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधाय

**एका संज्ञेति ॥** (कै)

**अन्यच्च वेति ।** (कै)

यथान्यासमित्यर्थः ॥

**मया त्विति ।** (कै)

परं कार्य्यत्वादिनेत्यर्थः ॥ ननु समानाधिकरणग्रहणमपि कर्त्तव्यमिति [१]किं तत्पुरुषपदकर्त्तव्यतैव विशेष्योच्यतेऽत आह भाष्ये

**एकसंज्ञाधिकार इति ॥** (भा)

**चोदितमिति ।** (भा)

यद्यन्यत्र सा संज्ञा तदोभयं कार्य्यम् एकसंज्ञाधिकारे तत्पुरुषप्रकरणे [२]"नवकेवलाः समानाधिकरणेने"त्युत्तरं करणे तु अधिकारादेव समानाधिकरण इति लभ्यते इति तत्कर्त्तव्यतैव [३]चोदितेति भावः ॥

**अनवकाशेति ।** (भा)

यथाचानवकाशत्वावकृप्रोहिसंज्ञां बाधते तथा तत्पुरुषसंज्ञामपि बाधेतेत्यर्थः ॥

---

१ किं तत्पुरुषपदकर्त्तव्यमिति । क ॥ २ अ २ । पा १ । सू ४९ ॥
३ नोदिता । का । इ ॥

---

इति (२ । १ । ४९) । एवं सर्वं कर्मधारयप्रकरणमनुक्रम्य तस्यान्ते श्रितादि-स्तत्पुरुष इति । (२ । १ । २४)। तत्रारम्भसामर्थ्याच्च कर्मधारयसंज्ञापरं कार्य्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ॥ ननु च यस्याप्येकसंज्ञाधिकारस्त-स्यापि तत्पुरुषसंज्ञापूर्विका कर्मधारयसंज्ञा । कथम्। अनुवृत्तिः क्रियते। पर्यायः प्रसज्यते । एका संज्ञेतिवचनान्नास्ति यौगपद्येन संभवः ॥ तत्पुरुषत्वे

## यद्येवमिति । (कै)

कर्मधारयप्रकरणान्ते [1]"द्वितीयाश्रित" इत्यादिपठनीयं श्रितादिमपेक्ष्य च तत्पुरुषसंज्ञा कर्त्तव्येति भाष्यार्थं मत्वा शङ्केयं यदि तु "द्वितीयाश्रित" इत्यादि कृत्वा कर्मधारयप्रकरणमनुक्रम्य [1]"उपपदमतिङिति" प्रकरणान्ते श्रितादिभिस्तत्पुरुष इत्युच्यते तदा नेयं शङ्केति ध्येयम् ॥ परन्त्वत्र पक्षे श्रितादिभिरित्यस्याधिकरणाद् गौरवं भवतीत्युपाध्यायोक्तमेव सम्यक् ॥ नन्वेवमपि समानाधिकरणस्य तत्पुरुषत्वं न स्यात् तत्पुरुष इत्यस्योत्तरत्रैव सम्बन्धादत आह

## तत्पुरुष इत्यत्र चेति । (कै)

तथा च [3]कर्मधारयसंज्ञया तत्पुरुषत्वस्य पर्य्याये सिद्धे परं कार्य्यमिति समावेशार्थमिति भावः । अत्र पक्षे बहुव्रीहिसंज्ञाविषयेऽस्याप्रसक्तिरेवेति बोध्यम् ॥ ननु द्वितीयाध्यायस्य तत्पुरुषसंज्ञायाः प्रथमे कथमनुवृत्तिरत आह

---

१ अ २ । पा १ । सू २४ ॥ २ अ १ । पा २ । सू १९ ॥

३ "कर्मधारयत्वस्य पर्य्याये सिद्धे"। इ ॥ "परम्" इत्यारभ्य "बोध्यम्" इत्यन्तं नास्ति । का ॥

---

द्विगु च ग्रहणम् । वा । तत्पुरुषत्वे द्विगु च ग्रहणं कर्त्तव्यम् । तत्पुरुषः (२ । १ । २२) द्विगुश्च(२ । १ । २३) इति चकारः कर्त्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा द्विगुसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः । यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तिस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य द्विगुसंज्ञा परा

## व्यधिकरणानामिति ॥ (कै)

द्वितीय एव पूर्वकालैकसर्वजरत् पुराणनवकेवलाः समानाधिकरणेन कर्मधारय इत्येवं कर्मधारय संज्ञा करिष्यत इति भावः ॥

## पुंवद्भावेति । (कै)

"स्त्रियाः पुंवद्" इति तु "न कोपधायाः" इति निषिद्धमिति भावः ॥ यथा न्यासे तत्पुरुषानुवादेन कर्मधारयसंज्ञाया आकडारात् बहिः कृतत्वेन समावेशसिद्धिरिति तत्त्वम् ॥ ननु "द्विगुश्च" इति सूत्रपाठाद् "द्विगुश्च" इति अनुपपन्नमत आह

## द्विगोरिति ।

व्याघ्रीन्यायात् कडाराः कर्मधारये इत्ययमेवावधिरिति तात्पर्य्यम् । आद्वन्द्वादिति तु नोक्तम् । "द्वन्द्वश्च प्राणी"त्यस्यावधित्वापत्तौ सम्बुद्ध्यामन्त्रितसंज्ञयोः [1]समावेशानापत्तेः ॥

## परस्तादिति । (कै)

## सर्वं द्विगुप्रकरणमनुक्रम्य (भा)

१ "समावेश" इत्यारभ्य "इति तत्त्वम्" इत्यन्तं नास्ति । क ॥

तत्पुरुषसंज्ञा । कथम् । एवं स वक्ष्यति । तद्धितार्थोत्तरपदसमाहारे च (२ । १ । ५१) संख्यापूर्वो द्विगुः (२ । १ । ५२) इति । एवं सर्वं द्विगुप्रकरणमनुक्रम्य तस्यान्ते श्रितादिभिस्तत्पुरुष इति (२ । १ । २४) । तत्रारम्भसामर्थ्याच्च द्विगुसंज्ञा परं कार्य्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका द्विगुसंज्ञा । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एकासंज्ञेति वचनान्नास्ति

इत्यादिग्रन्थश्च । अन्ये तु चकारघटितं द्विगुश्चेति सूत्रं कर्त्तव्यमिति भाष्यार्थमाहुः । कृतमेवेति न दोष इति तत्त्वम् ॥ ननु गत्युपसर्गसंज्ञयोः समानविषयत्वात् कथमुपसर्गत्वस्यैव निरवकाशत्वमत आह

## ऊर्य्यादीति । (कै)

गतित्वेनैकीकृत्य सावकाशत्वाभिमानः । गतिस्वरो "गतिरनन्तर" इति पूर्वपदप्रकृतिस्वरः । "उपसर्गादसमास" इति णत्वम् । "उपसर्गात् सुनोती"ति षत्वम् । "दिवः कर्म च" इत्यत्र संज्ञयोः समावेशेन तद्भावत्वर्थसाधकतमे शक्तिद्वयसमावेशो बोध्यते ॥

## समावेशस्येति । (कै)

करणत्वादन्याणां तृतीया[1] । अकर्मकत्वाभावात्[2] परस्मैपदाभावः । प्रयोज्येऽकर्मकत्वप्रयुक्तकर्मत्वनिवृत्तिद्वारा यज्ञदत्ते तृतीया च इति भावः । तृतीयैव चात्र शास्त्रवत्त्वाच्छक्तिद्वयबोधिकेति बोध्यम् ॥ ननु कर्मत्वविधानसामर्थ्याद्द्वितीया इत्यत आह

१ कर्मत्वाच्चाकर्मकत्वाभावात् । क ॥
२ 'अणावकर्मकाद्' । १ । ३ । ८८ ॥

यौगपद्येन सम्भवः ॥ गतिदिवः कर्महेतुमत्सु च ग्रहणम् । वा । गतिदिवः कर्महेतुमत्सु च ग्रहणं कर्त्तव्यम् उपसर्गाः क्रियायोगे (२ । ४ । ५६) गतिश्च (१ । ४ । ६०) इति चकारः कर्त्तव्यः । अक्रियमाणे हि चकारेऽनवकाशोपसर्गसंज्ञा गतिसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावसिद्धः । कथम् । पूर्वा तस्योपसर्गसंज्ञा परा गतिसंज्ञा । तत्रारम्भसाम-

## कर्मसंज्ञा चेति। (कै)

इदमुपलक्षणं कर्म्मणि लकारादेरपि ॥

## तृतीयात्विति। (कै)

[1]"कर्तृकरणयोरि"त्यत्रास्योपस्थितिस्तु अक्षद्योगे चरितार्थेति भावः॥ न च स्तोकं पाक [2]इत्यादावपि षष्ठीस्यादिति वाच्यम्। कर्तृसाहचर्याद् अधात्वर्थकर्मण एव ग्रहणेनादोषात्। न चैव मनसा देव इत्यादिप्रयोगः कथं हेतुतृतीयान्तेन पचाद्यजन्तो देव-शब्दस्य समासे सिद्धत्वात्। केचित् साधकतमगतकर्मत्वशक्तिबोधे-ऽत्रान् दीव्यतीति प्रयोगे दृढतरं मानं चिन्त्यम्। कार्य्यकालपक्षे-ऽपि परत्वात् तृतीया बाध्ये न्याय्ये उपस्थितेरेव न्याय्यत्वात्। किञ्च तत्र फलाश्रयत्वविवक्षया कर्त्तरि इति कर्मत्वं न च तदा करणत्व-

---

१ अ २। पा ३। सू १८॥

२ "इत्यादावपि" इत्यारभ्य "तत्र फलाश्रयत्वविवक्षया" इत्यन्तं नास्ति इङ्गलण्डीयविवरणपुस्तके॥

---

र्थाश्चोपसर्गसंज्ञा परं कार्य्यत्वाच्च गतिसंज्ञा भविष्यति॥ ननु च यस्याप्ये-कसंज्ञाधिकारस्तस्याप्युपसर्गसंज्ञापूर्विका गतिसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एकासंज्ञेति वचनान्नास्तियौगपद्येन सम्भवः॥ गतिसंज्ञाप्यनवकाशा सा वचनाद् भविष्यति। सावकाशा गतिसंज्ञा। कोऽवकाशः। ऊर्य्यादीन्यवकाशः (१ । ४ । ६१)। प्रादीनां या गतिसंज्ञा सानवकाशा। गति॥ दिवः कर्म। साधकतमं करणम् (१ । ४ । ४२) दिवः कर्म च (१ । ४ । ४३) इति चकारः कर्त्तव्यः। अक्रियमाणे हि चकारे-

मिति न दोषः। किञ्च [1]"क्ङिति च" इतिसूत्रकैयटोक्तरीत्या यथोद्देशेऽपि प्रधानानुरोधेन गुणानां स्वात्मभेदकल्पनस्य तुल्यतया विप्रतिषिध्यकार्य्यकालपक्षे इत्युक्तिरनुचिता। किञ्च कार्य्यकालपक्षेऽप्यादिभ्यः परैव प्रगृह्यसंज्ञा इति [2]"अदसोमात्" इति सूत्रभाष्योक्तरीत्या "अपादानमुत्तराणि" गां दोग्धि पय इति अचत्य भाष्यासङ्गतेः। आ कडारात्स्थसंज्ञानां यथोद्देशत्वमेवेति च तदुक्त्यसङ्गतिरित्याहुः॥ [3]"हेतुमति च" इति च ग्रहणम् इति भ्रमं वारयति

## हेतुसंज्ञेति॥ (कै)

## निबन्धन इति। (कै)

ननु वात्सीबन्धुः इत्यत्र प्लुताप्राप्ते भाष्यस्य न्यूनतैवेति चेन्न। प्लुतविधायके दूराद् आह्वानं ज्ञापनमात्रोपलक्षणं न त्वभिमुखीकृत्य ज्ञापनरूपसम्बोधन[4]विभक्तिनियामकस्योपलक्षणम्। एवं चागच्छतु भवान् गार्गीबन्धुर्वात्सीबन्धुरिति वाक्यवर्त्तिन उदाहरणत्व-

१ अ १। पा १। सू ५॥ २ अ १। पा १। सू १२॥
३ अ ३। पा १। सू २६॥ ४ सम्बोधनस्य। क॥

ऽनवकाशाकर्मसंज्ञाकरणसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्। पूर्वा तस्य कर्मसंज्ञा पराकरणसंज्ञा। कथम्। एवं च वक्ष्यति। दिवः साधकतमं कर्म। ततः करणम्। करणसंज्ञं च भवति साधकतमम्। दिव इति निवृत्तम्। तत्रारम्भसामर्थ्याच्च कर्मसंज्ञा परं कार्य्यत्वाच्च करणसंज्ञा भविष्यति॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि

मिति भाष्याप्रयत्नेनादोषात्। अतिप्रसङ्गस्तु व्यवस्थितविभाषया अनभिधानेन वा परिहरणीय इत्याहुः॥

## चिन्त्यम् इति। (कै)

अत्रेयं चिन्ता। अस्मादेव भाष्यप्रयोगात्तस्यानित्यत्वं तेनोक्तप्रयोगसिद्धिरित्याहुः॥

## ततो घिसंज्ञं चेति। (कै)

तथाच नदीघिसंज्ञाविषये ते संज्ञे नदीघिसंज्ञे पूर्विके इति भाष्यार्थ इति भावः॥

## पर्य्यायार्थैवेति। (कै)

एवं हि एका संज्ञेति नियमो न बाधित इति भावः। तदन्तस्य घिनदीसंज्ञे इति सिद्धान्तः॥

## ननु चेति। (कै)

तत्र शत्रादिपरस्यैवोऽभावात् तिङ् परस्मैपदमेव गृह्यते इति भावः॥

## पर्य्याय इति। (कै)

---

करणसंज्ञापूर्विका कर्मसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एकासंज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः। दिवः कर्म॥ हेतुमत्। स्वतन्त्रः कर्त्ता (१ । ४ । ५४) तत्प्रयोजको हेतुश्च (१ । ४ । ५५) इति चकारः कर्त्तव्यः। अक्रियमाणे हि चकारे अनवकाशा हेतुसंज्ञा कर्मसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परं

एकसंज्ञाधिकाराबाधायेति भावः ॥ वस्तुत इष्टानुरोधाद्गुणेति-र्विभाषाग्रहणाच्च समावेशज्ञापकत्वमेवास्येति "एका संज्ञा" इति पाठेऽपि न दोषः ॥ इदानीं परं कार्य्यत्वपक्षे दोषानाह भाष्ये

**परवचन इति** ॥ (भा)

"क्षत्रिये" "तदस्य प्राप्तमि"त्यधिकारे [1]"ऋतोरण्" इति वर्त्तमाने [2]"छन्दसि घस्" इति घस् ॥

**पदसंज्ञात्विति** । (कै)

गुणेऽवादेशे [3]"लोपः शाकल्यस्य" इत्यर्थमपि सेति बोध्यम् ॥

**नियमार्थमिति** । (कै)

यद्यपि परं कार्य्यत्वपक्षेऽपि गत्यादिसूत्रं नियमार्थं तथाप्यत्र पक्षे इष्टसिद्धिरिति भावः ॥ ननु परत्वात् कर्त्तृत्वे प्राप्ते कर्मसंज्ञा-विध्यर्थमेव गत्यादिसूत्रं स्यात् कथं नियमार्थत्वमित्यत आह

१ अ ५ । पा १ । सू १०९ ॥ २ अ ५ । पा १ । सू १०६ ॥
३ अ ८ । पा ३ । सू १९ ॥

कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वा तस्य हेतुसंज्ञा परा कर्तृसंज्ञा । कथम् । एवं स वक्ष्यति । स्वतन्त्रः प्रयोजको हेतुरिति । ततः कर्त्ता । कर्तृसंज्ञाश्च भवति स्वतन्त्रः । प्रयोजक इति निवृत्तम् । तत्रारम्भसामर्थ्याच्च हेतुसंज्ञा परं कार्यत्वाच्च कर्तृसंज्ञा भविष्यति ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि कर्तृसंज्ञा पूर्विका हेतुसंज्ञा । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एकासंज्ञेति वचनान्नास्ति

**तथा हीति ॥** (कै)

**प्राधान्यादिति ।** (कै)

शब्दशास्त्रत्वाच्छाब्दं प्राधान्यं अन्तरङ्गत्वादिभ्यो बलवत् लोकेऽपि अन्तरङ्गकार्य्यात् प्रधानकार्य्यस्य बलवत्त्वं दृष्टं मन्त्रिराजस्थले इति भावः ॥

**अविरोधादिति ।** (कै)

पूर्वेणापवादेन निवर्त्तितस्य परकार्य्यस्य प्रवर्त्तकेनानेन निरवकाशपूर्वकार्य्यस्य निवर्त्तयितुमशक्यतया एकसञ्ज्ञा नियमराहित्येन च विरोधाभावादित्यर्थः ॥

**गत्यर्थादीनामेवेति ।** (कै)

एषां कर्मसंज्ञैव इति नियमस्तु न । प्राक् कडारादिति शास्त्रबाधापत्तेः ॥

**आरम्भसामर्थ्याच्च इति** (भा)

भाष्ये । [1]"हेतुमति च" इति सूत्रे भाष्ये गतिसूत्रनियमत्वोक्त्या कर्तुरित्यण्यन्तधातुविषयत्वावश्यकत्वेन ण्यन्तधातुविषयस्य [2]"कर्त्तु-

१ अ ३ । पा १ । सू २६ ॥ २ अ १ । पा ४ । सू ७९ ॥

यौगपद्येन संभवः ॥ गुरुलघुसंज्ञे नदीघिसंज्ञे । वा । गुरुलघुसंज्ञे नदीघिसंज्ञे बाधेयाताम् (१ । ४ । ३-१२) । गार्गीबन्धुः । वात्सीबन्धुः (६ । २ । १०९ ॥ ८ । २ । ८३) । वैन्नम् । (२ । २ । ३२ ॥ ५ । १ । १३१ ) विविनय्य (६ । ४ । ५६) । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्वे तस्य

रीप्सिततमम्" इत्यस्यारम्भसामर्थ्यादित्यर्थः । यत्त्वेतद्भाष्यबलाद् गत्यादिसूत्रं विध्यर्थं परत्वान्तरङ्गत्वोपजीव्यत्वैः कर्त्तृत्वप्राप्तेः । एवं च पाचयत्यादौ न दोषः । यच्च "आरम्भसामर्थ्याद्" इत्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थ इति तन्न प्रधानानुरोधेन सर्व्वतो बलवत्त्वात् । किं चात्र पाठे विध्यर्थत्वं दुरुपपादमुभयोरप्यविरोधात् प्राप्तेरिति दिक् ॥

## यदीति । (कै)

ननु समावेशस्य सिद्धत्वेऽपि पक्षे कर्त्तृत्वमात्ररूपपर्य्यायार्थं तदस्तु न च संज्ञयोः समावेशेऽपि तत् कार्य्यशास्त्रयोर्यौगपद्यायोगात् कार्य्यान्तरस्य चाभावात् पर्य्यायः फलतीति वाच्यम् [1]समावेशेऽस्य कर्मभिन्नत्वाभावेन [2]"उभयप्राप्तौ" इति निषेधाप्रवृत्तौ नित्यं षष्ठी । पर्य्यायेतु कर्त्तृत्वे निषेधेऽपि कर्मत्वे तदभावात् पक्षे भाव्यं षष्ठ्येति विशेषादिति चेन्न इष्टविषयेऽनभिधानेन तादृशप्रयोगस्यैवाभावादिति भाष्याशयात् ॥

---

१ सम्मवेशे । इ ॥ २ अ २ । पा ३ । सू ६६ ॥

---

नदीघिसंज्ञेपरे गुरुलघुसंज्ञे । तत्रारम्भसामर्थ्याच्च नदीघिसंज्ञे परं कार्य्यत्वाच्च गुरुलघुसंज्ञे भविष्यतः ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञापूर्व्विके गुरुलघुसंज्ञे । कथम् । अनुवृत्तिः क्रियते । पर्य्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन सम्भवः ॥ परस्मैपदसंज्ञां पुरुषसंज्ञा । वा । परस्मैपदसंज्ञां पुरुषसंज्ञा बाधेत (१।४।९९।१०१) परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ॥ यस्य पुनः परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् । पूर्व्वा

**ह्रक्काविति।** (कै)

ह्रकरावित्युचितम्। यद्वा सूत्रगतकृतयणादेशे रेफान्तशब्दानुकरणोत्तरपदद्वन्द्वोऽयं द्विवचनान्त इति बोध्यम्॥ ननूपपादितरीत्या संज्ञासमावेशसम्भव इत्यत आह

**अयं भाव इति॥** (कै)

**तच्च घिलक्षणे इति।** (कै)

गुणेन नदीत्वनिमित्तविनाशेन युगपत्तयोरसम्भवेन नदीसंज्ञापेक्षया परत्वादिति भावः॥

**अलं विधित्वाच्चेति।** (कै)

पूर्वविध्यभावाद् [१]"अचः परस्मिन्" इत्यस्याप्यभाव इति बोध्यम्॥

**तस्मादिति।** (कै)

दृष्टानुरोधादेवमेव कल्प्यते नत्वल्विधावपि स्थानिवत्त्वादितिभावः॥ भाष्ये

१ अ १। पा १ सू ५७॥

तस्य पुरुषसंज्ञा परा परस्मैपदसंज्ञा। कथम्। एवं स वक्ष्यति। तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा इति। एवं सर्व्वं पुरुषनियममनुक्रम्य तस्यान्ते लः परस्मैपदमिति। तत्रारम्भसामर्थ्याच्च पुरुषसंज्ञा परं कार्य्यत्वाच्च परस्मैपदसंज्ञा भविष्यति॥ ननु च यस्याप्येकं संज्ञाधिकारस्तस्यापि परस्मैपदसंज्ञा पूर्व्विका पुरुषसंज्ञा। कथम्। अनुवृत्तिः क्रियते। पर्य्यायः प्रसज्येत। एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः॥

**आश्रयाभावादिति ।** (भा)

नदीत्वस्याश्रयभूतह्रस्वाभावादित्यर्थः ॥

**यस्य त्विति ।** (कै)

नदीत्वाभावे घित्वानिवृत्तेर्गुणेन यणो बाधात् यणो निमित्तं नदीत्वमिति भावः ॥ मास्तु शेषवचनं घिसंज्ञानिवृत्त्यर्थं बहुव्रीहिप्रतिषेधार्थं तत्कर्त्तव्यमेवेत्याह भाष्ये

**बहुव्रीह्यर्थं त्विति ॥** (भा)

**अत्रेति ।** (कै)

उन्मत्तेति क्तान्तस्य पूर्वनिपातस्तु बहुव्रीहित्वाभावेऽप्युपसर्जनत्वेन तं विना संज्ञाया अप्रतीतेस्त्वार्थिक इति भावः ॥ नित्यनपुंसकत्वं तु संज्ञयोः समावेशेन सिद्धम् ॥

**[1]पाक्षिकः कबिति ।** (कै)

शेषादिति कपो न [2]"संज्ञायामिति" निषेधात् चिन्त्यमिदम् ।

---

१ उपलब्धकैयटे "पाक्षिकस्य कप्" इत्यस्ति ॥

२ अ ६ । पा ३ । सू ३८ ॥

---

परस्मैपदसंज्ञाप्यनवकाशा वचनाद्भविष्यति । सावकाशा परस्मैपदसंज्ञा । कोऽवकाशः । शतृक्वस्नू अवकाशः ( ३।२।१२४-१०७ ) ॥ परवचने सिति पदं भम् । वा । परवचने सिति पदं भसंज्ञामपि प्राप्नोति ( १।४।१६—१८ ) । अयं ते योनिर्ऋत्वियः ( ५।१।१०६॥६।४।१४६ ) । प्रजाम् विन्दाम ऋत्वियाम् । आरम्भसामर्थ्याच्च पदसंज्ञा परं कार्य्यत्वाच्च भसंज्ञा प्राप्नोति ॥ गतिबुद्ध्यादीनां ण्यन्तानां कर्म्म कर्त्तृसंज्ञम् । वा । गतिबुद्ध्यादीनां ण्यन्तानां कर्म्म कर्त्तृसंज्ञमपि प्राप्नोति ( १।४।५२।५४ ) । आरम्भसामर्थ्याच्च

शेषग्रहणे तु नदीपदघटितसमुदायस्यान्यपदार्थे विद्यमानस्य समासोक्तेः शेषत्वाभावान्न बहुव्रीहिरिति बोध्यम्॥ ननु समानाधिकरणसमासोऽयम्। अत एव मृगचपलेत्यादौ पुंवत्त्वं तत् कान्यपदार्थप्रतीतिरत आह

**यदेति।** (कै)

अयमपि पक्षस्तत्सूत्रभाष्ये स्पष्टः॥

**भावरूप इति।** (कै)

विशेष्यभूत इत्यर्थ॥

**समाह्रियमाणेति।** (कै)

[1]"समाहारे च" इत्यत्र कर्मसाधनः समाहारशब्द इति भावः॥

**अशेषत्वादिति।** (कै)

[2]शेषादिति सूत्रे समासान्तापेक्षया शेष इत्यभिमानिनेदम्।

१ नदीभिश्च (२।१।२०) इति सूत्रे भाष्ये॥ २ अ २। पा २। सू २३॥

---

कर्म्मसंज्ञा परं कार्य्यत्वाच्च कर्तृसंज्ञा प्राप्नोति॥ नैष दोषः। आचार्य्यप्रवृत्तिर्ज्ञापयति न कर्म्मसंज्ञायां कर्तृसंज्ञा भवतीति यदयं "हृक्रोरन्यतरस्याम्" (१।४।५३) इत्यन्यतरस्यां ग्रहणं करोति॥ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम्। वा॥ शेषग्रहणं च कर्त्तव्यम्। "शेषो घ्यसखि" (१।४।७) इति। किं प्रयोजनम्। घिसंज्ञानिवृत्त्यर्थम्। नदीसंज्ञायां घिसंज्ञा मा भूदिति। कृत्यै पट्व्यै बुध्यै धेन्वै (७।३।११२—१११)। इतरथा हि परं कार्य्यत्वाच्च घिसंज्ञारम्भसामर्थ्याच्च "ङिति ह्रस्वश्च (१।४।६)

अनन्तरत्वङ्गभीष्यधिकारापेक्षं शेषत्वमिति भाष्यसम्मतपक्षे तु तस्यापि प्रसङ्ग इति चिन्त्यम् ॥

## टचश्चित् कारणादिति । (कै)

अस्यान्यत्र राजगवीत्यादौ चारितार्थ्यादिदं चिन्त्यमिति कश्चित् ॥

## पञ्चपात्रमिति । (कै)

अत्र शेषत्वात् कपोऽप्यापत्तिः । एतानि प्रयोजनानि शेषग्रहणस्य पदतः शेषार्थकत्वपक्षे । त्रिकतः शेषे तु अन्त्यं द्वयं शेषग्रहणे कृते सिध्यति । आद्यं तु प्रयोजनद्वयत्रिकतः शेषे शेषग्रहणे कृतेऽपि न सिध्यतीति बोध्यम् ॥

## समासवाच्यत्वे इति । (कै)

समास एव क्रान्ताद्यर्थप्रतीतेः । यदागमे ह्रीति न्यायेनैकार्थीभावबलात् समासस्यैव सोऽर्थ इति भावः ॥

## यदा त्विति । (कै)

एकार्थीभावस्तु पञ्चम्यर्थान्तर्भावेनेति तद्भावः ॥

---

इति नदीसंज्ञा ॥ न वासंभवात् । वा । न वा कर्तव्यम् । नदीसंज्ञायां घिसंज्ञा कस्मान्न भवति । असंभवात् । कोऽसावसंभवः । ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः । वा । ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणेन भवितव्यम् । ( ७।३।१११ ) ॥ तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः । वा । तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञा न भविष्यति । किं कारणम् । आश्रयाभावात् । आश्रयाभावान्नदीसंज्ञायां

## क्रियमाणेऽपीति । (कै)

तत्करणमेव प्रथमो दोषः । कृते दोषान्तरमपीति भावः ॥ सञ्ज्ञासमानाधिकरणनञा समासोक्तेः शेषत्वाभावात् तत्र बहुव्रीह्यप्राप्तिरिति बोध्यम् ॥

## शेषग्रहणं न करोतीति । (कै)

पदतः शेषार्थं न करोतीति त्रिकतः शेषार्थं तु करिष्यतीत्यर्थः ॥

## परत्वादिति । (कै)

ननु समासादयोऽन्यपदार्थाविवक्षायां चरितार्थाः । अव्ययीभावोऽपि समाह्रियमाणार्थत्वे चरितार्थः । बहुव्रीहिरपि अन्यत्र चरितार्थः । न च समानाधिकरणतत्पुरुषविषये बहुव्रीहिः क्व चरितार्थः । व्यधिकरणे चरितार्थ इत्यभिमानात् । यदा तस्य तद्बाधकत्वमनवकाशत्वेनैव[1] बाधकत्वोपलक्षणम् भाष्ये विप्रतिषेधादित्यपि बोध्यम् ॥

## प्राप्नोतीति । (कै)

---

१ परत्वं च । का ॥

---

घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः । वा । आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेदेवमुच्यते । यणादेशोऽपि न प्राप्नोति ॥ नैष दोषः । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः । वा । नद्याश्रयो यणादेशः । यदा नदीसंज्ञया घिसंज्ञा बाधिता तत उत्तरकालं यणादेशेन भवितव्यम् । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञा भविष्यति । बहुव्रीह्यर्थं तु । वा । बहुव्रीहिप्रतिषेधार्थं तु शेषग्रहणं कर्तव्यम् । "शेषो

तथाचानयोः पदयोर्न शेषत्वमिति बहुव्रीह्यप्राप्तिः॥ ननु द्वैरावतीकेऽनवकाशत्वा[1]"नदीभिश्च" इत्यनेनैव भाव्यम् एवं च कथमत्र बहुव्रीहिः किमर्थं वा निषेधोऽत आह

तस्य त्ववकाश इति॥ (कै)

ननु तत्रापि समाहारस्यान्यपदार्थस्य सत्त्वात् कथमयमवकाशोऽत आह

यदेति। (कै)

एवं सति पञ्चानां नदीनां समाहार इत्यर्थे परत्वाद् बहुव्रीहिः प्राप्नोति सोऽपि शेषग्रहणादेव वारणीयः परं कार्य्यत्वमिति पाठे इति दिक्॥ वस्तुतः समाहारे चायमिष्यते इत्युक्तेर्भावसाधनत्वाच्च समाहारशब्दस्य समाहाररूपेऽन्यपदार्थेऽयमपवाद इति मत्वा द्वैरावतीके शेषे ग्रहणाद् भाष्ये दोष उक्तः। संख्येत्यनुवर्त्तमाने [2]"नदीभिश्च" इत्यत्रैषां पदानां ग्रहणेनाशेषत्वात् प्रपतितपर्णे "प्रादयो गताद्यर्थे" इत्यस्याप्रवृत्तेराह

१ अ २। पा १। सू २०॥ २ अ २। पा १। सू २०॥

बहुव्रीहिः" (२।२।२३) इति॥ किं प्रयोजनम्॥ प्रयोजनमव्ययीभावोपमानद्विगुनञ्लोपेषु। वा। अव्ययीभावे। उन्मत्तगङ्गम् लोहितगङ्गम् (२।१।२१॥६।२।१॥५।४।१५४)॥ उपमाने। शस्त्रीश्यामा। कुमुदश्येनी (२।१।५५॥५।४।१५४—१५३)॥ द्विगु। पञ्चगवम्। दशगवम् (२।१।५१-५२॥६।२।१)॥ नञ्लोपे। निष्कौशाम्बिः निर्वाराणसिः (२।२।१८॥५।४।१५३)॥ तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु

## प्रपर्णक इति ॥ (कै)

भाष्ये

## क्तार्थे प्रतिषेधः (भा)

इत्यस्य क्तार्थे वाच्ये बहुव्रीहिप्रतिषेधो वक्तव्य इत्यर्थः ॥ ननु [1]"कुगति" इति सूत्रविहितः समासेऽपि सुपुरुष इत्यादौ साव-काशोऽत आह

## परिगणनमिति । (कै)

[2]प्रादयो गताद्यर्थे इत्यादीनामपि परिगणनद्वारा स्वतन्त्र-विधायकान्येव न तु तत्प्रपञ्चभूतान्येवेति भावः ॥ ननु क्तार्थे विशेष्ये तत्पुरुषः तद्भिन्ने "बहुव्रीहिरिति" भिन्नविषयत्वात् "तत्पुरुष इति चेदि"त्याद्यनुपपन्नमत आह

## इतर इति । (कै)

"प्रादयो गताद्यर्थे" इति परिगणनरूपं विशेषमज्ञात्वा इत्यर्थः ।

१ अ २ । पा २ । सू १८ ॥
२ अ २ । पा २ । सू १८ । इति सूत्रस्थवार्त्तिकम ॥

---

बहुव्रीहिप्रतिषेधः । वा । तत्र शेषवचनाद्दोषो भवति । संख्या समानाधिकरणनञ्समासेषु बहुव्रीहेः प्रतिषेधः प्राप्नोति । संख्या । वीरावतीको देशः । वीरावतीको देशः (१ । १ । २०) । समानाधिकरण । वीरपुरुषको ग्रामः । (२ । १ । ५८) । नञ्समासे । अब्राह्मणको देशः अवृषलको देशः (२ । २ । १८) ॥ कल्लोपे च शेषवचनात् प्रादिभिर्न बहु-व्रीहिः । वा । कल्लोपे च शेषवचनात् प्रादिभिर्बहुव्रीहिर्न प्राप्नोति ।

पूर्वोक्तेति। (कै)

अन्तरङ्गे कर्त्तव्ये बहिरङ्गमसिद्धं तद्बहिरङ्गं कृतं चिकीर्षितं च इत्यन्यत्॥ ननु स्योन इत्यत्र परत्वाद्गुणे तस्यासिद्धत्वेऽपि इकोऽभावाद्यण् न स्यादत आह

शास्त्रेति॥ (कै)

नन्वेवं सौत्यितिरित्यादौ स्योने गुणशास्त्रवत् बहिरङ्गमाद्यु-दात्तशास्त्रं न प्रवर्त्तेत इत्यत आह

अन्तरङ्गेति। (कै)

युगपत्प्राप्तौ बहिरङ्गस्य न पूर्वं प्रवृत्तिः। प्रवृत्ते तु अन्तरङ्गे भवत्येव बहिरङ्गमिति भावः॥ भाष्ये

बहिरङ्गलक्षणस्येति। (भा)

ऊठ् इति शेषः॥ अत्रैकदेशीसमाधत्ते

नाजानन्तर्य्यं इति॥ (भा)

---

प्राप्नोत्येकादेशश्च (४।१।२॥६।१।१०१) परत्वादेकादेशः स्यात्। प्रत्यय-विधिर्भवत्यन्तरङ्गतः॥ यणादेशश्चेति वक्तव्यम् (६।१।७७)। अग्निरत्र। वायुरत्र॥ णादेशो वर्णविधेः। णादेशो वर्णविधेर्भवत्यरङ्गतः प्रयोजनम्। पचत्वत्र। पठत्वत्र। णादेशश्च प्राप्नोति यणादेशश्च (३।४।८६॥६।१।७७)। परत्वात् यणादेशः स्यात्। णादेशो भवत्यन्तरङ्गतः॥ तत्पुरुषोन्तोदात्तत्वं

---

बमयैवेति। इयं हि व्यापिका। पूर्वोक्तप्रयोजननिष्पादनात्। शास्त्रा-सिद्धत्वाश्रयाद् बहिरङ्गलक्षणं न तावत् प्रवर्त्तते। अन्तरङ्गलक्षणे तु प्रवृत्ते यत्र निमित्तसद्भावस्तत्र बहिरङ्गलक्षणप्रवृत्तिः। नाजानन्तर्य्ये इति। अत्रो-

## अचोरानन्तर्य्यमिति । (कै)

अचोरिति द्वित्वमविवक्षितम् । तेन वक्ष्यमाणेन षत्वतुग्ग्रहणरूपेण ज्ञापकेन न विरोधः । अचोऽप्यानन्तर्य्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये कृते च तस्मिन् प्राप्ते अन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्यासिद्धत्वं नेति तदर्थः । एतेन पचावेदमित्यादौ गुणेऽजानन्तर्य्याश्रयणात् असिद्धत्वानापत्तिरित्यपास्तम् ॥

## अयजे इन्द्रं धियति । (भा)

इत्यादि च सिद्धम् ॥

## अक्षद्यूः (भा)

इत्यत्र यणि लोपाभावस्य सिद्धः ॥

## तुक् तु प्रवृत्तिष्यत इति । (कै)

समासोत्तरं ह्यप् प्रवृत्त्या पूर्वपदसम्बन्धेन समासे जाते तत्र संहिताया नित्यत्वात् एकादेशे ह्यपि तुगपेक्षया पदद्वयसम्बन्धी

---

पूर्वपदप्रकृतिस्वरात् । वा । तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वराद् भवत्यन्तरङ्गतः प्रयोजनम् । पूर्वशालाप्रियः अपरशालाप्रियः । तत्पुरुषान्तोदात्तत्वं च प्राप्नोति पूर्वपदप्रकृतिस्वरत्वं च (६।१।२२३॥६।२।१)। परत्वात् पूर्वपदप्रकृतिस्वरत्वं स्यात् । तत्पुरुषान्तोदात्तत्वं भवत्यन्तरङ्गतः ॥ एतान्यस्याः परिभाषाया प्रयोजनानि यदर्थमेषा परिभाषा कर्त्तव्या॥ यदि सन्ति

---

रानन्तर्य्यमाश्रित्य यत्र कार्य्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठते । यदयमिति । कोऽसिचदधीत्येति । बहिरङ्गस्यैकादेशस्य सिद्धत्वात् षत्वं न भविष्यति । तुक् तु प्रवर्त्तिष्यते इति किमसिद्धवचनेन । यदयमिति । दित्य-

वर्णापेक्षस्यैकादेशस्य दध्यत्र इत्यादौ संयोगान्तलोपापेक्षया यणो बहिरङ्गत्वेनासिद्धत्ववदसिद्धत्वेन तत्प्रवृत्तिरिति भावः ॥ षत्वग्रहणं तु न युक्तम् ज्ञापकं चैपादिकेऽन्तरङ्गे तत्परिभाषायाः कार्य्यकालपक्षेऽप्यप्रवृत्तेर्विसर्ज्जनीयसूत्रभाष्यसम्मतत्वात् । षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनान्तरङ्गत्वाभावाच्च । न वा अधीत्य इत्यादौ "पूर्वं धातुरुपसर्गेन युज्यते" इत्येकादेशोऽन्तरङ्ग इति वाच्यम् । साधनवोधकप्रत्ययोत्पत्त्यनन्तरं पदान्तरसम्बन्धनिमित्तकार्य्यात् पूर्वमुपसर्गसम्बन्धेन तन्निमित्तकस्यान्तरङ्गमिति तदर्थो न तु प्रत्ययनिमित्तादपीति तदर्थ इति [1]"सम्प्रसारणाच्चे"ति सूत्रे [2]भाष्ये स्पष्टत्वाच्च । तत्र हि खट्वा आरूढ़ इत्यत्र सवर्णदीर्घात् गुणेऽन्तरङ्ग इत्युक्तम् । [3]"सुट् कात् पूर्वं" इत्यादि सूत्रेष्वप्युक्तम् । उपसर्गार्थेन

१ अ ६ । पा १ । सू १०८ ॥
२ "भाष्ये" इत्यारभ्य "सूत्रेषु" इत्यन्तं नास्ति इ पुस्तके ॥
३ अ ६ । पा १ । सू १३५ ॥

---

प्रयोजनानीत्येषा परिभाषा क्रियते ननु चेयमपि कर्त्तव्यासिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति । किं प्रयोजनम् पचावेदम् पचामेदम् । असिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणमेत्वं (३।४।९३) मा भूदिति । उभे तर्हि कर्त्तव्ये । नेत्याह । अनयैव सिद्धम् । इहापि स्योनः स्योनेत्यसिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यति ॥ यद्यसिद्धं

---

वाह अस् इति स्थिते वाहः सम्प्रसारणमेव कर्त्तव्यम् । तत्र कृते पूर्वैकादेशे च व्याश्रये गुणे "वृद्धिरेचो"ति वृद्धौ सिद्धं दित्यौह इति । अनकारान्ते चोपपदे वहेश्छन्दसि ण्विनं दृश्यते । प्रयोगदर्शने वा सति ऊहतेः क्विपि

पूर्वं सम्बन्धस्ततः प्रत्यये कृते उपसर्गेन सम्बन्ध इति। संकृति इति स्थितेऽन्तरङ्गतरार्थकोपसर्गनिमित्तकत्वादुपसर्गार्थाश्रितमुपसर्गनिमित्तं कार्य्यमन्तरङ्गं यत्तु न तथा तत्र पूर्वागत[1]साधनकार्य्यमेवान्तरङ्गमत एव "प्रेद्धः" इत्यत्र "गुणो बहिरङ्ग" इति भाष्ये उक्तम्। अस्याश्च परिभाषाया भाष्येऽन्यत्र क्वाप्यव्यवहारादियमेकदेश्युक्तिः। एतज्[2] ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमिति तत्त्वम्। वृद्धौ सिद्धति परिभाषासत्त्वे तु विभक्तिनिमित्तसम्प्रसारणस्य व्याश्रये अन्तरङ्गे गुणेऽसिद्धत्वात्तदभावे वृद्धौ गुणस्यासिद्धत्वात्तदभावे च वृद्ध्यर्थमूडावश्यक इति भावः॥ नन्वकारान्तोपसर्गे चोपपदे अवर्णाभावात् पररूपेण बाधाच्च। [3]"वृद्धिरेचि" इत्यस्य प्राप्तौ [4]सम्प्रसारणयोः फले विशेष इत्यत आह

१ "साधनमेव"। इ॥
२ "ज्ञापकेन" इत्यारभ्य "विभक्तिनिमित्त" इत्यन्तं नास्ति इ पुस्तके॥
३ अ ६। पा १। सू ८८। ४ सम्प्रसारणस्य व्याश्रये। इ॥

बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युच्यतेऽक्षद्यूः। हिरण्यद्यूः असिद्धत्वाद्बहिरङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति (६।४।१९॥६।१।७७)। नैष दोषः। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युक्त्वा ततो वक्ष्यामि "नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः" इति। सा तर्ह्येषा परिभाषा कर्त्तव्या। न कर्त्तव्या। आचार्य्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं सत्वतु-

प्रयोगो भविष्यति किमूडादेशविधानेन परिभाषाया ज्ञापक ऊठ् विधिः। तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादन्तरङ्गे गुणो न स्यादितूठ् विधीयते। पूर्वैषुकामशम इति। पूर्वं इषु कामशमो अ इति स्थिते

अनकारान्तेति । (कै)

इदमकारान्तोपसर्गोपलक्षणम् ॥

छन्दसीति । (कै)

न च ण्यन्तात् क्विपि वह्यादिभ्यो विहितत्वाभावेन सम्प्रसारणाभावे विश्ववाड्शब्दो लोकेऽप्यस्त्येवेति वाच्यम् । क्वौ लुप्तमित्यस्य कापिलकतया णिलोपस्य स्थानिवत्त्वेन तत्र १"वाह ऊठ्" सूत्रस्य प्राप्तिरेवाभावादित्याहुः । वस्तुतो लोकेऽपि वहेर्ण्विं दर्शनात् छन्दसीत्युपलक्षणम् ॥

ऊहतेरिति । (कै)

धातूनामनेकार्थत्वान्नार्थभेदः ॥ भाष्ये

तस्यैतस्येति । (भा)

असिद्धं बहिरङ्गमित्यस्येत्यर्थः ॥

---

१ अ ६ । पा ४ । सू १३२ ॥

---

कोरसिद्धः" (६ । १ । ८६) इत्याह ॥ इयं तर्हि परिभाषा कर्त्तव्या "बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इति । एषा च न कर्त्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं "वाह ऊठ्" (६ । ४ । १३२) इत्यूठं शास्ति । तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् । वा । तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशादन्तरङ्गतो-

---

यद्यन्तरङ्गत्वादाद्गुणः स्यात् तदा पूर्वोत्तरपदयोर्व्यपवर्गाभावादुभयत आश्रयणेऽन्तादिवद्भावनिषेधाच्च "दिशोऽमद्राणाम्" "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धिर्न स्यात् उत्तरपदवृद्धौ सर्वं चेति चशब्दाद्दिक्शब्दाच्चेति

[1]दिशोऽमद्राणाम् इति। (कै)

इत्यनुवर्त्तमाने इति शेषः॥ अत्रापि स्वर उदाहर्त्तुं शक्य इत्यभिप्रायेणाह

उत्तरपदेति॥ (कै)

च शब्दाद्दिक् शब्दाश्चेति। (कै)

अनेन विहितं पूर्वपदान्तोदात्तत्वं तथैव व्यपवर्गाभावाच्च स्यादित्यन्वयः॥ भाष्ये

[2]उदके केवले इति। (भा)

मिश्रवाचिनि समासे उदके परे पूर्वमन्तोदात्तमिति तदर्थः। एतदुदाहरणमेकदेशिनः। [3]"अन्तादिवच्च" इति सूत्रे पूर्वान्तवद्भावेनाप्येतत्स्वरसाधनात् उभयाश्रयत्वं तु नात्र। [4]"एकदेश-

१ अ ७। पा ३। सू १३॥ २ अ ६। पा २। सू ९६॥
३ अ ६। पा १। सू ८५॥ ४ परिभाषेन्दुशे ३७॥

ऽभिनिर्वृत्तान्न प्राप्नुतः। पूर्वेषुकामशमः। अपरेषुकामशमः (७। ३। १४॥ ६। २। १०५)। गुडोदकम् तिलोदकम्। उदके केवले (६। २। ९६) इति पूर्वोत्तरपदयोर्व्यपवर्गाभावान्न स्यात्॥ नैष दोषः। आचार्य्यप्रवृत्तिर्ज्ञापयति पूर्वोत्तरपदयोस्तावत् कार्य्यं भवति नैकादेश इति यदयं "नेन्द्रस्य परस्य" (७। ३। २२) इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्।

तथैव पूर्वपदान्तोदात्तत्वं न स्यात्। सावकाशं च एतदुभयं पूर्वकार्य्यान्तिक इति। गुडोदकमिति। उदके केवले इति पूर्वपदान्तोदात्तत्वं न स्यात्। उदश्विदुदकमित्यादावेव तु स्यात्। प्रसङ्गेन व्याकरणान्तरे लक्षणं विचार-

विकृतस्यानन्यत्वाद् "दकशब्दस्याप्युदकशब्देन ग्रहणादिति तत्र कैयटः ॥
भाष्ये

[1]नेन्द्रस्येति । ( भा )

ननूभयत आश्रयणेनान्तादिवत्त्वाभावेऽपि [2]अन्तादिवत्त्वेऽपि व्यपवर्गाभावे वा सोमेन्द्र इति तदुदाहरणे विकारविशिष्टे तद्भावेन पूर्वपदत्वेन्द्रशब्दे एकदेशविकृतन्यायेन इन्द्रशब्दत्वात् सामर्थ्येनान्तवृद्धिनिषेध एवास्तु अत आह

इन्द्रे द्वावचाविति । ( भा )

एको यस्येतीति । ( भा )

यद्यपि वृद्धिः परा तथापि लोपो नित्य इति भावः ॥ न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम् एकदेशविकृतन्यायस्याप्याहार्यारोपबोधकत्वेन व्यपवर्गस्य

१ अ ७ । पा ३ । सू २२ ॥

२ "अन्तादिवत्त्वेऽपि व्यपवर्गाभावे वा" इति नास्ति इ पुस्तके ॥

इन्द्रे द्वावचौ ॥ तत्रैको "यस्येति च" ( ६ । ४ । १४८ ) इति लोपेन ह्रियते अपर एकादेशेन । ततोऽनचक इन्द्रः सम्पन्नः । तत्र कः प्रसङ्गो वृद्धेः । पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोस्तावत् कार्य्यं भवति नैकादेश इति ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ॥ यथादेशादि युवौ । वा । यथादेशादियुवावन्तरङ्गतोऽभिनिर्वृत्तात्न प्राप्नुतः । वैयाकरणः सौवश्व इति । लक्षणं हि

यितुमाह यथादेशादिति ॥ लोपो भविष्यतीति । ननु बहिरङ्गत्वादियुवोरसिद्धत्वाल्लोपो न प्राप्नोति । अत्राहुः । समुदायस्यासिद्धत्वं नावयवस्येति । समुदायस्यासिद्धत्वे सामर्थ्यात्तदवयवस्याप्यसिद्धत्वमिति चिन्त्यमेतत् ।

निरूपयितुमशक्यत्वात्। किञ्च द्वन्द्वरूपोत्तरपदाचस्थानिकवृद्धे-स्तदभावेनाप्राप्तेस्ताद्रूप्यानतिदेशादितिदिक् ॥ पाणिनीये तादृश-लक्षणाभावादाह

प्रसङ्गेनेति ॥ (कै)

तदेव दर्शयति भाष्ये

लक्षणं हि भवति य्वोरिति ॥ (भा)

अनवकाशत्वे हेतुः

अचीत्युच्यते इति। (भा)

यत इत्यादिः ॥

बहिरङ्गत्वादिति। (कै)

वृद्धिप्रसङ्ग इत्युक्तेस्तन्निमित्तकत्वादित्यर्थः ॥

चिन्त्यमिति। (कै)

एवं च "स्तामत्रे" इत्यादि ग्रन्थः पूर्वपक्ष्येकदेशिसिद्धान्त्येक-

---

भवति य्वोरचि वृद्धिप्रसङ्ग इयुवौ भवत इति॥ नैष दोषः। अनवकाशावियुवौ। अचीत्युच्यते॥ किं पुनः कारणमचीत्युच्यते। इह मा भूताम्॥ ऐति-कायनः। औपगव इति। स्तामत्र इयुवौ "लोपो व्योर्वलि" (६।१।६६) इति लोपो भविष्यति। यत्र तर्हि लोपो नास्ति। प्रैयमेधः। प्रैयंगव इति॥ उसि पररूपाच्च। वा। उसि पररूपाच्चान्तरङ्गतोऽभिनिर्वृत्तादि-

---

पचेयुरिति। पच् आया उस् इति स्थिते यद्यत्रान्तरङ्गत्वात् पररूपं क्रियेत तदा व्यपवर्गाभावात् इयादेशो न स्यात्। एकादेशस्यान्तवत्वाद्भविष्यतीति चेद् एवमपि रूपं न सिध्येत्। यासित्यस्येति। स लोपापवाद इयादेशः।

देशिनोहक्तिरिति भावः । वस्तुतः परिभाषारम्भे दोषात् परिभाषा न कार्य्या इति पूर्वपक्षिणो वाक्ये तामादाय दोषोद्भावनयुक्तमिति चिन्त्यमेव चिन्त्यम् ॥

## या उसिति स्थित इति । ( कै )

अन्तरङ्गत्वादियः पूर्वं यलोपः ॥

## व्यपवर्गाभावादिति । ( कै )

या शब्दाभावादिति भावः ॥

## न सिद्ध्येदिति । ( कै )

उकारान्तस्य इयापत्तेरिति भावः । यामिति छेदे सौत्रो निर्देश इति भावः ॥ अतो या इय इत्येव पाठ इति [१]"आने मुक्" इति सूत्रे भाष्ये ॥ ननु नित्यान्तरङ्गत्वेन सलोपे यासेव दुर्लभोऽत आह

---

१ अ ७ । पा २ । सू ८२ ॥

---

यादेशो न प्राप्नोति ( ६ । १ । ६६ ॥ ७ । २ । ८० ) ॥ पचेयुः । यजेयुः ॥ नैष दोषः । नैवं विज्ञायते या इत्येतस्येय् भवतीति । कथं तर्हि । यास् इत्येतस्य इय् भवतीति ॥ लुग् लोपयणयवायावेकादेशेभ्यः । वा । लोपयणयवायावेकादेशेभ्यो लुग् बलीयान् इति वक्तव्यम् ॥ लोपात् । गोमान् प्रियोऽस्य गोमत्प्रियः । यवमत्प्रियः । गोमानिवाचरति गोमत्यते ।

---

अकृते सलोपे नास्ति पररूपप्रसङ्गः । गोमत्प्रिय इति । यद्यत्र लोपः स्यात् तदा प्रत्ययलक्षणेन नुमादि स्यात् । ग्रामणि कुलमिति । यणादिषु कृतेषु लुकि सति रूपं न सिद्ध्येत् । वृकादिति । पूर्वमेकादेशे कृते तस्यादि-

**सलोपापवाद इति । ( कै )**

वार्णपरिभाषयेदं सिध्यति ॥ तदनाश्रयणे तु भाष्यम् । लुग्लोपयोः फले विशेषमाह

**यद्यचेति । ( कै )**

लुकि तु "रैन लुमते"ति निषेधः इति भावः ॥ भाष्ये

**परत्वादेते इति । ( भा )**

परत्वादुत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः । तदाह

**अन्तरङ्गानपीति ॥ ( कै )**

**इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥**

---

१ अ १ । पा १ । सू ६२ ॥

---

यवमत्यते ॥ यणादेशात् । ग्रामण्यः कुलं ग्रामणि कुलम् । सेनान्यः कुलं सेनानि कुलम् ॥ अथवा यावेकादेशेभ्यः । गवे हितं गोहितम् ॥ रायः कुलम् रैकुलम् । नावः कुलं नौकुलम् । वृकाद्भयं वृकभयम् ॥ लुक् च प्राप्नोत्येते च विषयः ( २ । ४ । ७१ ॥ ६ । १ । ६८—७७—७८—१०१ ) । परत्वादेते विधयः स्युः । लुग्बलीयान् इति वक्तव्यं लुग् यथा स्यात् ॥

---

वद्भावात्तु कि सति रूपं न सिद्ध्येत् । "अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते" इत्यस्य प्रत्ययोत्तरपदयोश्च इत्यत्र ज्ञापितत्वात् सिद्धम् ॥

# महाभाष्यप्रदीपोद्योतः।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्॥



## यू स्त्र्याख्यौ नदी।१।४।३॥

ननु यूपदाभावे [१]स्त्र्याख्यमात्रेऽतिप्रसङ्गः स्त्र्याख्याविति द्विवचनवैयर्थ्यं चेत्यत आह

स्त्र्याख्यं नदी (कै)

इत्यादि॥ ननु खट्वाशब्दस्य फिषोऽन्तोदात्तत्वेन पूर्वपदप्रकृतिस्वरनित्स्वरयोर्न विशेषोऽत आह

१ "स्त्र्याख्यमात्रेति प्रसङ्गः" इति नास्ति पुस्तके॥

यू स्त्र्याख्यौ नदी।१।४।३॥

यू इति किमर्थम्। खट्वा माला। किं च स्यात्। खट्वाबन्धुः मालाबन्धुः। नदी बन्धुनि (६।२।१०९) इत्येष स्वरः प्रसज्येत। इह च बहुखट्वक इति नद्यृतश्च (५।४।१५३) इति नित्यः कप् प्रसज्येत॥ नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नाप्यो नदीसंज्ञा भवतीति यदयं ङेराम्-

**नित् स्वरेणेति।** (कै)

खटेः क्वनि खट्वाशब्दो निष्पत्तेरिति भावः॥ ननु मातृशब्दस्य जननीपरिच्छेत्तृवाचकतया नानालिङ्गत्वेन स्त्र्याख्यत्वाभावोऽत आह

**मातृशब्द इति।** (कै)

आख्याग्रहणसामर्थ्याच्च लिङ्गव्यतिरिक्तार्थभेदः शब्दभेदनियामक इति न दोष इति भावः॥

**बहुपितृक इति।** (कै)

अनन्तरामिति अध्याहार्य्यः॥ समानधर्मानुपपत्तिमेव दर्शयति

**न हीति॥** (कै)

**एवं तर्हीति।** (कै)

निर्देशानुपपत्त्या ह्रस्वपक्षस्यैव युक्तत्वमिति व्युत्पादनाय प्रश्न इति भावः॥ भाष्ये

**निर्देशो नोपपद्यते इति।** (भा)

छान्दसत्वकल्पनं वृथेति भावः॥ दीर्घमात्रग्रहणार्थं तत् स्यादिति न वृथात्वमत आह

**उत्तरत्र चेति॥** (भा)

---

नद्याम्नीभ्यः (७। ३। ११६) इति पृथग् आम् ग्रहणं करोति॥ इह तर्हि मात्रे मातुरिति आण् नद्याः (७। ३। ११२) इत्याट् प्रसज्येत॥ किं पुनरिदं दीर्घयोर्ग्रहणम् आहोस्विद् ह्रस्वयोः। किं चातः। यदि दीर्घयोर्ग्रहणं यू इति निर्देशो नोपपद्यते। दीर्घाद्धि पूर्वसवर्णः प्रतिषिध्यते (६।

ननु ह्रस्वनिर्देशेऽपि "यू ह्रस्व इति" भिन्नार्थकवचनत्वात् सामानाधिकरण्यानुपपत्तिरत आह

ह्रस्व इतीति । (कै)

वेदाः [१]प्रमाणानि इत्यादावप्येवमेव ॥ नन्वेकत्वाविवक्षापेक्षया यू इत्यस्यासम्बन्ध एव कल्प्य इत्यत आह

असतीति ॥ (कै)

ननु ह्रस्वनिर्देशाद्दीर्घयोर्न स्यादिति कुतो नोक्तमत आह

दीर्घयोरपीति ॥ (कै)

अनुवर्त्तते इति । (कै)

तच्च सप्तम्या विपरिणमय्य शब्दसंज्ञायां विधेयायां सवर्णग्रहणं न इत्यर्थकरणादिति भावः ॥

नास्ति विशेष इति । (कै)

वचनारम्भं प्रतीति शेषः ॥

अथ त्विति । (कै)

असन्दिग्धे सन्दिग्धवचनमेतत् ॥

---

१ प्रमाणम् । क ॥

---

१ । १०५) । उत्तरत्र (१ । ४ । ६) च विशेषणं न प्रकल्पेत यू ह्रस्वाविति । यदि यू न ह्रस्वौ ; अथ ह्रस्वौ न यू । यू ह्रस्वौ चेति विप्रतिषिद्धम् ॥ अथ ह्रस्वयोर्हे शकटे अत्रापि प्रसज्येत (७ । ३ । १०७) । नैष दोषः । अवश्य-मत्र विभाषा नदीसंज्ञैषितव्या । उभयं हीष्यते । हे शकटि हे शकट

**पठ्यते इति । (कै)**

पाठाऽभावेऽपि

**[1]सर्वतोऽक्तिन्नर्थात्** (ग-सू)

इति ङीषि "शकटी" शब्दस्य त(ष)त्त्वमिति बोध्यम् ॥

**अस्ति भेद इति । (कै)**

एवं चोभाभ्यामपि अवश्यं वचनं कार्य्यमित्याशयकं भाष्यमेकदेश्युक्तिरिति भावः ॥ ननु किं शब्दोऽनिर्धारितविशेषविषये प्रश्ने प्रश्नविषयत्वं च नियमार्थत्वे प्रयोजकमत आह

**कोऽर्थ इति । (कै)**

अर्थः प्रयोजनम् ॥

**सम्बन्धः । (कै)**

विषयविषयिभावः । समासकृत्तद्धितोत्तरत्वादेः सम्बन्धार्थकत्वादित्यर्थः ॥ प्रश्नविशयत्वे बीजं दर्शयन् तस्य प्रयोजकत्वमाह

**यच (कै)**

---

१ अ ४ । पा १ । सू ४५ । एतत् सूत्रस्थगणसूत्रम् ॥

---

इति ॥ इह तर्हि शकटिबन्धुरिति नदी बन्धुनि (६ । २ । १०९) इत्येष स्वरः प्रसज्येत । इह च बहुशकटिरिति नद्यृतश्च (५ । ४ । १५३) इति नित्यः कप् प्रसज्येत ॥ नैष दोषः । ङिति ह्रस्वश्च (१ । ४ । ६) इत्ययं नियमार्थो भविष्यति । ङित्येव यू ह्रस्वौ नदी संज्ञौ भवतो नान्यत्रेति ॥

इत्यादि ॥ एवं विधेयत्वाभिमतान्यथासिद्धिर्नियमप्रयोजिकेति फलितं तदाह भाष्ये

विधेयं नास्ति (भा)

इत्यादि ॥

अस्त्री [1]वा नदीसंज्ञौ नेति । भा

केवलस्त्रीशब्दादौ प्राप्त्या तदन्ते चान्यापि नित्यस्त्रीलिङ्गा-नित्यर्थाज्ञानात् प्राप्तिं मत्वैव व्याख्यातम् ॥ ननु शेषग्रहणप्रत्याख्यानात् घित्वेन गुणो भविष्यतीत्यत आह

नित्ययेति । (कै)

विभक्तेन ङ्ख्वावित्यनेन नित्यसंज्ञाया एव विधानादिति भावः ॥ भाष्ये

शेषग्रहणं न करिष्यते इति । (भा)

तत् सत्त्वे हि स्त्रीलिङ्गह्रस्वयोर्नदीसंज्ञाया उक्तत्वेनानुक्तनदी-त्वाभावात् तत्र घिसंज्ञाविधातुमशक्येति भावः ॥ ननु घित्वेऽपि नदीत्वानिवृत्तेराडाद्यपि स्यादत आह

---

१ उपलब्धभाष्यपुस्तके "वास्त्री" इति पाठोऽस्ति । उपलब्धविवरणे तु "अस्त्री वा" इत्यस्ति ॥

---

केमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् । नित्या नदीसंज्ञा प्राप्ता सा विभाषा विधेया । तत्रापूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः ॥ अथायं नित्यो योगः स्यात् प्रकल्प्येत नियमः । वाढं प्रकल्प्येत । नित्यस्तर्हि भविष्यति । तत्कथम् ।

**एकविषयत्वादिति। (कै)**

"एकसंज्ञाधिकारादे"ति पर्य्याये हेतुः ॥

**अविशेषेण (भा)**

इत्यस्य स्त्रीपुंसाविशेषेणेति नार्थ इत्याह

**बाध्यत्वादिति॥ (कै)**

**सामान्यम्।**

बाध्यत्वलक्षणसादृश्यम् ॥

**सूत्रेष्वपीति। (कै)**

"छन्दोवदि"त्यतिदेशादिति भावः ॥

**तादर्थ्यादिति। (कै)**

"छान्दोवदि"त्यतिदेशे बीजमुक्तम् ॥

**निर्देशानुपपत्त्येति। (कै)**

निर्देशकल्पितातिदेशान्यथानुपपत्त्या इत्यर्थः। अतिदेशविषये तद्वैयर्थ्यापत्त्या"गौणमुख्य"न्यायाप्रवृत्तेरिति भावः॥ शब्दे सन्देहाभावात् कोऽयम् इति प्रश्नोऽनुपपन्न इत्यत आह

**यथार्थ इति॥ (कै)**

भाष्ये एकदेश्याह

---

योगविभागः करिष्यते (१।४।६)। इदमस्ति। यू स्त्र्याख्यौ नदी। नेयङुवङ्स्थानावस्त्री (१।४।४) वामि (१।४।५) ततो ङिति। ङिति च इयङुवङ्स्थानौ यू वास्त्री नदीसंज्ञौ न भवतः। ततो ह्रस्वौ। ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः इयङुवङ्स्थानौ वा नेति च निवृत्तम्॥

स्त्रियमिति ॥ (भा)

इतर आह

यद्येवमिति ॥ (भा)

स्त्र्याख्याविति । (भा)

कर्मण्यणातोयुका भाष्यमिति भावः ॥

यस्त्विति । (कै)

यद्यपि

आचष्टे इति (भा)

आख्या इति (भा)

व्युत्पाद्य पश्चात् षष्ठीसमासे सिध्यति । तथापि

स्त्रियमाचक्षाते (भा)

इति विग्रहोल्लेखादेवमुक्तम् ॥ पुनरेकदेश्याह

न तर्हीदानीमिति ॥ (भा)

सौचप्रयोगे विप्रतिपन्नप्रतिस्रोकानुपपत्तिकथनमसङ्गतमत आह

शिष्टेति ॥ (कै)

स एवाह

---

यद्येवं भ्रूकटये अत्र गुणो न प्राप्नोति (७ । ३ । १११) । द्वितीयो योगविभागः करिष्यते प्रथमग्रहणं न करिष्यते (१ । ४ । ७) । कथम् इदमस्ति यू स्त्र्याख्यौ नदी । नेयङुवङ्स्थानावस्त्री । वामि । ततो ङिति । ङिति च इयङुवङ्स्थानौ यू वास्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ । ह्रस्वौ च यू

**छन्दोवदिति ।** (भा)

इदमिष्टमिति भावः ॥ इतर आह

**न च्छेपेति ॥** (भा)

तद्व्याचष्टे

**असाधव इति ।** (कै)

[1]ऋषीणां तपो माहात्म्यात् तदुच्चारयितॄणामस्माकं न प्रत्यवाय इति बोध्यम् ॥

**स्त्रियामाख्यायेते** (भा)

इति भाष्ये । शास्त्रेणेति शेषः ॥ ननु उपपदत्वाभावात् समासो न स्यादत आह

**साधनमिति ॥** (कै)

**नद्यीति ।** ( कै )

ईकाराद्यन्तस्य स्त्रियां विधानाभावादर्थयोः संज्ञा इति वाच्यम् । एवं च ङूङोरेव स्यान्न तु तन्व्यादेरिति भावः॥

---

१ "ऋषीणाम्" इत्यारभ्य "स्त्रियामाख्यायेते इति" इत्यन्तं नास्ति इ पुस्तके ॥

---

स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ् स्थानौ वा नेति च निवृत्तम् । ततो घि । घि संज्ञौ च भवतः । स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततोऽसखि । सखि वर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः । स्त्र्याख्यौ ङितीति च निवृत्तम् ॥ यदि तर्हि शेषग्रहणं न क्रियते नार्थ एकेनापि योगविभागेन । अविशेषेण

**प्रतिपादनम्।** (कै)

शास्त्रेणेत्यर्थः॥ भाष्ये

**एवं तर्हि विजिति।** (भा)

सूत्राणां छन्दोवत्त्वादिति भावः। क्विप् तु नोक्तम्। तस्मा-दन्तेभ्योऽनभिधानात्॥ अत एव शंस्था इत्यादौ नेत्वम्॥ एवं चादन्तधातुप्रकृतिकमादन्तं प्रातिपदिकं लोके साध्विति बोध्यम्। आदन्तेभ्यो विचश्छन्दसि विधानादित्याहुः॥ वर्णयोः स्त्र्याख्यान-कर्तृत्वाभावात् कथं तन्न्यादौ सिद्धिरत आह

**समुदायेति।** (कै)

व्यूडोस्तु शास्त्रकल्पितं तदस्तीति भावः॥

**अच पक्षे।** (कै)

तदन्तसंज्ञापक्षे वक्तुं शक्य इति चिन्त्यम्॥

**अच पक्षे।** (कै)

"[1]आच्छीनद्योः" इत्यादि विषये अवयवे समुदायरूपारोपेण निर्वाह इति बोध्यम्॥

---

१ अ ७। पा। १। सू ८०॥

---

नदीसंज्ञोत्सर्गः। तस्या ऋस्वयोर्घिसंज्ञा वाधिका। तस्यां नित्यायां प्राप्तायामियं ङिति विभाषारभ्यते॥ अथवा पुनरस्तु दीर्घयोः। ननु चोक्तं निर्देशोनोपपद्यत इति दीर्घाज्जि पूर्वसवर्णः प्रतिषिध्यते इति वा छन्दसि (६। १। १०६) इत्येवं भविष्यति। छन्दसीत्युच्यते न चेदं छन्दः।

कप्रत्ययपक्षे। ( कै )

आख्याशब्दसत्त्वेनाख्याग्रहणमयुक्तमत आह

विजिति॥ ( कै )

प्रवृत्तिनिमित्तेति। ( कै )

एवं चाख्याबोधकं ग्रहणमित्यर्थ इति भावः॥

नियम इति। ( कै )

वार्त्तिके विषयशब्दोऽन्यत्र भावे तद्द्योतक एवकारो भाष्ये एवकारार्थ एव च नित्यग्रहणेनान्वाख्यायत इति बोध्यम्॥

स्त्रियमेवेति। ( कै )

स्त्रीत्वविशिष्टमेवेत्यर्थः॥

क्रियाशब्दत्वादिति। ( कै )

प्रवृत्तिनिमित्तभेद एव शब्दभेदे प्रयोजको न तु[1] विशेष्यभेदोऽपि लिङ्गभेदस्तद्भेदेपि भेदव्यवहाराभावादिति भावः॥

[2]ङिति ह्रस्वश्चेत्यत्रेति। ( कै )

---

१ विशेष्यभेदेनापि लिङ्गभेदस्तद्भेदव्यवहाराभावाद्। इ॥

२ अ १। पा ४। सू ६॥

---

छन्दोवत् सूत्राणि भवन्तीति॥ यदप्युच्यते उत्तरत्र विशेषणं न प्रकल्पेत यू स्त्र्याख्याविति यदि यू न स्त्र्याख्यौ अथ स्त्र्याख्यौ न यू यू स्त्र्याख्यौ इति विप्रतिषिद्धमिति। नैतद्विप्रतिषिद्धम्। आह्वायं यू स्त्र्याख्याविति। यदि यू न स्त्र्याख्यौ। अथ स्त्र्याख्यौ न यू। त एवं विज्ञास्यामः। य्वोर्या स्त्र्याख्याविति।

ह्रस्वघटितवाक्ये दीर्घघटितवाक्ये च एतदुपसंहारे स्फुटी भविष्यति ॥ भाष्ये

प्रथमलिङ्गेति । (भा)

वृत्तेः पूर्वं लिङ्गबोधके वृत्तिघटके शब्दे विद्यमानौ स्त्र्याख्यौ यौ यू तयोर्वृत्तौ स्त्र्याख्यत्वाभावेऽपि नदीत्वार्थमित्यर्थः । तदन्तसंज्ञापक्षे वृत्तिघटकशब्दे विद्यमानत्वं तस्य व्यपदेशिवद्भावेन बोध्यम् ॥ तदाह

यः शब्द इति । (कै)

यद्यप्यर्थभेदाच्छब्दभेदः तथापि श्रुत्यैक्यमात्रेणाभेदाध्यवसायात् यत्तच्छब्दबोधितैक्योपपत्तिः ॥

प्रकारान्तरम् । (कै)

वृत्त्यन्तरप्राप्तिः ॥

आचारे क्विपमिति । (कै)

[1]प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणादिति भावः ॥ अन्तादाचारक्विप् सत्वे इदम् ॥

---

१ परिभाषेन्दुशे—७१ ॥

---

को च ध्वोर्ऋत्वौ । सवर्णौ ॥ अथ स्त्र्याख्याविति कोऽयं शब्दः । स्त्रियमाचक्षाते स्त्र्याख्यौ । यद्येवं स्त्र्याख्यायाविति प्राप्नोति (३ । २ । १) । अनुपसर्गे हि को विधीयते (३ । २ । ३) । न तर्हीदानीमिदं भवति

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ॥

## खरकुटीवेति । (कै)

खरकुटशब्दात् [1]पिप्पल्यादेराकृतिगणत्वात् ङीष् कुटीशब्देन समासो वा ॥

## पुंस्त्वस्यानिवर्त्तनादिति । (कै)

न च तदनिवृत्तौ खरकुटीः पश्य इत्यादौ नत्वापत्तिः । "[2]प्रकृतिवद्" इत्यतिदेशेन प्रकृतिलिङ्गप्रयुक्तकार्य्यातिदेशेन तद्भिन्नस्त्रीत्वाश्रयकार्य्याप्रवृत्तेः स्पष्टं चेदं "[3]स्त्रियाम्" इति सूत्रे भाष्ये । यद्वा तेन स्वप्रयुक्तकार्य्याभावोऽप्यतिदिश्यते । स्पष्टं चेदं "[4]तस्माच्छसो नः पुंसि" इति सूत्रे भाष्यकैयटयोः ॥ अत्रापि पक्षे प्रकृते स्वाश्रयलिङ्गनिवृत्तौ मानाभावः इत्याशयः । तत्प्रत्याख्यानेऽपि स्त्र्याख्यावित्यस्य स्त्रीत्वेनैव य आहेति नार्थः किन्तु स्त्रीत्वविशिष्टमेव य आहेत्यर्थः । न चायं तथा स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वादिविशिष्टस्याभिधानात् । न च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्य सत्त्वेनासम्भवः । व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजने-

---

१ षिद् गौरादिभ्यश्च ( ४ । १ । ४१ ) एतत् सूत्रस्थगणसूत्रम् ॥
२ परिभाषेन्दुशे–३६ ॥ ३ अ ४ । पा १ । सू ३ ॥
४ अ ६ । पा १ । सू १०३ ॥

---

**छन्दोवत्कवयः कुर्वन्ति ।** न ह्येमेध्यिः ॥ एवं तर्हि कर्मसाधनो भविष्यति (३ । ३ । ५८) । स्त्रियामाख्यायेते स्त्र्याख्यौ । यदि कर्मसाधनः कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति । तन्त्र्यै लक्ष्म्यै श्रियै भुवै ॥ एवं तर्हि बहुव्रीहिर्भविष्यति । स्त्रियामाख्यानयोः स्त्र्याख्यौ । एवमपि कृत्स्त्रिया

ऽपि स्त्रीपदादिबोध्यत्वदशायां तत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेष्यदर्शनेन तत्त्वानुमानात् तत्फलं तु श्रिये ब्राह्मणाय इत्यत्र लुपि "[1]ङिति ह्रस्वश्च" इति विकल्पाभावः । "प्रथम लिङ्गं च" इति तु न तद्विषयमिति वक्ष्यते । एतेन यथा दारादिशब्दैः शब्दशक्तिस्वभावाच्छास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्याभिधानं तथा लुबन्तैरपि शास्त्रीयस्त्रीत्वविशिष्टस्यैव पुमादेरभिधानम् अत एव "[2]तदशिष्यम्" इत्यनेन तत्प्रत्याख्यानं संगच्छते । एवं चात्रापि नित्यस्त्रीत्वमस्त्येव इत्यपास्तम् ॥ अतिशयिता तन्त्रीरिति विग्रहे दोषाभावादाह

**तन्त्रीमतीति ॥ (कै)**

**वहिरङ्ग इति । (कै)**

अकृतव्यूहपरिभाषा तु नास्त्येव इति भावः ॥ यथोद्देशे इदम् अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दमात्रग्रहणम् । अत एव क्यजाद्यन्ते न दोषः । समुदाये कार्य्यप्रवृत्तिस्तु नद्यन्तत्वाद् बोध्या ॥ वस्तुतः कार्य्यकालपक्षेऽपि समासस्येष्टैव तदवयवस्य तत्प्राप्तिः । अत एव भाष्ये

---

१ अ १ । पा ४ । सू ६ ॥ २ अ १ । पा २ । सू ५३ ॥

---

धातुस्त्रियास्त्र न सिध्यति । तन्त्र्यै लक्ष्म्यै श्रियै भ्रुवै ॥ एवं तर्हि विजभविष्यति (३ । २ । ७४) । अथवा पुनरस्तु क एव । स्त्रियमाचक्षाते स्त्र्याख्याविति । ननु चोक्तम् स्त्र्याख्यायाविति प्राप्नोति अनुपसर्गे हि को विधीयत इति । मूलविभुजादिपाठात् को भविष्यति (३ । २ । ५) । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम्

## तदाश्रया नदीसंज्ञा भविष्यति (भा)

इत्युक्तम् । कार्य्यवेलायामपि भविष्यतीत्यर्थस्तस्य । कैयटरीत्या तु "तदाश्रया नदीसंज्ञास्ती"ति वदेत् । कुमारीत्यादावपि विशेषण-तया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वमस्त्येव । प्राधान्येन तन्मात्र बोध-कत्वनिवेशे तु न मानमित्याशयः ॥

## चिन्त्यमेतदिति । (कै)

आध्यायतीत्यादिविग्रह इत्यभिमानः । वस्तुतस्तु ध्यानं धीः आ ईषत् प्रशस्ता वा धीर्यस्य इति विग्रहः । एवं च गतिपूर्वत्वाद्यणपि सुलभः "अवयवस्य इयङ् स्थानत्वम्" इति भाष्यं च रमणीयमेव ॥

## आध्यै (भा)

इत्यादौ समुदायस्य नित्यस्त्रीत्वाभावान्नदीत्वाप्राप्तेरवयवस्य सा वाच्या सा च न प्राप्नोति तस्य "इयङ्स्थानत्वात्" वार्त्तिकारम्भे तु न दोषस्तेन हि नित्यस्त्रीत्वाभावेऽपि प्राक्तननित्यस्त्रीत्वं गृहीत्वा इदानीं सा प्रवर्त्तते न चेदानीमसावियङ्स्थान इति निषेधाप्रवृत्तिः प्राक्तनेयङ्स्थानत्वं गृहीत्वा निषेधस्य तु न वृत्तिर्मानाभावादिति

---

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ ।

ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवतीति ॥

अथाख्याग्रहणं किमर्थम् । नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् । वा । नदीसंज्ञायामाख्याग्रहणं क्रियते स्त्रीविषयार्थम् । स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात् । इह मा भूत् । ग्रामण्ये सेनान्ये स्त्रिया इति ॥ प्रथमलिङ्गग्रहणं च । वा । प्रथम लिङ्गग्रहणं च कर्त्तव्यम् ।

भावः । न च "[1]गतिकारकपूर्वस्य" इत्यत्र प्रतिपदोक्तपरिभाषया नित्यसमासस्यैव ग्रहणमिति । अत्र यण् दुर्लभः । अत एव "[2]छन्दस्युभयथा" सूत्रे "मानः समस्य दूढ्यः" (वेदे) इति मन्त्रव्याख्यावसरे दुर्धिय इति कैयटेन प्रयुक्तमिति वाच्यम् । मानाभावात् कैयटप्रयोगे दुःस्थिता धीर्येषामिति विग्रहेण धीशब्दं प्रति गतित्वाभावाददोषः । अत्र वेदमपि भाष्यं मानम् ॥

## सामर्थ्यात्क्षिप्तमिति । (कै)

इयङुवङ्स्थानत्वस्याङ्ग एव सम्भवादिति भावः ॥ एतद्वार्त्तिकभाष्यप्रामाण्यादियङुवङ्भ्यामुपस्थितस्याङ्गस्य शब्देऽन्वय इति तात्पर्य्यम् ॥

## अङ्गत्वं नास्तीति । (कै)

ननु त्वदुक्तविग्रहे अन्तर्वर्त्तिविभक्त्या धीशब्दस्याप्यङ्गत्वमस्त्येव इति चेन्न नदीसंज्ञाकार्य्यप्रयोजकश्रूयमाणविभक्तिनिरूपिताङ्गं यत्र

---

१ गतिकारकपूर्वस्येष्यते । भा । अ ६ । पा ४ । सू ८२ ॥
२ अ १ । पा १ । सू ३९ ॥

---

प्रथमलिङ्गे यौ स्त्र्याख्याविति वक्तव्यम् ॥ किं प्रयोजनम् । प्रयोजनं क्विप्लुप्समासाः । वा । कुमार्य्यै (३ । १ । ८) ब्राह्मणाय ॥ लुप् । खरकुट्यै (५ । ३ । ९८) ब्राह्मणाय ॥ समास । अतितन्त्र्यै ब्राह्मणाय अतिलक्ष्म्यै ब्राह्मणाय तत्तर्हि वक्तव्यम् । न वक्तव्यम् । अवयवस्त्रीविषयत्वात् सिद्धम् । अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यति । अवयवस्त्रीविषयत्वात् सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोऽवयवस्येय-

क्वापि इयङादेः स्थितिस्तत्रनिषेधात्। अत एव हे श्रीरित्यादौ निषेधः। तदाह

## एतदर्थमेवेति। (कै)

यत्र नदीकार्य्याश्रयेऽङ्गे बाधकाबाधितेयङुवङो स्थितिः क्वचित् प्रयोगे दृष्टान्तस्य शब्दस्य सति सम्भवे तदवयवस्य च नदीत्वं नेत्यर्थ इति भावः॥ प्रध्ये इत्यत्र अन्तावयवनित्यस्त्रीत्वमादाय नित्यैव संज्ञा इयङ्स्थानत्वाभावाच्च न "ङिति ह्रस्वश्च" (१ । ४ । ६) इति विकल्पः। न च प्रधीशब्दावयवस्य नदीत्वे "[१]नद्यृतश्च" इति कबापत्तिः। समासात् पूर्वावस्थायामुत्तरपदस्य नदीत्व एव कपः प्रवृत्तेः॥ नन्वेवम् अतिश्रिये ब्राह्मणाय इत्यादाववयवस्त्रीत्वमादाय विकल्पापत्तिरित्याशङ्क्य भाष्ये

## ह्रस्वेयुव् (भा)

इत्यादि॥ ङिन्प्रत्ययात्प्रिगाङ्गस्यैव स्त्रियामिति विशेषणमिति अनेन अन्वाख्यायत इति बोध्यम्। आख्या पदं तु अत्र न सम्ब-

१ अ ५। पा ४। सू १५३॥

उवङ्स्थानत्वात्। वा। अवयवस्त्रीविषयत्वात् सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे (१ । ४ । ४) यण्स्थानयोरपि स्वोः प्रतिषेधः प्रसज्येत। आध्यै प्रध्यै (६ । ४ । ८२) ब्राह्मण्यै। किं कारणम्। अवयवस्य इयङ् उवङ्स्थानत्वात्। अवयवोऽन्येयङ् उवङ्स्थानः (६ । ४ । ७७)॥ सिद्धन्वङ्गरूपग्रहणाद् यस्याङ्गस्येयुवौ तत्प्रतिषेधात्। वा। सिद्धमेतत्। कथम्। अङ्गरूपं

ध्यते । अतिश्रिया इत्यादावङ्गस्य तत्त्वाभावात् पाक्षिकनदीत्वानापत्तेः । एवं च समुदायस्थानेन नदीत्वं क्रियते तत्र "प्रथमलिङ्गग्रहणं च" इत्यस्य प्रत्याख्यानरीत्या प्राप्त्यभावात्तन्नं निवर्त्य विधित्वेनैव व्याचष्टे

## नदीसंज्ञौ भवत इति । (भा)

वस्तुतो वार्त्तिकेनाप्यतिलक्ष्म्यै इत्यादाववयवस्यैव सा क्रियते इति समुदायस्य नैव प्राप्तिः ॥

## अतिश्रिये (भा)

इत्यादाववयवस्य तेन प्राप्ता "नेयङि"ति निषिद्धा । तस्य तु नानेन संज्ञा विकल्पः यतो ङिद्विहितस्तदादित्वाभावात् स्त्र्याविन्त्यादेर्स्त्रीवर्णाद्यन्ते इयङादिस्थानेवर्णाद्यन्ते च शब्दरूपे इति वार्त्तिकोऽर्थः तादृशौ शब्दाविति भाष्योऽर्थः इत्यलम् ॥ ननु प्रथम-

---

१ अ १ । पा ४ । सू ४ ॥

---

गृह्यते । यस्याङ्गास्येयुवौ भवतस्तस्येदं ग्रहणं न चैतस्याङ्गस्येयुवौ भवतः ॥ स्त्र्येयुव्स्थानप्रवृत्तौ च स्त्री वचने । वा । स्त्रौ च इयुव्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । शकट्यै (५ । ३ । ९८) अतिशकट्यै ब्राह्मण्यै । क्व मा भूत् शकटये अतिशकटये ब्राह्मणाय । धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत् । धेनवे अतिधेनवे ब्राह्मणाय । श्रियै अतिश्रियै । क्व मा भूत् श्रिये अतिश्रिये ब्राह्मणाय ।

लिङ्गग्रहणस्य "यूस्त्र्याख्यावि" त्यत्रोपसंख्यातत्वेन "¹ङिति ह्रस्वश्च" इत्यत्राप्रसक्तेः ह्रस्वयुवेत्यादिव्यर्थमत आह

अवयवेति । (कै)

न्यायस्तत्रापि समान इति भावः ॥ "प्रथमलिङ्ग" इत्यस्य "²ङिति ह्रस्वश्च" इत्यत्रानुवृत्तिभ्रमवारणाय इदम् इति तु भाष्ये वक्ष्यति । अतः कैयटे प्रत्याख्यानवाक्यमारम्भवाक्यस्याप्युपलक्षणं बोध्यम् ॥

न हि प्राक् प्रवृत्तेरिति । (कै)

ननु नयतीति नीस्तमतिक्रान्तायै अतिनियै ब्राह्मण्यै हरि-मतिक्रान्तायै अतिहर्य्यै इत्यत्र नदीत्वापत्तिमनिष्टमस्त्येव न वाङ्गस्य नित्यस्त्रीत्वाभावान्न दोषः । तस्य नित्यस्त्रीत्वेन विशेषणेऽतिश्रियै ब्राह्मण्यै इत्यसिध्यापत्तेरिति चेन्न तादृशानामनभिधानात् ॥

नियमार्थ इति ।

अस्त्रीवचनाङ्गव्यावृत्त्यर्थ इत्यर्थः ॥

---

१ अ १ । पा ४ । सू ६ ॥ २ अ १ । पा ४ । सू ६ ॥

---

भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् । भ्रुवे अतिभ्रुवे ब्राह्मणाय ॥ अपर आह । कृतौ च इयुवस्थानौ च प्रवृत्तावपि स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । प्रकत्र्यै अतिप्रकत्र्यै ब्राह्मण्यै । क्व मा भूत् प्रकटये अतिप्रकटये ब्राह्मणाय । धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत् धेनवे अतिधेनवे ब्राह्मणाय । श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत् । श्रिये अतिश्रिये

**ब्राह्मण्यै** (भा)

इत्युदाहरणं तु लुबन्तं बोध्यम् ॥

**उपसंहारस्येति।** (कै)

"प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यमि"त्यादेरित्यर्थः॥ द्वेष्यम् इत्यस्यानिष्टविषयकमपीत्यर्थः ॥

**विकल्पते।** (भा)

इत्यत्रोपसर्गाविवक्षितार्थः ॥

**तदाचार्य इति।** (भा)

अस्याग्रय उक्तः ॥

---

ब्राह्मण्याय। भ्रुवै अतिभ्रुवै ब्राह्मण्यै। क्व मा भूत्। भ्रुवे अतिभ्रुवे ब्राह्मणाय। किमर्थं पुनरिदमुच्यते। प्रथमलिङ्गग्रहणं चोदितम्। तद्द्वेष्यम् विज्ञानी-यात् सर्वमेतद् विकल्पते इति। तदाचार्य्यः सुहृद् भूत्वान्वाचष्टे कुस्त्रौ च इयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनाववेति ॥

ग्निदिति तत्पुरुषः। इत्संज्ञकग्नकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थः।' अन्तरङ्गत्वात्तिवादिषु एग्नि च कृते आत्वमिति भावः॥ दिवेः सनि [1]"सनीवन्त"तीडभावपक्षे [2]"हलन्ताच्च" इति कित्त्वे [3]"च्छ्वोरि" त्यूठि यणि च [4]"सन्यङोः" इति द्वित्वेरूपम्॥ द्वितीयं निराकरोति भाष्ये

[5]प्रत्यय इति॥ (भा)

त्रपुसमिति। (कै)

त्रपषमिति पाठान्तरं त्रपुषमिति च॥ कर्मधारयमुपपादयति

[6]विशिष्टावस्थेति। (कै)

रूपरसगन्धान्तरयुक्तमित्यर्थः। आद्ये त्रपुसं फलविशेषः। द्वितीये समासाभावेऽपि न क्षतिरितिबोध्यम्॥

तद्रूपाऽऽरोपेणेति। (कै)

दृष्टान्तबलेन तथैव लाभात्॥ ननु दृष्टान्ते लक्षणाया अव्यभिचारेण कार्य्यजननप्रतीतिः प्रयोजनं प्रकृते च न किं चित्तयेतिलक्षणा दुरुपपादेत्यत आह

अथवेति॥ (कै)

कालेति। (कै)

---

१ अ ७। पा २। सू ४९॥ २ अ १। पा २। सू १०॥
३ अ ६। पा ४। सू १९॥ ४ अ ६। पा १। सू ९॥
५ प्रत्यय इति चेदिति। ग। क॥
६ अत्र "दध्येव" इति प्रतीकः क ग चिह्नितपुस्तकेऽस्ति॥

द्विर्वचनविधानसमय एवेत्यवधारणाभाव इत्यर्थः । एवं चक्रतुरित्याद्यसिद्धिः पुनर्यणादेशानापत्तेरिति भावः । प्रत्ययस्य विशेष्यते द्विर्वचनं चेत्यस्य चिकीर्षितत्वेन निर्दिश्यत इति शेषः ॥ तत्राश्रुतस्य प्रत्ययस्य कथं विशेष्यत्वमत आह

द्विर्वचनेनेति । (कै)

अचीत्युपादानात् षाष्ठमिह द्विर्वचनं तच्च प्रत्यये इति तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः । तद्भावभाविताामात्रेण निमित्ततायाआश्रयणात्मन् यङन्तस्य द्वित्वेऽपि तदाऽऽक्षेपः । स चाचीत्यस्य श्रवणात् सप्तम्यन्तस्यैवेति भावः ॥

अचीत्येतच्च तस्येति । (कै)

विशेषणमित्याकृष्यते । तदादिविधिरित्यस्य तेनेत्यादिः । तदयमर्थः । द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवद् द्वित्वे कर्त्तव्ये इति ॥

विरुद्धत्वादिति । (कै)

एवं च सहविवक्षाभावान्नैकशेषो वक्तुं शक्य इति भावः ॥

[1]प्रागेव । (कै)

सर्वादीनीत्यत्र ॥ नन्वेकशेषे द्विवचनाऽपत्तिरत आह

विभक्त्यन्तयोरिति । (कै)

१ सहविवक्षाभावेऽपि "सरूपाणाम्" (१ । २ । ६४) इत्येकशेषः संज्ञापरिभाषावल्लक्ष्यलक्षणत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोस्त्वेकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः ॥

परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भावः॥ प्रातिपदिकानामेवैकशेषेऽप्याह

¹अथवेति। (कै)

नीलोत्पलस्पर्धिनी नेत्रे तनुर्वेतिवदिति भावः। क्रमेण बोधाद्द्वावृत्तिर्बोद्धारं प्रति उच्चारयितुस्तन्त्रम्। इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकं न तु साक्षादेवेत्याशयः। तद्भाव भाविताभावित्रेण ²निमित्तस्येहाङ्गीकारात्। अत एव चक्रतुरित्युदाहरणसंगतिः॥ स्थोक्त्रसर्वेष्वित्यस्य ³"पुयण्जिषु" इति भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह

पिपविषत इति॥ (कै)

अनेन। (कै)

"द्विर्वचनेऽचि" इत्यनेन॥ नचाचोत्तरखण्डे जातयोरचोः ⁴"अचः परस्मिन्" इति स्थानिवत्त्वेनावर्णपरत्वाभावात् कथं ⁵"ओः पुयण्" इत्यस्य प्राप्तिरिति वाच्यम्। एतत्सूत्रारम्भसामर्थ्येनैव तद्प्रवृत्तेः। ⁶"सनीवन्त" इति ⁷"स्मिपूङ्" इति चोभयचेट्॥

---

१ अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लभ्यते॥

२ निमित्तस्य। क। ग॥

३ ओः पुयण्जिषु (७। ४। ८०) वचनं ज्ञापकं णौ स्थानिवद्भावस्य॥

४ अ १। पा १। सू ५७॥ ५ अ ७। पा ४। सू ८०॥

६ अ ७। पा २। सू ४९॥ ७ अ ७। पा २। सू ७४॥

नन्ववर्णपरपुयणजयो णौ प्रत्ययान्तरे च संभवन्ति तत्कथं णावित्युक्तमित्याशङ्कते

नन्विति ॥ (कै)

[1]येन नेति । (कै)

प्रकृतसूत्रे "परस्मिन्" इति वर्त्तते तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः। तत्राऽनेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणासंभवेन येन नाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्तिः स च णेरेव संभवतीति भावः। न च उरुच्छ्रुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविषतीत्यादावित्त्वार्थं वर्गादिग्रहणं चरितार्थम्। किं च भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि विभविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति वाच्यम्। [2]"सनिग्रह" इत्यत्रोपदेशाधिकाराभावस्य [3]"एकाच उपदेशे" इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषामनभिधानाच्च विचोऽसार्वत्रिकत्वाच्च। एतेन इवादिभ्य आचारक्विपि सनि इदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम्॥ भाष्ये

---

१ येननाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणात्स्तेरेव केवलस्य व्यवधायकस्य संभवात्॥

२ अ ७। पा २। सू १२॥ ३ अ ७। पा २। सू १०॥

[1]णौ स्थानिवदिति। (भा)

अत्र णाविति प्रत्ययग्रहणेन यस्मात्प्रत्ययविधिस्तदादेरित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः। यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिरत एव [2]"ह्रस्वस्य पिति" इत्यादौ न तदुपस्थितिरित्युच्यते तर्हि मास्तु। णौ पर इत्यर्थे रेफेण व्यवधानात् पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम्। ज्ञापनफलं तुतावयिषतीत्यादि॥

[3]तुल्यजातीयस्येति। (भा)

ण्यादिघटितधात्वच्तुल्यस्याच आदेश इत्यर्थः। षष्ठ्यन्तस्य षष्ठ्यन्तेन इत्यनेनैवान्वययोग्यत्वादिति बोध्यम्॥ अच्त्वेन तुल्यत्वं हलोऽपीति पृच्छति

[4]कस्येति॥ (भा)

उत्तरयति।

[5]यथा जातीयका इति। (भा)

ण्यादिघटितधात्वच इत्यर्थः॥ ण्यादिभिरचस्तुल्यत्वासंभवात्।

[6]अवर्णपरा इति। (भा)

---

१ ओः पुयण्ज्यपरे वचनं ज्ञापकं णौ स्थानिवद्भावस्य। यदयमोः पुयण्ज्यपर इत्याह तज्ज्ञापयत्याचार्यो भवति णौ स्थानिवद्भाव इति॥

२ अ ६। पा १। सू ७१॥ ३ तुल्यजातीयस्य ज्ञापकम्। भा॥

४ कश्च तुल्यजातीयः। भा॥ ५ यथा जातीयकाः पुयण्जयः। भा॥

६ कथं जातीयकाश्चैते। अवर्णपराः। कथं जग्ले मग्ले। भा॥

अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः। एवं चावर्णपरत्व-संपादकादेशस्थानित्वेन तुल्यतेति भावः। एवं च औननद् औजढद् इत्यादि चिन्त्यमेव। किं च यत्र द्विरुक्तौ परभागस्याद्योऽजवर्ण-स्तत्रेदमिति "द्विर्वचनेऽचि" इत्यादौ भाष्यकैयटयोः स्थितमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः॥

[1]अनैमित्तिकमात्त्वमिति। (भा)

अत एव [2]"ह्लावामश्च" इति क्तेनः कबाधनार्थं पुनरणविधानं चरितार्थमिति पर्युदासपक्षेऽप्यदोषम् [3]"आदेच" इत्यत्र भाष्य-कारो वक्ष्यति॥

[4]अनच्कत्वादिति। (भा)

आटिटद् इत्यत्र णिलोपे धातोर्द्वितीयस्याज्रहितत्वादित्यर्थो बोध्यः॥

---

१ अनैमित्तिकमात्त्वं शिति तु प्रतिषेधः। भा॥

२ अ ३। पा २। सू २॥

३ आदेच उपदेशेऽशिति। ६। १। ४५। अथवा पुनरस्तु पर्युदासः। ननु चोक्तमशित्येकादेशे प्रतिषेध आदिवत्त्वादिति। नैष दोषः। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम्। यदपि प्रत्ययविधिरित्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येजन्तेभ्य आकारान्त-लक्षणः प्रत्ययविधिरिति यदयं "ह्लावामश्च" (३। २। २) इत्यणं कबाधनार्थं शास्ति॥

४ आल्लोपोपधालोपणिलोपयणादेशेषु कृतेषु अनच्कत्वाद्द्विर्वचनं न प्राप्नोति॥

[1]पूर्वविप्रतिषेधेनाप्येतानीति। (भा)

"द्विर्वचनेऽचि" इति सूत्रभाष्याणि णौ स्थानिवदिति ज्ञापकभाष्याणि चेत्यर्थः॥

न हि नित्यानामिति। (कै)

आल्लोपादीनामित्यर्थः। "द्विर्वचनेऽचि" इत्यादेरभावे द्विर्वचनमनित्यम्॥ भाष्ये

[2]वक्ष्यति हीति। (भा)

[3]"दाश्वान् साह्वान्" इति सूत्रे॥

[4]यणाऽत्र भाव्यमिति। (कै)

यदीयङ्न स्यात् तर्हि स स्यादिति तत्संभावनासत्त्वादित्यर्थः। जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः। वस्तुतोऽत्र यणादिग्रहणमच्स्थानिकस्य द्विर्वचनात् परस्य विधेरुपलक्षणं बोध्यम्॥ सूत्रारम्भवादी आह

स पूर्वविप्रतिषेध इति॥ (भा)

उभयोः समतया तृतीयः पृच्छति

---

१ पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि॥

२ वक्ष्यति ह्याचार्य्यः। द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणि-लोपकिकिनोरुत्त्वेभ्यः। वा। द्विर्वचनं भवति विप्रतिषेधेन॥

३ दाश्वान्साह्वान्मीढ्वांश्च। ६। १। १२॥

४ "यणाऽत्र भवितव्यम्" इति कैयटेऽस्ति॥

[1]किं पुनरिति ॥ (भा)

स्थानिवद्भाव एव ज्यायानिति ॥ (भा)

अयं भावः । अयं पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्यः । विभवनीयिषतीत्याद्यसिद्ध्यापत्तेः । किं चेष्टानिष्टविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क्व सूत्रमताऽपेक्षया लाघवमिति ॥ अन्त्ये दूषणमाह

[2]ओदौदादेशस्येति । (भा)

अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुच्यावयिषतीत्यादौ दोषः । स्थानिवत्त्वं त्वल्विधित्वान्न इत्यत आह

ओदौतोरादेशो यस्मिन्निति । (कै)

इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न विभवनीयिषतीत्यादौ दोषः । अत्र सनीत्यंशोऽपि पूरणीयः । अन्यथा दिद्यवनीयिषतीत्यादौ अनेनोत्त्वापत्तिः । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः । एकणिज्व्यवधानं तु "येन नाव्यवधान"न्यायेन सह्यत एव । नन्विदं वचनं ओः सौत्राद् णिचि चङि सनि वाजीजवत् जिजावयिषतीत्यादावतिव्याप्तम् ।

१ किं पुनरत्र ज्यायः । स्थानिवद्भाव एव ज्यायान् । पूर्वविप्रतिषेधे* हि सतीदं वक्तव्यं स्यात् ॥

२ ओदौदादेशस्योद्भवति चुटुतुशरादेरभ्यासस्येति ॥

* पूर्वविप्रतिषेधे च्चेदं वक्तव्यं स्यात् । इति पाठः किल्हरणमुद्रापितभाष्यपुस्तकेऽस्ति ॥

न च चकार एव पाठ्यः । गुङ्घुङ्भ्यां णिचि चङि सनि वाजूगवदित्यादौ दोषापत्तेरिति चेन्न । ञोर्नैत्यस्याऽपि वाच्यत्वात् ॥ ओदौतोः किम् । चिखादयिषति ॥ च्वित्यादि किम् । बिभावयिषतीत्यादि ॥ यद्यपि छो छेदने चिच्छासति इत्यत्रैवातिप्रसक्तं तथापि औसाहचर्य्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औदादेशसाहचर्य्याद् अवेव गृह्यत इति न दोषः ॥

**ऊर्णुनावयिषतीति । (कै)**

यद्यपि "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यस्यानित्यतया नुशब्दस्यैव द्वित्वेनाभ्याससंज्ञाप्रवृत्तिकाले द्वादित्वाभावस्तथापि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्य्ये कर्त्तव्ये पूर्वत्रासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावाच्चैतत्प्रवृत्तिकाले द्वादित्वमस्त्येवेति बोध्यम् ॥

**अभ्याससंज्ञाप्रवृत्तिसमय इति (कै)**

एवं चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः । तत्रान्त्योदाहरणं चुक्षावयिषतीत्यादि न हि तत्राद्यकाले तत्त्वं चु इति कवर्गादित्वादित्याहुः ॥ ननु णेर्द्वित्वनिमित्तत्वाभावेन स्थानिवत्त्वाभावाद्बिभावयिषतीत्यादिसिद्धमिति त्वयापीत्ययुक्तमत आह

**[1]ओः पुयिति । (कै)**

चुक्षावयिषतीत्यादिसिद्ध्यर्थमित्यर्थः ॥

**परार्थम् (भा)**

इत्यत्र परशब्देन ज्ञापकापेक्षया परमित्त्वं विवक्षितमित्याह

---

[1] अ ७ । पा ४ । सू ८० ॥

**इत्त्वार्थमिति । (कै)**

"द्विर्वचनेऽची"ति स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः ॥

**प्रसङ्गादिति । (कै)**

वर्गप्रत्याहारजग्रहादित्यर्थः ॥

**[1]सन्यत इद्भवतीति (भा)**

विहितमित्त्वमिहानुवर्त्तमानं "परार्थं भविष्यती"ति भाष्येऽन्वयः । तत्र [2]"सन्यत" इत्यभिधानं स्वरूपेणेत्त्वमपूर्वं न भवतीति प्रदर्शनार्थं तद्वचनयन्नाह

**[3]अपूर्वमुत्त्वमिति । (कै)**

अपूर्वत्वं तदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः ।

**ममापि तर्ह्युत्त्वमिति ॥ (भा)**

तद्व्याचष्टे

**[4]उत्त्वमपीति । (कै)**

नापूर्वत्वं तदभावमात्रेण वैषम्यमभिप्रेतं किन्तु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये

**इत्त्वमपीति ॥ (भा)**

---

१ अ ७ । पा ४ । सू ७९ ॥ २ अ ७ । पा ४ । सू ७९ ॥

३ इत्त्वार्थं प्रसङ्गात्तु ज्ञापकं त्वया त्वपूर्वमुत्त्वं वक्तव्यमित्यर्थः । कै ॥

४ उत्त्वमप्यन्यार्थं वक्तव्यं तदेवाधिकविषये उपजीव्यत इत्यर्थः ॥

तदुपपादयति

यत्रेति । (कै)

गुणावादेशयोरिति शेषः ॥

वक्तव्यमिति । (कै)

णोर्नेति वक्तव्यमित्यर्थः ॥

नन्वसतीति । (कै)

असत्यपीत्यर्थः ॥

यदीति । (कै)

लघुपरत्वाभावेन सन्वत्त्वाभावोऽचिकीर्त्तदित्यत्र दोषः । द्विद्वनीयिषतीत्यादावपि दोषो बोध्यः ॥

अथ तुल्येति । (कै)

अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा तत्र द्विर्वचनेनान्तरङ्गनित्ये बाध्येते इत्यर्थः ॥

चक्रतुरिति । (कै)

द्विद्वनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे अष्टमाह्निकम् ॥

---

महाभाष्यप्रदीपोद्योतः ॥

# अदर्शनं लोपः । १ । १ । ६० ॥

नन्वपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवार्थस्य संज्ञा इत्यत आह

[1]स्वंरूपमिति ॥ (कै)

नानुवादे इति । (कै)

तत्र हि न संज्ञाकृतोऽभाव इत्यर्थः ॥ भाष्ये

[2]उक्तमिति । (भा)

[3]"नवेतिविभाषा" इत्यत्रेत्यर्थः ॥ असम्बद्धपदव्यवायान्नानुवृत्ति-रत आह

[4]लोप इतीति । (भा)

तदर्थान्वययोग्यताया अर्थे एव सत्त्वाददर्शनशब्दस्य तादृशा-र्थसंज्ञाकरणे फलाभाव इति भावः । प्रसक्तादर्शनस्येत्यर्थलाभार्थं स्थाने पदस्येवास्याप्यनुवृत्तिः सुलभा । "लुञ् छेदने" इति धात्व-

१ अ १ । पा १ । सू ६८ ॥

२ लोपसंज्ञायामर्थसतोऽवचनम् । वा । किमुक्तम् । अर्थस्य तावदुक्तम् । इति करणोऽर्थनिर्देशार्थः (वा – अ १ । पा १ । सू ४४ ) इति ॥

३ अ १ । पा १ । सू ४४ ॥

४ अपु जतु इत्यत्राणोऽदर्शनं तत्रादर्शनं लोप इति लोपसंज्ञा प्राप्नोति ॥

र्थानुसारेणान्वर्थलाभसम्भवादिति तु भाष्यतात्पर्य्यम्। [1]"अभावो लोप" इति [2]अवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाभाव एवाचेति बोध्यम्। [3]"स्वं रूपम्" इत्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम्॥ नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह

यदीति॥ (कै)

अत्र प्रत्ययो नास्तीत्याह

सोरिति॥ (कै)

ञ्णिति वृद्धिनिमित्ते इति। (कै)

[4]अङ्गसंज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणात् वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताङ्गग्रहणाच्चतिभावः॥ [5]"चादिलोप" इति संग्रहायाऽऽह

अर्थादेति। (कै)

"एकवचनमुत्सर्गत" इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसङ्ग-

---

१ अभावो लोपः। ततोऽवसानं चेति। (विरामोऽवसानम्। १। ४। ११०। एतत् सूत्रस्य भाष्यम्)॥

२ अ १। पा ४। सू ११०॥ ३ अ १। पा १। सू ६८॥

४ अ १। पा ४। सू १३॥

५ चादिलोपे विभाषा। ८। १। ६३। चवाद्याहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता। चलोपे। इन्द्र वाजेषु नोऽव। शुक्ला व्रीहयो भवन्ति। श्वेता गा आज्याय दुहन्ति। वालोपे। व्रीहिभिर्यजेत। यवैर्यजेत॥

कम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् ॥ ननु कथं प्रसक्तस्येति लभ्यतेऽत आह

## स्थाने इति । (कै)

न च पित् कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेपे आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किं चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते यथा पीनत्वेन रात्रिभोजनं नचैवं प्रकृते । न हि तत्सूत्रे आक्षेपं विना पित्कृत्प्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुत्पत्तिर्नापि [1]"प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरि"त्युपस्थितिः । अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किं चात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भव इति दिक् । यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीति वाक्ये [2]"ल्यब्लोप" इति पञ्चम्यापत्तिवारणाय प्रसक्तस्य इत्यावश्यकमिति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनात्राप्राप्तेः । तत्त्वे लिष्टापत्तिः पञ्चम्या इत्यलम् ॥

## अर्थादिति । (कै)

कर्तृलक्षणादित्यर्थः ॥

## शास्त्रात् । (कै)

[3]"कर्मण्यण्" इत्यतः ॥

---

१ परिभाषेन्दुशे — २४ ॥

२ अपादाने पंचमी ( २ । ३ । २८ ) एतत् सूत्रस्थवार्तिकम् ॥

३ अ ३ । पा २ । सू १ ॥

अणः प्रसङ्ग इति। (कै)

१"यस्मात्प्रत्ययविधिः" इत्यत्र विधिः प्रसङ्ग एव विवक्षित इत्यङ्गत्वमस्तीत्यभिमानः॥

षष्ठीग्रहणमिति। (कै)

तच्च षष्ठ्यन्तं वैयधिकरण्येनाऽदर्शनान्वयीति बोध्यम्॥

अचाऽपीति। (कै)

शास्त्रतः प्रसक्तिरेवाऽभिमतेति बोध्यमिति भावः। अर्थतोऽपि प्रसक्तिर्गृह्यत इत्युत्तरम्॥

अणोऽनेति। (कै)

परिहृत्य चाऽपवादविषयमिति न्यायेन प्रसङ्ग एव नास्तीति भावः॥

---

# प्रत्ययस्य लुक्श्लुलुपः। १। १। ६१॥

ननु लुगादिविधौ प्रत्ययादर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह

लुगादीति॥ (कै)

साक्षादिति। (कै)

लुगणिञोरित्यादौ॥

---

१ अ १। पा ४। सू १३॥

क्वचिदिति। (कै)

यथा [1]"लुग्वा दुह" इत्यादौ [2]"कुगस्ये"ति॥

क्वचिदिति। (कै)

वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः॥ ननु "अदर्शनस्येमाः संज्ञा" इति "अप्रत्ययस्यैता" इत्यनुपपन्नमत आह

अविद्यमान इति। (कै)

प्रतियोगिविशेषणत्वेनेति शेषः। वस्तुतोऽवसानसंज्ञासूत्रवक्ष्यमाणरीत्या प्रत्ययाभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः॥ भाष्ये

गोरपीति। (भा)

[3]"गोस्त्रियोः" इति समुदायाऽनुवृत्तेरितिभावः॥ ननु [3]"गोस्त्रियोः" इत्यत्र "स्त्रीति स्वरितगुणयुक्तं" इति [4]"स्त्रियाम्" इत्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात्प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तमत आह

पञ्चेन्द्र इति॥ (कै)

गोनिवृत्तिः प्रत्ययग्रहणं विनाऽपि सिध्यतीति शङ्कते

गोरिति॥ (कै)

पञ्चगुः (कै)

इत्यत्र क्रीतार्थठको [5]"अध्यर्द्धे"ति लुक्॥

---

१ अ ७। पा ३। सू ७३॥ २ अ ७। पा ३। सू ७२॥
३ अ १। पा २। सू ४८॥ ४ अ ४। पा १। सू ३॥
५ अ ५। पा १। सू २८॥

कृते इति । (कै)

परत्वादितिभावः । अन्तरङ्गानपीति न्यायस्तु अन्तरङ्गनिमित्त-विनाशकप्रत्ययलुग्विषय इति तात्पर्य्यम् । न च समासान्ते तेन व्यवधानात् कथं लुक् । गोरित्यनुवृत्तिसामर्थ्येन लुक्प्राप्तेरितिबोध्यम् ॥ नित्यशब्दाऽव्याख्यानाभिप्रायेण शङ्कते

नन्विति ॥ (कै)

समुदायस्येति । (कै)

[1]"यस्येति च" इत्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः॥ ननु योगविभागे सूत्रभेदः कृतः स्यादत आह

एकयोगेति ॥ (कै)

"प्रकारान्तरम्" । योगविभागरूपम् ॥

छयताविति । (कै)

कंसात् [2]"प्राक्क्रीताच्छः" परशोः [3]"उगवादिभ्यो यत्" ॥ कंसे "कमेः सः" परशौ आङ्परयोः "खनिशृभ्यां डिच्च" इत्युप्रत्ययः ॥

अतः क इति । (कै)

धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् कमिग्रहणेनैव सिद्धे इति शेषः । कंसेस्तु कंस इति न रूपम् । अनभिधानादितिभावः ।

---

१ अ ६ । पा ४ । सू १४८ ॥ २ अ ५ । पा १ । सू १ ॥
३ अ ५ । पा १ । सू २ ॥

अत एवेह "कमेः सः कंस" इति भाष्ये उक्तम् ॥ नन्वेवमपि विशिष्टनिर्देशाऽभावे यञञोरपि लुक् स्यादत आह

## यञञोरिति । (कै)

विकारावयवार्थप्रतीतये ह्यौत्सर्गिकाण एव लुकं विदध्यात् । न च यञञ्लुकां सामर्थ्याद्विकल्पोऽस्तु वेत्यनुक्तिस्तु यञञ्भ्यां सुक् औत्सर्गिकाणः श्रवणाभावायेति वाच्यम् । यञञ्लुकामेककाल-प्रतीतानामुद्देश्यविधेयभावासम्भवात् । [1]"ट्युट्युलौ तुट् च" इत्यादौ तु [2]"अनद्यतन" इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः । किं च [3]"कंसीयपरशव्ययोः" इति षष्ठीनिर्देशादपि न यञञोर्लुक् । अन्यथा पंचम्येव निर्दिशेदितिभावः ॥

## प्रकृतीति । (कै)

प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः । तेन नञा समासे प्रकृतिरुच्यते इत्यर्थः ॥ भाष्ये

## [4]ङ्याबिति । (भा)

प्रातिपदिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे

---

१ अ ४ । पा ३ । सू २३ ॥

२ अ ३, ५ । पा २, ३ । सू १११, १५, २१ ॥

३ अ ४ । पा ३ । सू १६८ ॥

४ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम । वा । यच्छयोश्च लुगर्थम् । वा ( ४ । १ । १ ) ॥

उभयोः प्रातिपदिकात्परत्वाभावेन परिशेषात् [1]कंसीयाद्यवयव-प्रातिपदिकात् परयोश्छयतोरेव लुगित्यर्थः॥

विशिष्टेति। (कै)

जनपदार्थकप्रत्ययसम्बन्धिन इत्यर्थः॥ भाष्ये

प्रकृतमिति। (भा)

अत एव [2]"लवणाल्लुग्" इत्यत्र प्रकृतठक एव लुगिति बोध्यम्। शोभनाः पंचाला इत्यादौ इति पाठः उचितः॥

अनन्तरस्येति। (कै)

अव्यवहितस्येत्यर्थः। [3]जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थः इति भावः॥ वार्त्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति

[4]आगस्त्येति॥ (कै)

चय इति। (कै)

एवं च वैषम्याद्यथासंख्याप्राप्तेरगस्त्ययोऽपि कुण्डिनाः कुण्डिना-श्चागस्तयः स्युः। लुक् च ज्ञापकात् सर्वादेश इति विभक्तिमात्रं श्रूयेतेतिभावः॥

द्वावेवेति। (कै)

तेन नोक्तापत्तिरितिभावः॥

---

१ कंसीयपरशव्ययोर्यञञौ लुक् च। ४। ३। १६८॥

२ अ ४। पा ४। सू २४॥

३ जनपदे लुप् (इत्यनेन) ४। २। ८१॥

४ अ २। पा ४। सू ७०॥

सर्वत्रेति । (कै)

अजादिप्राग्दीव्यतीयविषयेऽपीतिभावः ॥

अवृद्धत्वादिति । (कै)

यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति तथाप्यवृद्धत्वात् प्रकृतेश्छस्य वृद्धनिमित्तत्वाच्च आकारश्रवणं न स्यादिति भावः । सन्नियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः ॥

गोत्रे विहित इति । (कै)

नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणं न तु अनन्तरापत्य-प्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिस्स्यात् । [1]"शिवादिभ्य" इत्यत्रैव गोत्र इति निवृत्तेर्ऋष्यण् साधारणोऽगस्त्यप्रकृति [2]ऋष्यणन्त एवा-ऽऽगस्त्यः न लगस्तिप्रकृतिक [3]गर्गादियञन्तः । [4]"यञञोश्च" इति लुका सिद्धत्वादिति चेन्न । कौण्डिन्यसाहचर्य्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणाद् भाष्यमते गोत्रसंज्ञासूत्रपर्य्यन्तं गोत्रा-धिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च । वस्तुतो वार्त्तिककारस्यापीत्थ-मेव सम्मतमित्याह

वचनेति ॥ (कै)

सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह

विपर्य्यय इति । (कै)

न उपसंजातो विरोधो वैयर्थ्यशङ्कोद्भव यस्य तत्त्वादित्यर्थः ॥

---

१ अ ४ । पा १ । सू ११२ ॥ २ अ ४ । पा १ । सू ११४ ॥
३ अ ४ । पा १ । सू १०५ ॥ ४ अ २ । पा ४ । सू ६४ ॥

नत्वयमिति । (कै)

अयम् अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न किन्तु मुख्य एव अवयवलोपे समुदायस्यापि लोपादित्यर्थः ॥

अनुनासिकेति । (कै)

[1]"अनुदात्तोपदेश" इत्यनेन ॥

आघ्नीत (भा)

इत्यत्र [2]"आङो यमहन" इत्यात्मनेपदैकवचनम् ॥

[3]संग्मीयेति । (भा)

गमेर्विधिलिङि [4]"समो गमी"त्यात्मनेपदे इटि शपो "बहुलं छन्दसी"ति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदं च प्रयोजनम् अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिकमते बोध्यम् ॥

---

# प्रत्ययलोपे प्रत्ययलक्षणम् ।१।१।६२॥

लक्षणशब्दार्थमाह

---

१ अ ६ । पा ४ । सू ३७ ॥ २ अ १ । पा ३ । सू २८ ॥

३ बहुषु भाष्यपुस्तकेषु "सं रायस्पोषेण ग्मीयेति" इति पाठोऽस्ति । इंग्लण्डीयभाष्यपुस्तके "रायस्पोषेण संग्मीयेति" इति पाठोऽस्ति ॥

४ अ १ । पा ३ । सू २९ ॥

[१]निमित्तमिति ॥ (कै)

कार्य्यमिति । (कै)

बहुव्रीहिरभ्यम् ॥

प्रत्यासत्त्येति । (कै)

क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्य्य-वारणाय प्रत्यासत्तिराश्रयणीयेति भावः ॥ ननु "प्रत्ययलक्षणम्" इत्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्य्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्य्यातिदेशेनात आह

प्रत्ययस्य लक्षणमिति । (कै)

यस्य लोपस्तस्मिन् सति यः प्रत्ययो भवति तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थलाघवात् षष्ठीतत्पुरुष एव स्यादिति तात्पर्य्यम् ॥ रमेः क्यनि क्तेस्तु क्ते [२]"अनुदात्त" इत्यनुनासिकलोपेऽगुरूपो-त्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः ॥

एवं हि लोपेति । (कै)

ननु [३]"णेरनिटि" इत्यादिसामर्थ्यात् माभूत्तत्र प्रवृत्तिः । यत्तु सामान्येन लोपो णाविष्टवद् इति सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति

---

१ "प्रत्ययग्रहणं किमर्थम्" । इति भाष्यमुपादाय "प्रत्ययनिमित्तं कार्य्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः" इत्युक्तम् ॥

२ अ ६ । पा ४ । सू ३७ ॥ ३ अ ६ । पा ४ । सू ५१ ॥

चेन्न। एवं हि तत्रैव प्रत्ययस्य न लोप इति वदेत्। एवं च गुरुतरन्यासो ज्ञापक इति बोध्यम्॥

**अन्यथा। (कै)**

व्याख्यानस्य शरणत्वाभावे॥

**पदसंज्ञा न स्यादिति। (कै)**

तिङन्तत्वाऽभावादिति भावः॥

**लोपे प्रत्यय इति। (कै)**

अस्य प्रादुर्भवतीति शेषः॥ ननु प्रत्ययलोप इत्युक्ते कथं सति प्रत्यय इति लभ्यतेऽत आह

**प्रत्यय इति॥ (कै)**

**यत्कार्य्यमिति। (कै)**

प्रत्ययलक्षणं यत्कार्य्यं दृष्टमित्यर्थः॥

ननु [1]"जगद्" इत्यादौ विलोपात्परत्वात् पूर्वं [2]"गमः क्वौ" इत्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तिराह

**अचेति॥ (कै)**

**भिन्नविषयत्वादिति। (कै)**

वार्त्तिकमते एतत्। अचिरादेशे तुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तेरेवाव्याख्यानेनापवादत्वं नेति बोध्यम्॥ वैयात्यान्न्यायाङ्गीकारे दोषमाह

---

१ द्युतिगमिजुह्वोतीनां द्वे च (वा ३। २। १७८)॥

२ अ ६। पा ४। सू ४०॥

सति त्विति ॥ (कै)

एकमेवेति । (कै)

अवयवस्य प्रत्ययत्वपर्य्याप्त्यधिकरणत्वाभावादितिभावः । एवं चानयोः फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम् ॥ ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीह्यलाभात्तल्लभ्यकार्य्यातिदेशो न सिध्येदत आह

[१]तल्लक्षणमिति ॥ (कै)

वस्तुमात्रेति । (कै)

प्रत्ययमात्रेत्यर्थः ॥

प्रत्ययनिमित्तमेवेति । (कै)

प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः ॥

न वर्णेति । (कै)

प्राधान्येन वर्णनिमित्तमित्यर्थः ॥ ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः किन्तु तदवयवाश्रयोऽत आह

अवयवद्वारेणेति । (कै)

केचित्तु प्रत्ययग्रहणमित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः । प्रत्ययलोपेऽपीत्येव सूत्रं कार्य्यम् । अस्य तद्भवति यत्प्रत्यये सतीति शेषः । स्थानिवदित्यनुवृत्तिर्वा ॥

---

१ प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्य्ये निमित्तभावः प्रत्ययरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत् सर्वं स्यात् । सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्य्यं प्रत्ययलोपे भवति न वर्णरूपतानिमित्तम् ॥

**प्रत्ययलक्षणमिति।** (भा)

प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः॥

**वर्णलक्षणं** (भा)

वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तं प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादितिभावः॥ कैयटव्याख्या तु चिन्त्या। प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्य्यायत्वेन तद्विचारस्याऽयुक्तत्वापत्तेरित्याशङ्कः॥

[1]**अनेनैवेति।** (कै)

अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम्। [2]"आर्द्धधातुक" इत्यस्य कैयटरीत्या तोतोर्तीत्यादि-व्यावृत्या चरितार्थत्वात्। पूर्वसूत्रे आर्द्धधातुकग्रहणमनवकाशमिति [3]"क्ङिति च" इति सूत्रस्थभाष्यविरोधाच्चावृत्त्यादिना तथार्थ-कल्पने तु न मानम्। किं च तथार्थकल्पने [4]"यङ्यक्क्यवलोपे" इति वार्त्तिकं तदुदाहरणपरं "जौरदानुः" इति भाष्यं चासंगतं स्यादिति चिन्त्यमेतत्॥

---

१ उपलब्धविवरणपुस्तके "अनेनैव" इति "एव"कारघटितप्रतीकोऽस्ति। कैयटे तु "अनेन" इत्येवास्ति। अनेन नागेशभट्टीयकैयटपुस्तके एवकारघटित एव पाठोऽस्तीत्यनुमीयते॥

२ अ १। पा १। सू ४॥ ३ अ १। पा १। सू ५॥

४ तथाच भाष्यम्। "परिगणनं कर्त्तव्यम्। यङयक्क्यवलोपे प्रतिषेधः। वा। यङयक्क्यवलोपे प्रतिषेधो वक्तव्यः। यङ्। वेभिदिता मरीमृजः॥ यक्। कुषुभिता मगधकः॥ क्य। समिधिता दृषदकः॥ वलोपे। जौरदानुः"। ( १। १। ४ )॥

## सुधे (कै)

इत्यादि धिविहत्योर्नुमि विचि वलोपेऽपृक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपसुलोपयोरिमे रूपे। गुणनिषेधे तु सुधिन् शब्दे [१]"इन्हन्" इति दीर्घः। सुहनः "सर्वनामस्थाने च" इति दीर्घः। [२]"उपधायाश्च" इति इत्वे रपरत्वे सुनलोपयोः [३]"र्वोः" इति दीर्घः स्यादितिभावः॥

## स्थानिवद्भावेनेति। (कै)

वर्णाश्रयस्य तवाऽप्यनिष्टत्वादित्यर्थः॥ ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वेन [४]"उभयप्राप्तौ" इति नियमा[५]"च्छास्त्रस्य" इति षष्ठ्यनुपपत्ता [६]"कर्मणि च" इति समासनिषेधापत्तिश्च करणत्वे तु षष्ठ्युपपत्तेत्यत आह

## शास्त्रमिति। (कै)

शेषत्वेन "उभयप्राप्तौ" इत्यस्याप्राप्तेः षष्ठीसमासौ नाऽनुपपन्नावितिभावः॥

## आचार्यः स्मर्त्तेति। (कै)

फलितार्थकथनं स्मर्त्राऽऽचार्य्येणेति लन्वाख्यायत इत्यन्वययोग्यम्॥

---

१ अ ६। पा ४। सू १२॥ २ अ ७। पा १। सू १०१॥
३ अ ८। पा २। सू ७६॥ ४ अ २। पा ३। सू ६६॥
५ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य। वा। प्रत्ययलोपे प्रत्ययलक्षणमित्युच्यते सदन्वाख्यानाच्छास्त्रस्य। सच्छास्त्रेणान्वाख्यायते सतो वा शास्त्रमन्वाख्यायकं भवति सदन्वाख्यानाच्छास्त्रस्य॥
६ अ २। पा २। सू १४॥

स्वतन्त्रत्वमिति। (कै)

करणस्य कर्तृत्वविवक्षेतिभावः॥

अल्विधित्वादिति। (कै)

इमादेरितिशेषः॥ वर्णाश्रयेति तु वर्णप्राधान्यविषयकम्। एवं चाप्राधान्येनाल्लाश्रयणे विध्यर्थं सूत्रमितिभावः॥ भाष्ये

अस्ति प्रयोजनमेतदिति। (भा)

उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काक्वा प्रश्न इति बोध्यम्॥

किं तर्हीति। (भा)

मम तु निर्दोषमेव तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्न-गर्भमुत्तरम्॥

बाधनादिति। (कै)

एवं च "पञ्च" इत्यादौ पदत्वं न स्यादितिभावः॥

उपलक्षणार्थत्वादिति। (कै)

तयोरपि पूर्वपक्षबीजस्य समत्वादितिभावः। तत्र श्लुलुपोः प्रत्यय-लक्षणस्य फलं चिन्त्यम्। लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति॥

समावेशदर्शनादिति। (कै)

लुक्लुत्यादिष्वितिभावः। लोपः संज्ञा यस्येति बहुव्रीहौ मत्व-र्थीयानुपपत्तिस्तस्मात्तेन षष्ठीसमासेऽर्थाऽसङ्गतिरत इत्यन्तेन षष्ठी-समास इत्याह

लोपस्येति॥ (कै)

सङ्कर इति । (कै)

परस्परं लोपशब्दभावितप्रत्ययाऽदर्शनविषये लोपसंज्ञया चेत्यर्थः। प्रत्ययादर्शनमात्रं सकलं लुमत्संज्ञं प्राप्नोतीति भाष्याऽक्षरार्थः ॥

[1]उतो वृद्धिरिति । (पा)

न च तत्र [2]"नाभ्यस्तस्य" इति वर्त्तनाद्दोषः। अत्र पक्षे व्यभिचाराभावात् तदनुवृत्तेर्वक्तुमशक्यत्वात् ॥

हरीतकीति । (कै)

नन्वत्र सत्यपि ङीषो लुकि युक्तवद्भावात् पुनर्ङीष् स्यादिति चेन्न। लक्ष्ये लक्षणस्येति न्यायादित्याहुः। हरितक्यां [3]"हरितक्यादिभ्यश्च" इत्यणो लुप्। यद्वा हरीतकीवेयं प्रतिकृतिरिति कनो लुप्। लवण इत्यत्र [4]"लवणाल्लुक्" ॥ तद्भावितग्रहणे युक्तिमाह

तत्राश्रितेति । (कै)

आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते तथोक्ता इत्यर्थः। अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञेत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्यैव सा संज्ञेति लभ्यते इति भावः ॥ प्रत्यासत्तिस्तैर्दुर्ज्ञेयेत्यत आह

आवृत्तिर्वेति । (कै)

तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्संज्ञमित्यर्थः ॥ अदर्श-

---

१ अ ७। पा ३। सू ८९ ॥ २ अ ७। पा ३। सू ८७ ॥
३ अ ४। पा ३। सू १६७ ॥ ४ अ ४। पा ४। सू २४ ॥

नच नित्यत्वेऽपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह

भाविसंज्ञेति ॥ (कै)

तद्भावितग्रहणपक्षे [१]"यथैव" इत्यादिग्रन्थोऽनुपपन्न इत्यत आह

[२]तिसृणामिति । (कै)

इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवाऽऽपत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः ॥

वैयधिकरण्यादिति ।

भवनक्रियायां प्रकृतेः कर्तृत्वादितिभावः ॥

क्वचिद्विकारस्येति । (कै)

वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वं विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात् सामानाधिकरण्यम् । अत एव गौणत्वान्महच्छब्दे आत्वाभावो गोमतीशब्दे तु गोमतीनदीभिन्ना गोमतीनदीभूतेत्यर्थेनाभाषितपुंस्कत्वात् पुंवत्त्वाभाव इति बोध्यम् ॥ भाष्ये

एवं लोपेति । (भा)

एवं लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् ।

---

१ "यथैव तर्ह्यदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहत एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन्" । भा ॥

२ तिसृणां संज्ञानां विधानसामर्थ्यात् परस्परविषयावगाहनं तासां माभूत् । लोपसंज्ञाविषये तु ताः प्रवर्तेरन् ॥

अत्र सामर्थ्यात् तद्भावितग्रहणेऽपि लोपसंज्ञायां तद्ग्रहणे मानाभावः । न च लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं मानं तस्याः प्रयोजनान्तरसत्त्वादित्याह

[१]अस्त्यन्यदिति ॥ (भा)

तद्दर्शयति

लोपमात्रे इति । (भा)

भाष्ये ॥ स्वयम्प्रयोजनान्तरमप्याह

प्रत्ययाप्रत्ययेति ॥ (कै)

भाष्ये

लुमति प्रतिषेधाद्वेति । (भा)

भवतु लोपसंज्ञायामपि तद्भावितग्रहणं [२]"न लुमतेति" निषेधेन तत्र लोपत्वनिमित्तकार्य्यप्रवृत्तिर्ज्ञाप्यते इत्यदोष इति भावः ॥ लुक्युपसंख्यानम् इति दोषे परिहृते दोषान्तरमाशङ्कते

सतो निमित्तेति ॥ (भा)

वार्त्तिकतद्व्याख्यानयोर्विरोधं परिहरति

निमित्तशब्देनेति ॥ (कै)

नन्वेवं पदत्वेऽपि भत्वस्याऽपि सत्त्वादल्लोपः स्यादत आह

अल्लोपस्त्विति ॥ (कै)

---

१ अस्त्यन्यल्लोपसंज्ञायाः पृथक्करणे प्रयोजनम् ॥

२ अ १ । पा १ । सू ६३ ॥

कालविप्रकर्षेति। (कै)

अस्य योऽन्तरस्य नाऽयमवसर इत्यर्थः॥ भाष्ये

एतत्। (भा)

वक्ष्यमाणवाक्यार्थरूपम्॥

पदसंज्ञाद्वयमिति। (कै)

अनया पदसंज्ञया न लोपो भविष्यतीत्यादिभाष्यार्थः॥

यथेति। (कै)

वर्णप्राधान्यविषय एव स निषेध इति भावः॥ भाष्ये

[1]पर्य्यवपन्नानि। (भा)

मृतानि। अप्राप्तानीति यावत्॥ नन्वेतत्कार्य्यातिदेशे स्यात् स एव कुतः शास्त्रनिमित्तातिदेशयोरपि सम्भवादत आह

कार्य्यस्येति॥ (कै)

व्यपदेशः। (कै)

निमित्तम्॥

विधीयेते इति। (कै)

इत्यभिमान इतिशेषः॥ वस्तुतः कार्य्यशास्त्रातिदेशयोरभेद एवेत्युक्तम्॥ भाष्ये

एकयोगलक्षणानि चेति। (भा)

तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्प्यन्त इत्यर्थः॥ ननु

---

१ इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्य्याणि पर्य्यवपन्नानि भवन्ति अन्ये तेन प्रत्युत्पाद्यन्ते॥

अन्यभाव इति षष्ठीतत्पुरुषः कर्मधारयो वोभयथापि ह्यनुपपन्नो भावस्य भावान्तरेणायोगात्समासमंज्ञाया बाधाच्चार्थासंगतेश्चेत्यत आह

अन्यो भाव इति । (कै)

भाष्ये ऽन्यरूपमापन्नस्येत्यर्थकम् "अन्यभूतस्य" इत्येतत्तु फलितार्थो बोध्यः ॥

स्वार्थ इति । (कै)

चातुर्वर्ण्यादित्वात् ॥ ननु सत्ता स्थानिनश्चेदिरुद्धमतिदेशस्वरूपेण सत्ताया अशक्यत्वाच्चात आह

रूपादिव्यपदेशस्येति । (कै)

एतदर्थमेव स्थानिसंज्ञानुदेशादित्युक्तं न तु स्थान्यनुदेशादिति । तथा सति स्थानिकार्य्यातिदेश एव स्यादितिबोध्यम् ॥ भाष्ये शङ्किताऽऽह

[1]तद्वक्तव्यमिति । (भा)

वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः ॥ परिहरति

यद्यपीति ॥ (भा)

अथवैतर्हीति । (भा)

तथापीत्यर्थः । एवं लघुतरत्वाद्वचनान्तरेणाऽपि परिहारो युक्त इतिभावः ॥

---

१ तद्वक्तव्यम्भवति ॥

संज्ञामिति। (कै)

निमित्तभूतव्यपदेशमित्यर्थः॥ ननु संज्ञासंज्ञिनोर्भेदाद्भक्तेर्हेतिः संज्ञेत्ययुक्तमत आह

सूत्रोपात्त इति॥ (कै)

फलान्तरमपि वचनान्तरारम्भे दर्शयति भाष्ये

भेत्यादि॥ (भा)

सिद्धमिति। (भा)

दृष्टमिति शेषः। वक्ष्यमाणान्यल्विधित्वाद्वार्त्तिकमते नाऽतिदेशेन भविष्यन्ति। सूत्रारम्भे तु वर्णाश्रये इत्यस्य वर्णप्राधान्यविषयत्वादतिदेशेन स्युरेवेतिभावः॥

चित्रेति। (कै)

[1]"नक्षत्रेण युक्तः" इत्यणो [2]"लुबविशेषे" इति लुप्। युक्तवद्भावात् स्त्रीत्वं ततो जातेऽर्थे [3]"सन्धिवेलादी"त्यणो वार्त्तिकेन लुगितिभावः। न चाणो लुकि [4]"लुक् तद्धिते"ति टापो लुकि पुनष्टाब् दुर्लभो लक्ष्ये लक्षणस्येति न्यायादिति वाच्यम्। जातगत स्त्रीत्वबोधनरूपफलस्यासिद्धतया प्रवृत्तेः॥

अत इत्यधीति। (कै)

अकारान्तादण् इत्यर्थः॥

१ अ ४। पा २। सू २॥ २ अ ४। पा २। सू ४॥
३ अ ४। पा ३। सू १६॥ ४ अ १। पा २। सू ४९॥

ननु वतण्डात् स्त्र्यपत्ये यञो [१]"लुक् स्त्रियाम्" इति लुकि प्रत्ययलक्षणेन [२]"प्राचाम्" इति प्राप्तं ष्फं बाधित्वा परत्वाद् ङीन् स्यात् [३]"शार्ङ्गरवादि" पाठादत आह

यथेति । (कै)

तत्र हि सूत्रे यञ इति वर्त्तते ॥

सर्वत्रग्रहणादिति । (कै)

तद्धि पूर्वसूत्रेऽपकृष्यते ॥

[४]औतोऽमिति । (भा)

एकादेशविधायकं हि तत् ॥

अचीति । (कै)

अजाद्योरित्यर्थः । अत एव तद्धितशसो निवृत्तिः ॥ भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रतिदूषणमाह

तस्य दोष इति । (भा)

स्थानिसंज्ञानुदेशादित्यस्येत्यर्थः ॥

इत्त्वम् । (भा)

[५]"शास इदङ् हलोः" इति ॥

इम् । (भा)

[६]"तृणह" इत्यनेन ॥ भाष्ये

१ अ ४ । पा १ । सू १०९ ॥
२ अ ४ । पा १ । सू १७ ॥
३ अ ४ । पा १ । सू ७३ ॥
४ अ ६ । पा १ । सू ९३ ॥
५ अ ६ । पा ४ । सू ३४ ॥
६ अ ७ । पा ३ । सू ९२ ॥

वक्ष्यत्यचेति । (भा)

नङीति ङौ नलोपप्रतिषेधाद् ज्ञापकात् प्रत्ययलक्षणेन भसंज्ञानेत्येवं रूपमनुपदमेतत्सूत्र एवेत्यर्थः ॥

शास्त्रपरेति । (भा)

उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमान कार्य्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीतिभावः ॥ तदाह

सति प्रत्यये इति । (कै)

इदं सूत्रं तत्तच्छास्त्रनिमित्तसम्पादनद्वारा तत्तच्छास्त्रप्रवृत्ति-सम्पादकमितिभावः । अत एव पूर्वं तान्यनेन प्रत्युत्थाप्यन्ते इत्युक्तम् । तानि तत्कार्य्यबोधकानि शास्त्राणीति तदर्थः उचितो न तु कार्य्याणि क्रियन्त इत्यर्थः । क्रियन्त इत्यस्यैव वक्तुमुचितत्वात् । अत एव १"टित आत्मनेपदानाम्" इति सूत्रे पर्य्यवपादो रूपान्तरापत्तिरित्युक्तं कैयटेन विद्यमानस्य हि रूपान्तरापत्तिर्भवति शास्त्रमेव च विद्यमानं न तु कार्य्यं तस्य रूपान्तरमेतद्विषयं कार्य्यान्तरप्रवर्त्तकत्वम् । एवं च पर्य्यवपन्नत्वमपि शास्त्रस्येत्यन्ये ॥ भाष्ये

कानि पुनरिति । (भा)

पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्न इदानीं तु

---

१ अ ३ । पा ४ । सू ७९ ॥

प्रयोजनप्रश्न इति न पौनरुक्त्यमत एव सद्व्याख्यानादिति प्राग्व्याचरितम् ॥

यद्यप्यल्विध्यर्थमिति । (कै)

इदमितिशेषः ॥

विशेषविहितत्वादिति । (कै)

प्रत्ययविषये शीघ्रोपस्थितिकत्वादित्यर्थः ॥

चौ ते (भा)

इत्यादौ [1]"शेश्छन्दसी"ति लोपः ॥ "नुम्" फलं तु दीर्घः ॥

आश्रित्येति । (कै)

अपवादवाधकवाचनिकपूर्वविप्रतिषेधाश्रयणेनेतिभावः । [2]न्यायेन पूर्वं लोपप्राप्तेरत्यल्पविषयत्वात् ॥

विशेषविहितत्वादिति । (कै)

येननाप्राप्तिन्यायेनापवादत्वादित्यर्थः ॥

तदेति । (कै)

[3]"अपवादविषयं परित्यज्ये"ति न्यायेनापवादविषये उत्सर्गा-

---

१ अ ६ । पा १ । सू ७० ॥

२ "न्यायेन पूर्वम्" इत्यारभ्य "विषयत्वाद्" इत्यन्तं नास्ति – क – ग – पुस्तके ॥

३ प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते । परिभाषेन्दु – ६३ ।

प्रवृत्तेरितिभावः। [१]"यदी"त्यनेन विषयभेदादपवादत्वमेव नास्तीति सूचितम्। यदि तु [२]"नुड्विषये रप्रतिषेधो वक्तव्य" इत्यादिप्राग्निकभाष्येण विषयभेदेऽप्यपवादत्वं तर्हि प्रत्ययलोपस्थलेऽनुत्पत्तिरेवाम्नाख्यायते इति [३]स्वरूपसूत्रस्थभाष्ये उक्तत्वेनापवादत्वसंभावनैव नेत्याहुः॥

[४]इतीयङिति। (कै)

१ "कानि पुनरस्य योगस्य प्रयोजनानि। प्रयोजनमएक्तश्लिलोपे नुममामौ गुणवृद्धी दीर्घत्वमिडाट्श्नम्विषयः। वा। अएक्तलोपे श्लिलोपे च कृते नुममामौ गुणवृद्धी दीर्घत्वमिमृअडाटौ श्नम्विधिरिति प्रयोजनानि। नुम्। अग्ने त्री ते वाजिना त्री षधस्था। ता ता पिण्डानाम्। नुम्॥ अमामौ। हे अनड्वन् अनड्वान्॥ गुणः। अधोक्। अलेट्॥ वृद्धिः। न्यमार्ट्॥ दीर्घत्वम्। अग्ने त्री ते वाजिना त्री षधस्था। ता ता पिण्डानाम्॥ इम्। अटयोट्॥ अडाटौ। अधोक्। अलेट्। ऐयः। औनः॥ श्नम्विधिः। अभिनोऽत्र। अच्छिनोऽत्र"। भा॥ "अनड्वन्" इति भाष्यमुपादायोक्तं कैयटेन तद्यथा—"पूर्वं सम्बुद्धिलोपमाश्रित्यैतदुक्तम्। यदि तु विशेषविहितत्वादसम्बुद्धाविति पूर्वमम् प्रवर्त्तते तदा सम्बुद्धिलोपो न स्यात्"॥

२ "न वा नुड्विषये रप्रतिषेधात्। वा। न वैतद्विप्रतिषेधेनापि सिध्यति तिसृणाम् चतसृणामिति। कथं तर्हि सिध्यति। नुड्विषये रप्रतिषेधात्। नुड्विषये रप्रतिषेधो वक्तव्यः" एतच्च "स्त्रियां च" (७। १। ९६) इति सूत्रे उक्तम् भगवता॥

३ अ। १। पा २। सू ६४॥

४ "ऐयः" इति—। इयर्त्तेलङ् तिप् शपः श्लुः द्विर्वचनम् "अर्त्तिपिपर्त्योश्च" (७। ४। ७७) इतीत्वम् "अभ्यासस्यासवर्णे" (६। ४। ७८) इतीयङ्॥

ततो गुणे ऽपृक्तलोपे ऽडाटाविति भावः। अडागमे रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनापि कार्य्येणानयोर्न यौगपद्यमिति- भावः॥ तावस्थायामडिति पक्षेऽपि [1]"बहुलं छन्दस्यमाङ्योगेऽपि" इति बाहुलकाद्वैवमेव प्रक्रिया बोध्या॥ "अभिनोऽत्र" इत्यत्रा- पीकारलोपापृक्तलोपाभ्यां अमो यौगपद्यासंभवेन परत्वाल्लोपे तस्य प्रवृत्तिरिति बोध्यम्॥ भाष्ये

[2]प्रयोजनं ङौ (भा)

इति सूत्रारम्भवादी॥ प्रत्याख्यानवाद्याह

[3]भसंज्ञेत्यादि॥ (भा)

सूत्रारम्भवाद्याह

[4]भसंज्ञायां तावदिति॥ (भा)

[5]यदयं नङीति। (भा)

अङ्गाधिकारप्रतिनिर्द्दिष्टपक्षेऽयं ज्ञापकोपन्यासः॥

अकारेणाऽणन्तमिति। (कै)

तद्धि [6]"जातेरस्त्री"त्यादेराखुरित्यादौ व्यावृत्तये आवश्यकम्॥

---

१ अ ६। पा ४। सू ७५॥

२ प्रयोजनं ङौ नकारलोपेत्त्वम्‌विषयः॥

३ भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः। वा॥

४ भसंज्ञायां तावन्न दोषः॥

५ आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेन भसंज्ञा भवतीति यदयं "न ङिसंबुद्ध्योः" (८।२।८) इति ङौ प्रतिषेधं शास्ति॥

६ अ ४। पा १। सू ६३॥

ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाऽस्त्वित्यर्थमिदमेवं चाकाररूपो योऽण् इत्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह

विशेषणेति ॥ (कै)

वस्तुतोऽकार एव विशेष्य इत्याह

अणेति ॥ (कै)

न तु प्रत्ययनिमित्त इति । (कै)

प्राधान्येन प्रत्ययनिमित्त इत्यर्थः ॥ अजङ्गलात्मकयत्नोऽकारेण सामानाधिकरण्यासंभवादाह

अकारावयवेति । (कै)

बहुव्रीहिः । अस्य विशेषणत्वे इदम् । गुणे त्वन्याय्यकल्पनेति-न्यायादितिभावः ॥ नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणाय [१]"अजा-यत" इत्यत्र मुख्यार्थस्योत्तरत्र लक्षणायां वैरूप्यं स्यादतो व्याख्या-नान्तरमाह

अथवेति ॥ (कै)

तद्विशेषणमिति । (कै)

अमोऽवयवेऽचीत्यर्थ इति भावः ॥ एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह

प्रयोजनान्यपीत्यादि ॥ (भा)

ज्ञापनार्थमिति । (कै)

---

१ अ ४ । पा १ । सू ४ ॥

प्रत्ययलक्षणेन झलं नेत्यस्येति शेषः। [1]"न लुमता" [2]"तस्मिन्नित्य"नाश्रित्येदम् ॥

## अङ्गते तु इति। (कै)

परस्मैपदिविहिताङ्‌साहचर्य्यात् शासुधातोरेव ग्रहणं तत्रेति पक्षे विध्यर्थम् ॥ नन्वेवमप्यार्य्यशीरित्याद्यसिद्धिरिति चेत्। अत्राहुः। "शास इद्" इति सामान्यसूत्रं ततो "अङि" अजादौ चेदप्येवेति नियमार्थमिदमेवं च सूत्रे हलग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः। [3]"आशासः क्वावि"ति तु अत्र शासोरेव ग्रहणे विध्यर्थम् अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति ॥ अथ वार्तिकोक्तविध्यर्थत्वे दूषिते भाष्योक्तनियमार्थं सूत्रमिति प्रश्नपूर्वकमाह

## [4]न तर्हीत्यादि ॥ (भा)

## प्रत्ययं गृहीत्वेति। (भा)

प्रत्ययं तद्व्याप्यधर्म्मपुरस्कारेण यदुच्यत इत्यर्थः ॥

## शब्दं गृहीत्वेति। (भा)

उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यते इत्यर्थः ॥ ननु "[5]शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन माभूत्" स्थानिवत्त्वेन तु स्यादत आह

---

१ अ १। पा १। सू ६३ ॥ २ अ १। पा १। सू ६ ॥
३ शास इत्त्व आशासः क्वौ। वा- ६। ४। ३४ ॥
४ न तर्हीदानीमयं योगो वक्तव्यः ॥ ५ अत्रैव भाष्ये ॥

स्थानिवदिति ॥ (कै)

प्रत्यय एवेति । (कै)

उक्तोऽर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् । न च "अलोमो-षसी" इति पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नियमोऽपि व्यर्थ इति वाच्यम् । पर्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुब इत्यादौ स्वरानापत्तेरिति भाष्याशयात् ॥ ननु स्थानिनिमित्तं यदन्यस्य कार्य्यं तत्स्थानिवत्त्वेन लोपेऽपि न तु तस्यैव ह्यसतो वचनशतेनापि कार्य्यित्वाप्रतिपादनादिह चासत एव कार्य्यित्वमत आह

तत्र चेति । (कै)

[1]"सोर्मनसी" इति सूत्रे इत्यर्थः ॥

---

# न लुमताङ्गस्य । १ । १ । ६३ ॥

लोपक्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात् संज्ञा लुमदाख्या न च तत्रायं प्रतिषेधः किन्तु तत्प्रतिपादिता-

---

१ सोर्मनसी अलोमोषसी । ६ । २ । ११७ ॥ लोमोषसी वर्जयित्वा सोः परं मन्नन्तमसन्तंचाद्युदात्तम् ॥

दर्शने एवं च [1]"लुमति प्रतिषेध" इत्यनुपपन्नं तथापि बाधकधर्मस्य वाच्य उपचार इत्याह

लुमदिति॥ (कै)

ननु सर्वोऽपि स्वरः कार्य्यित्वेनैकमेवपदं गृह्णातीत्यत आह

एकेति॥ (कै)

[2]सर्वामन्त्रितेत्यत्रामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति [3]"पदस्य" [4]"पदाद्" इत्यधिकारेऽनन्तरमप्यामन्त्रितस्येत्युक्तम् व्यवहितमुदाहरति

दधीति॥ (कै)

अङ्गस्येत्यधिकारेति। (कै)

वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत्। तथाहि सौवरीणां सप्तमीनां

---

१ लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम्। वा॥

२ सर्वामन्त्रिते सर्वामन्त्रितपदेन –। सम्॥ अत्र भाष्यम्। सर्वामन्त्रितसिज्लुक्स्वरवर्ज्जम्। वा। सर्वस्वरम् आमन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा॥ सर्वस्वर। सर्वस्तोमः। सर्वपृष्ठः। "सर्वस्य सुपि" इत्यनेनाद्युदात्तत्वं (६। १। १९१) यथा स्यात्॥ आमन्त्रितस्वर। सर्पिरागच्छ। सप्तागच्छत। "आमन्त्रितस्य च' (६। १। १९८) इत्याद्युदात्तत्वं यथा स्यात्॥ सिज्लुक्स्वर। मा हि दाताम् मा हि धाताम्। "आदिः सिचोऽन्यतरस्याम्" (६। १। १८७) इतेष स्वरो यथा स्यात्॥

३ अ ८। पा १। सू १६॥ ४ अ ८। पा १। सू १७॥

[1]"भीह्रीभृद" इति सूत्रे प्रत्ययात् पूर्वम् इति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्य्यत्वाभावात् कित्स्वरे षष्ठ्या एव सत्त्वाच्च ॥ ननु संज्ञायामुपमानम् इति उपमानशब्दः संज्ञायामाद्युदात्त इत्यर्थकं कनो लुपि चंचेव चंचा इत्यादावाद्युदात्तबाधकं [2]"ञ्नित्यादिरि"त्येव सिद्धे व्यर्थं सदनुवन्धलक्षणे स्वरे प्रत्ययलक्षणाभावज्ञापकमिति तत्सूत्रे भाष्ये स्पष्टं तेनेदं विरुद्धेतेति चेन्न। अत एव तत्र भाष्ये "पथिमथिस्वरार्थं वचनं कर्त्तव्यम्" इत्युक्तम्। एवं च तदर्थस्यात्यवचनस्य कर्त्तव्यत्वं वदताऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव। एतेन "भीह्री"तिज्ञापकं विशेषापेक्षं सप्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम्। एवं च [3]"उपोत्तमं रिती"त्यादावेव तत्प्रवृत्तिरिति कैयटाशय इति परास्तम्। [4]"संज्ञायामुपमानम्" इति

---

१ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति (६।१।१९२) अथ पूर्वग्रहणं किमर्थं न "तस्मिन्निति निर्दिष्टे पूर्वस्य (१।१।६६) इति पूर्वस्यैव भविष्यति। एवं तर्हि सिद्धे सति यत् पूर्वग्रहणं करोति तज्ज्ञापयत्याचार्य्यः स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्तीति। किमेतस्य ज्ञापने प्रयोजनम्। "उपोत्तमं रिति" (६।१।२१७) रिदन्तस्य। "चङ्यन्यतरस्याम्" (६।१।२१८) चङन्तस्य॥ यद्येतज्ज्ञाप्यते "चतुरः शसि" (६।१।१६७) इति शसन्तस्यापि प्राप्नोति। शस्ग्रहणसामर्थ्यान्न भविष्यति। इतरथा हि तत्रैवायं ब्रूयाद् "ऊडिदं पदाद्यप्पुम्रैद्युभ्यः" (६।१।१७१) चतुर्भ्यश्चेति॥

२ अ ६। पा १। सू १९७॥ ३ अ ६। पा १। सू २१७॥

४ अ ६। पा १। सू २०४॥

सूत्रस्थभाष्यविरोधात् । तस्माज् ज्ञापकस्य सामान्यापेक्षत्वमेवो-चितम । तत्र सप्तम्या यथाश्रुतत्वे हि "न लुमते"ति निषेधा-त्तदप्रवृत्तौ "ञ्मितीति प्रयोजनम्" इति भाष्यासङ्गतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं सिद्धान्तपक्षे योजयितुं शक्यत्वादितिदिक् ॥ षष्ठीसमासादौ परत्वात् सति शिष्टत्वाच्च समासान्तोदात्तस्यैव प्राप्तेर्भाष्ये "सर्वस्तोम" इति बहुव्रीहिरुदा-हृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात् प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह

सर्वस्येति ॥ (कै)

विधीयत इति । (कै)

अपवादनिवर्त्तनेन व्यवस्थाप्यत इत्यर्थः ॥

प्रत्ययस्वरेणेति । (कै)

इष्णिप्रत्ययान्तत्वादितिभावः । नब्विषयस्य इत्यस्य तु न प्राप्तिः । अनिसन्तस्येतिपर्य्युदासात् । घृतादित्वकल्पनं तु किमर्थ-मितिचिन्त्यम् ॥

नित्स्वरेणेति । (कै)

सप्तन् शब्दोहि [१]"सप्यशूभ्यां तुट् च" इति कनिन्नन्तः । [२]"न्नः संख्याया" इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् । माहि दाताम् इत्यत्राऽट्प्रतिषेधाय माङ् । हि शब्दो [३]"हि च" इति निघात-प्रतिषेधार्थः ॥ सिज्लुक्स्वरवर्जनं न कार्य्यमित्याह

१ उणादि – १५५ ॥ २ फिट् – सू – २८ ॥
३ अ ८ । पा १ । सू ३४ ॥

सेरिति। (कै)

[1]"गाती"त्यनेन सूत्रेणैव लुकि [2]"मन्त्रे घसे"त्यत्र पुनर्लिग्रहणं न कार्यं लुग्विधानात् इत्येतच्च विध्यर्थं स्यादिति लाघवमितिभावः॥

प्रत्ययलक्षणार्थमिति। (कै)

प्रत्ययलक्षणेन ञिज्निमित्तकार्य्यार्थमित्यर्थः॥ ननु "अनिकित्स्वरा" इति भाष्यदर्शनात् अनिकितां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न इत्यत आह

अनिक्तितामिति॥ (कै)

"प्रयोजयन्तो"त्यस्य कर्माकाङ्क्षायामाह

प्रतिषेधमिति॥ (कै)

लुविति। (कै)

वार्त्तिके लुकीत्युपलक्षणमितिभावः॥ भाष्ये

आद्युदात्तत्वं माभूदिति। (भा)

एवं च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेवेतिभावः॥ अत्रिशब्दात् [3]"इतश्चानिञ" इति ढकोऽ[4]"त्र्यृश्वि"ति लुक्। ननु "अत्रय" इत्यत्र कित्स्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह

---

१ अ २। पा ४। सू ७७॥ २ अ २। पा ४। सू ८०॥
३ अ ४। पा १। सू १२२॥ ४ अ २। पा ४। सू ६५॥

[1]राशदीति ॥ (कै)

चिबन्त इति । (कै)

नान्तस्वन्तोदात्त इति भावः। इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम्। कितः प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यिणोऽसम्पादनान्न दोषः। अत एव नखनिर्भिन्न इत्यैवेत्याहुः॥ पथिमथिशब्दौ इन्प्रत्ययान्ततया प्रत्ययस्वरेण [2]"फिषोऽन्त" इति वाऽन्तोदात्तौ तयोः सर्वनामस्थाननिमित्तमाद्युदात्तमत्रापि स्यादित्यर्थः॥ भाष्ये

प्रतिषेधो माभूदिति । (भा)

तेनापर्युदासत्वं सूचितं तदुपपादयति ।

पर्य्युदासे तु इति । (कै)

प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः॥ नन्विष्यमाणमपि न प्राप्नोति प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह

लोपशब्देनेति । (कै)

[3]"हल्ङ्यादि" सूत्रेणेतिभावः। लुमता लुप्त एव निषेध इति तात्पर्य्यम्। "न लुमता तस्मिन्निति" पक्षे तु नेदमावश्यकम्। उत्तरपदत्वे चेति सर्वथा कार्य्यम्॥ ननु सामान्यत उत्तरस्य पदत्वे इत्यर्थे परमं चर्म इत्यत्रापि निषेधापत्तौ न लोपो न स्यादत आह-

---

१ राशदिभ्यां त्रिप् (उणादि – सू. ५०६) अदेस्त्रिनिश्च (उणादि – सू. ५०७) इति त्रिबन्तोऽत्रिशब्द आद्युदात्तः॥

२ फिट्–सू–१॥ ३ अ ६। पा १। सू ६८॥

## उत्तरपदमिति । (कै)

अत एव बहुच्पूर्वस्य नेति वचनमर्थवदितिभावः ॥ उत्तरपद-शब्दस्य समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम् ॥

## समासार्थेति । (कै)

तच्च सुप्सुपेत्यधिकारादितिभावः ॥

## ताम् । (कै)

[1]"सुपो धातु"ति लुप्ताम् ॥

## कुत्वादीनि । (कै)

कुत्वघत्वढत्वादीति ॥ ननु भत्वेन पदत्वबाधोऽत आह

## यस्मादिति । (कै)

तथाच भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः ॥ भाष्ये

## पदस्येतीति । (भा)

पदस्येत्यधिकृत्य यानि विहितानीत्यर्थः ॥ ननु सोपपदात् सिचेर्बिचि दधिषेचौ इति स्यादेव । न चेष्टापत्तिः । पदादादि-रिति पत्वे दुर्लभत्वादत आह

## अनभिधानादिति । (कै)

तस्य छान्दसत्वादितिभावः ॥ भाष्ये

## यद्यपदादीति । (भा)

एकदेशेन संपूर्णं वार्त्तिकमुपलक्ष्यते यतः प्रतिषेधस्यातिव्याप्तिर्न प्रतिषेधापवादस्येति बोध्यम् ॥

---

१ अ २ । पा ४ । सू ७१ ॥

स्वरश्चेति । (कै)

उत्तरपदादिरित्यधिकारादितिभावः ॥ तदभावे "स्वाङ्ग-शिटाम्" इति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह

कर्णशब्दादिति । (कै)

एवमादिविधिर्न सिध्यतीति भाष्यादुत्तरपदादिरित्यधिकारस्य-सूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके ॥

प्रत्यासत्त्येति । (कै)

[1]"प्रत्ययग्रहणे यस्मात् न विहितस्तदादेरित्युपस्थित्येति भावः ॥

तथाऽपीति । (कै)

वस्तुतो राजकुमार्यौ इत्यत्राऽपि दोषः ॥ समुदायादसौ विहितो नावयवात् । अन्यथा कौरुचरेय इत्यादौ चकाराकारस्याऽपि वृद्धिः स्यात् । "इह तर्हि" त्यादिभाष्यं तु अभ्युपेत्यवादेन । श्रुतेरग्रे तु नोत्तरपदत्वे चेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् । [2]"ङमो ह्रस्वाद्" इति सूत्रस्थं भाष्यं लिङ-द्देश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥ समासचरमा-वयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह

समासे हीति । (कै)

न तु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः ॥ केवलरूढत्वे नामग्रहणं तुष्यतु दुर्जनन्यायेन केवलयोगेऽप्याह

---

१ परिभाषेन्दुशे – २३ ॥ २ अ ८ । पा ३ । सू ३२ ॥

**न च करोति। (कै)**

राजवाचककर्णशब्दस्य तु "अभिव्यक्तपदार्था ये" इति न्यायान्न तत्र ग्रहणमितिभावः। काश्यपिणी इत्यादौ [1]"छन्दोब्राह्मणानी"ति तद्विषयताबोधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः। भाष्ये [2]"नः क्ये" इत्यादि "सुबन्तं च" इति॥ [3]"यस्मात् प्रत्ययविधिः" इति अवश्यमुत्तरत्रानुवर्त्यम्परमैस्तुभिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय। तत्त्वे हि [4]"ञ्नित्युपोत्तमम्" इति परमैरित्यस्यापि निघातापत्तिः। एवं च तस्य [5]"नः क्ये" इत्यत्रापि सम्बन्धे यस्मात् क्यविधिस्तदादि यदि क्ये तन्निमित्तान्तर्वर्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात् तथाच परमवाच्यतीत्यादावयवीवाक्शब्दस्य पदत्वेन कुत्वं स्यात् सूत्रस्तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि सम्बध्यत इति भावः। तस्य च मध्ये चेत् सुबन्तं तदा तदपि नान्तमेव पदमित्यर्थः। अन्वाचयशिष्टं च सुबन्तमिति सर्वत्र सन्नियोगशिष्टत्वे "षड्भ्य" इत्याद्यसिद्धिः। [6]"सिति च" इत्यत्र यद्यपि नास्ति उपयोगोऽवयवसुबन्ताऽप्रसिद्धेस्तथाऽपि उत्तरत्रानुवृत्तिं दर्शयितुं तत्राऽपि तत्सम्बन्धो दर्शितः। व्यपदेशिवद्भावेन कथं चिदन्वयः सम्पाद्यः। एवं [7]"स्वादिष्वि"ति सूत्रेऽपि तदनुवृत्तिकरणमुत्तरार्थमेव।

---

१ अ ४। पा २। सू ६६॥ २ अ १। पा ४। सू १५॥
३ अ १। पा ४। सू २३॥ ४ अ ६। पा १। सू १००॥
५ अ १। पा ४। सू १५॥ ६ अ १। पा ४। सू १६॥
७ अ १। पा ४। सू १७॥

[१]"यचि भम्" इत्यत्रापि पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं यस्मादित्यनुवर्त्यमिति बोध्यम् ॥

## संज्ञिनां भेदादिति । (कै)

सति सौ तदन्तस्य सुबन्तमिति पदत्वं न तत्प्राग्भागस्य [२]"स्वादिष्वि"तीति भावः ॥ नन्वपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये

## प्रतिषेधास्त्वेति । (भा)

विध्युन्मूलनं प्राप्तविधेर्निवर्त्तनम् । एवं चापवादन्यायेनाचान्तरङ्गासम्भव इति भावः । अत्रानुवर्त्तमानं सुबन्तमित्यपि [१]"स्वादिष्वि"ति सूत्रेण तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकं न तु सुबन्तमिति सूत्रप्राप्तस्येति बोध्यम् ॥ भाष्ये

## नोत्सहते इति । (भा)

स्वयमप्रवर्त्तमाना कथमन्यं बाधेतेति भावः ॥ ननु "सर्वनामस्थानेऽयची"ति न्यायस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्याये "स्वादिष्वि" त्यस्यैव निषेधे परमवाचावित्यादौ सुबन्तमिति पदत्वं स्यादत आह

## योगविभागे इति । (कै)

एवं च तत्सामर्थ्यादनन्तरस्येति न्यायबाध इति भावः ॥ "यची" त्यस्य पुरस्तादपकर्षे फलमाह

---

१—२ अ १ । पा ४ । सू १८॥

ऋत इति । (कै)

अत्र भाव्यमानत्वेन सवर्णाग्राहकत्वाद्यथा तपरत्वं सुखसुखार्थं तथेत्यर्थः ॥ "ऋत" इति तपरत्वं तु गुणान्तरयुक्तसंग्रहार्थम् । अन्यथोदात्तोच्चारणे ओर्णं इत्यत्र क्ते प्रत्ययसंनियुक्ताद्युदात्तत्वे शेषनिघाते चोदात्तत्वाभावान्न स्यात् । अनुदात्तोच्चारणे जौर्य्यतीत्यत्र न स्यादिति भावः ॥

भिन्नकालानिति । (कै)

परत्वेन पूर्वसूत्रबाधादिति भावः । अप्राप्तिरेवात्र निवृत्तिः ॥

भाष्ये

यद्येवम् (भा)

९।·

विभागस्य एतद्विषये पूर्वसूत्राप्रवृत्तावित्यर्थः । यस्यां वृत्तौ तपर-

तदन्यत्र वृत्तौ प्रयोगे ऐसादीनामुपसंख्यानं कार्य्यमिति

पद्गं ॥

‘ ...तावृत्तिः प्रयोगार्थे तु मध्यमा ।

... वृत्तिरिष्टा विलम्बिता ॥”

---

-विलम्बितयोरुपसंख्यानं काल-

-ं कर्त्तव्यं तथा

-ेः । किं

इति वृत्तिषु उपलभ्यय एव भिन्नकाला वर्णास्तु तत्काला एवेत्यभिसन्धाय भाष्ये

किं पुनरिति (भा)

प्रश्नः ॥ तत्तत्कालावच्छिन्नताल्वोष्ठपुटव्यापारजन्या भिन्नकाला एवेत्याशयेन

कालभेदात् (भा)

इत्युत्तरम् ॥

त्रिभागाधिका इति । (भा)

तृतीयभागाधिका इत्यर्थः । कैयटात्तथा प्रतीतेः । त्रयो भागा अधिका इत्यर्थस्तूचितः । केवलसंख्यावाचकानां पूरण प्रत्ययान्तार्थकत्वे मानाभावात् । तत्रासाधुत्वाच्चे ॥

यस्या नाड़िकाया

सुषुम्णाया इत्यर्थः ॥

विन्दवः । ब्र

योगिनाम्

**ह्लादाविति ॥** (कै)

**वस्तुमात्रम् ।** (कै)

अर्थसिद्धोऽर्थः । तत्फलं नञः सर्वनामस्थानपदेनासम्बन्धनम् ॥ भाष्ये

**प्लुतविकारे इति ।** (भा)

प्लुतसहितविकारे इत्यर्थः । एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुताविय्येतिभावः ॥ भाष्ये

**इह तर्हीति ।** (भा)

वार्त्तिकारम्भे लपदादिविधावित्युक्तेर्न दोषः । प्रत्याख्याने तु षः कुत्वाभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात् । एतेन योगविभागसिद्धस्य क्वाचित्कत्वान्न दोष इत्यपास्तमितिभावः ॥

**पञ्चमीतियोगविभागादिति ।** (कै)

पदादित्यस्य परशब्दान्वयेनाऽसामर्थ्यादत्र समासशास्त्राप्राप्तेः शौचः समास इति वक्तुमुचितम् ॥ भाष्ये

**न तेभ्यः प्रतिषेध इति ।** (भा)

तेभ्यः परस्य सुबन्तं पदमितिपदत्वमाश्रित्यापि न प्रतिषेधः । एव परमवाचु इत्यादावपि न दोषः ॥ भाष्ये

**[1]पदादेर्नेत्युच्यमानेऽपीति ।** (भा)

षष्ठीतत्पुरुषेऽपि न सिध्यति कुत्वाऽभावाय पदत्वाऽभावस्या-

---

१ पदादादेर्नेत्युच्यमानेऽपीति । क । ख । ग । ङ ॥

बहुच्त्वादिति भावः। अयं बहुसेचि दोषो वार्त्तिकारम्भेऽपि उत्तरपदत्वाभावेन निषेधाप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्व-निषेधप्राप्त्यभावेऽपि कुत्वप्राप्तेः॥ इदानीं प्रत्याख्यानप्रकारस्य गौरव-दुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचन-पाठमाह

एवं तर्हीति॥ (भा)

न पदान्तविधाविति। (भा)

पदान्तस्थानिकविधावित्यर्थः। नञ्घटितवार्त्तिकस्याप्येवैव प्रवृ-त्तिर्व्याख्यानादेतदेकफलत्वायेति बोध्यम्॥ एतावतापि बहुसेचौ इत्यस्यासिद्धिरिति प्रश्नते

कथं बहुसेचाविति॥ (भा)

तदुपपादयति

समासेति। (कै)

एवं च नियमाप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवत् १"चोः कुः" पदान्तस्येति कुत्वं स्यादितिभावः॥ पञ्चमीसमासेऽपि षत्वापत्तिरित्याह

नापि पूर्वस्येति॥ (कै)

भाष्ये

बहुच्पूर्वस्यचेति। (भा)

आद्यवार्त्तिकारम्भे तत्प्रत्याख्याने च २"सात्पदाद्योः" इत्यनेदं

१ अ ८ । पा २ । सू ३० ॥ २ अ ८ । पा ३ । सू १११ ॥

कार्य्यमितिगूढ़ आशयः । न पदान्तविधौ इति प्रतिनिर्देशादुत्तर-पदत्वे चेत्यस्य वार्त्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाप्रवृत्ति-रिति बोध्यम् । [1]"ङमुट्" सूत्रस्थं भाष्यं तु एतद्विरोधाद् [2]"उभि च पदे" इति सूत्रस्थभाष्यविरोधाच्च नलोपादिष्वित्यन्त इति वार्त्तिकस्थभाष्यविरोधाच्चैकदेश्युक्तिरिति बोध्यम् । एवं च प्रत्या-ख्यानप्रकारोऽपि योगविभागस्य क्वाचित्कत्वेन ङमुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्त्तिकं पुनरचरान्तरैरुपात्त-मित्याहुः ॥

## मुख्येत्विति । (कै)

उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः । रूढ्यस्यैव ग्रहणमित्येतद्व्याख्यायकं [3]"द्वन्द्वे चेति" इति तत्त्वम् । प्रत्याख्याने-ऽपि न मध्यमस्य प्राप्तिः । मध्यसुबन्तस्याऽपि स्वादिपरत्वेन विशेषणा-दिति बोध्यम् ॥

## प्रस्तावादिति । (कै)

आत इत्यारम्भादित्यर्थः ॥

## सिच इति । (कै)

अनेन विधित्वासम्भवो दर्शितः ॥ भाष्ये

## श्रूयमाणेति । (भा)

श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः ॥ तल्लाभोपायं दर्शयति

---

१ अ ८ । पा ३ । सू ३२ ॥ २ अ ८ । पा ३ । सू २१ ॥
३ अ १ । पा १ । सू ३१ ॥

**षष्ठीत्यादि ॥** (कै)

**अथवा यथा रथेति ।** (कै)

स्थशब्दः साहित्यवाचीतिभावः ॥

**तदवयवमिति ।** (कै)

बहुव्रीहिः । युष्मदस्मदोरिति तद्घटितसमुदाये लाक्षणिकमिति भावः ॥ मुख्येऽर्थे एव पदसामानाधिकरण्ये सम्भवति किं लक्षणयेत्याह

**अत्र हीति ।** (कै)

यद्यपि द्वितीयायां षष्ठ्यां च तयोः पदत्वासम्भवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता तथापि पदस्य इत्यस्य [1]"मादुपधाया" इत्यादाववयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणालाभः सर्वग्रहणसाध्य एवेत्याह

**सर्वग्रहणमिति ।** (कै)

[2]"अनुदात्तं सर्वम्" इत्यतः ॥ ननु लावस्थायामेवान्तरङ्गान-पीतिन्यायेन लुकि प्रत्ययलक्षणेनाऽपि न तिङन्तत्वमत आह

**परत्वादिति ॥** (कै)

**नाप्राप्तेष्विति ।** (कै)

अन्तरङ्गानपीतिन्यायादित्यपि बोध्यम् ॥ "इट्प्रतिषेधः" इत्यत्र "न प्राप्नोती" त्यनुषङ्गः ॥

**दीर्घत्वम् ।** (भा)

---

१ अ ८। पा २। सू ९॥ · २ अ ८। पा १। सू १८॥

[1]"क्रमः परस्मैपदेषु" इति॥

समुच्चिनुयादिति। (कै)

तत्राऽसम्भवीतिशेषः॥

इत्यभिप्रायेणेति। (कै)

प्रश्न इत्यर्थः॥ भाष्ये तटस्थोऽभिप्रायानभिज्ञ उत्तरयति

इटश्चेति॥ (भा)

आचार्य्य आह

नेत्याहेति। (भा)

गमेरिड्विधिर्वर्तते तत्प्रतिषेधः क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थः इति भावः॥ अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताव्याप्तेश्चाङ्गाधिकारपरत्वं न युज्यते इत्युपसंहरति भाष्ये

इहेति॥ (भा)

अनित्कित्स्वरा इति। (कै)

इदमुपलक्षणम्। अहर्ददातीत्यत्रासुपीति प्रतिषेधस्यापि। वस्तुतः "किञ्चित्" इत्यत्र किञ्चित् पदेन [2]"रोऽसुपी"त्येव अनित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन "न लुमता तस्मिन्निति" न्यासेऽपि वचनस्यावश्यकत्वादिति बोध्यम्॥

तस्मिन् कार्य्यमिति। (कै)

तस्मिन् परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्य्यमित्यर्थः॥ "कित" इत्युदाहरणभूतात्रय इत्यस्योभयपक्षेऽप्यसिद्धेस्तत्परिहरति

---

१ अ ७। पा ३। सू ७६॥ २ अ ८। पा २। सू ६९॥

अचय इत्यत्रेति ॥ (कै)

यदन्यस्येति । (कै)

प्रत्ययजमित्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव न तु प्रत्ययस्थानिकमित्यर्थादिति भावः ॥ युक्त्यन्तरमप्याह

न हीति । (कै)

षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादिति भावः । अत एव मखनिर्भिन्न इत्यादावेत्वादिकं न । एवमस्रतः सप्तापि न वचनेन शक्येति बोध्यम् ॥ परस्मैपदपरत्वादेरङ्गत्वनिमित्तत्वेडित्याद्यर्थे न दोष इत्याह

विशेषण एवेति । (कै)

एवं च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्य्यमिति भावः ॥ ननु आर्द्धधातुक इत्यादीनां विषयसप्तमीत्वात् पूर्व्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह

लुकेति । (कै)

एवं च विषयलाभायावश्यं प्रत्ययलक्षणमाश्रयणीयं तच्च "न लुमता तस्मिन्निति" न्यासे न प्राप्नोतीति भावः ॥

लुङ्परे चिणीति । (कै)

लुङ्परार्द्धधातुकविषये इत्यर्थ इति भावः ॥ भाष्ये

तच्चापीति । (भा)

न लुमता तस्मिन्नित्येतदित्यर्थः ॥

लुप्ते प्रत्यये यदङ्गमिति । (कै)

लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्य्यमित्यर्थः। अलाम इत्यादौ तु परस्मैपदनिमित्ताङ्गसंज्ञकस्य न कार्य्यं किन्तु शिवादिनिमित्ताङ्गसंज्ञकस्येति न दोषः। किं च परस्मैपदग्रहणस्य तल्लाभाभावोपलक्षणत्वादपि न दोषः। अगायीत्यादौ तु न दोषः। लुङ्निमित्ताङ्गत्ववतश्चिणन्तस्य कार्य्याभावादिति बोध्यम्॥ भाष्ये

एवमपीति। (भा)

आङ्गाधिकारप्रतिनिर्देशाभावेऽपीत्यर्थः॥

[1]वचनं कर्त्तव्यमिति। (कै)

सौवर्य्यः सप्तम्यस्तदन्तसप्तम्य इत्येतत्॥

---

# अलोऽन्त्यात्पूर्व उपधा।१।१।६५॥

असन्देहार्थमिति। (कै)

अन्त्यात्पूर्वोऽलित्येव वदेदिति भावः॥ अल्ग्रहणमन्त्यनिर्देश इत्यनयोः सामानाधिकरण्यमनुपपन्नमत आह

अभिधीयतेऽनेनेति। (कै)

अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः। "घञ्जपः पुंसी"ति निर्देशशब्दस्य पुंस्त्वम्॥ प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह

---

१ सर्वशब्दार्थं वचनं कर्त्तव्यमिति॥

पूर्वस्येति॥ (कै)

एकाजिति। (कै)

यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहस्तथापि कदाचिद्विशेषात् सङ्घातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्य्यमिति बोध्यम्॥ ननु संज्ञिवदवधिरपि कस्माज्जातिग्रहणप्राप्तः समुदायो न निषिध्यतेऽत आह

अन्त्येति॥ (कै)

संख्या विवक्ष्यत इति। (कै)

ज्ञापकसिद्धस्याऽसार्वत्रिकत्वादनेका व्यक्तिर्न गृह्यत इति भावः॥ संख्याविवक्षा तूद्देश्यगतत्वादयुक्ता॥

पिबेरदन्तत्वेति। (कै)

अल्समुदायस्य लघुत्वाभावादिति भावः। सूत्रम् उखादौ चरितार्थं कदाचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम्॥

शब्दस्य हीति। (कै)

एकाज्धातुविषयमिदम्। अनेकाचु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम्। एवं चोत्तरखण्ड एवार्थवानिति भावः॥

[1]अव्यक्तानुकरणस्येति। (भा)

अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे सम्पूर्णस्याच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम्। अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः॥ एकाचो नेति निषेधारम्भादित्युक्तम्॥ ननु विकल्पार्थं तदावश्यकमत आह

१ अ ६। पा १ सू ९८॥

[1]नाम्रेडितस्येति। (भा)

अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते इति शेषः॥

भेदेन निर्दिष्टौ इति। (कै)

यद्यप्येकदेशविकृतस्येत्यादौ लोपोऽपि विकारपदेनोच्यते तथापि व्याख्यानादेवाचेदृशार्थावगतिरिति बोध्यम्॥ ननु लोपग्रहणाभावे [2]"घ्वसोरेद्धावभ्यासस्य" इत्युक्ते चकाराभावादन्यवचनाच्च प्रकृता-सम्बन्धे एत्त्वमेवस्यादत आह

तच्च घ्वसोरित्यादि॥ (कै)

ननु चेनानुवृत्तावपि लोपोऽभ्यासस्यैवेत्यत्र नियामकाभावात् पर्य्यायेण त्रयाणामप्येत्त्वलोपौ स्यातामत आह

तच्च व्याख्यानादिति। (कै)

आगन्तूनामन्ते निवेशनाभ्यासस्य लोपसंनिहितत्वादिति भावः॥ नन्वभ्यासपदोत्तरस्थकारः स्थान्यन्तरमेव समुच्चिनुयाद् न विधेया-न्तरमिति एत्त्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह

योगविभागो वेति॥ (कै)

तत्रेति। (कै)

सत्येत्त्वमित्यर्थः। योगविभागसामर्थ्यादितिभावः॥

सर्वापहारेति। (कै)

लोप एव नावशेषः कस्यचिदित्यर्थादितिभावः॥ ननु लोपग्-

---

१ अ ६। पा १। सू ९९॥ २ अ ६। पा ४। सू ११९॥

शब्दस्य संज्ञात्वेनाऽनर्थक्यात्तुरेव न स्याद् उत्पत्तौ वा हल्ङ्यादिलोपाद् द्विशकारक इत्यनुपपन्नमत आह

लोपशब्दादिति । (कै)

पदस्य संयोगान्तत्वाभावादसंदेहाय च [1]"झलां जश्" इत्यत्र जश्त्ववत् संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम् ॥

इत्संज्ञेति । (कै)

धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां [2]"हलन्त्यम्" इतीत्संज्ञायामपि न दोषः । शस्य स्वरूपेणार्थवत्तया प्रातिपदिकत्वात् कुण्डिनच इव । उपदेश इति तु तत्र नानुवर्त्तते इति तत्र भाष्ये स्पष्टम् ॥

उपदेश एवेति । (कै)

अन्तरङ्गत्वादितिभावः । एतेन लोपविधानकाले शित्त्वाभावात् कथं सर्वादेश इत्यपास्तम् ॥

कार्य्यन्त्विति । (कै)

[3]"अनेकाल् शित्" इत्यादौ समीपे ऽप्यवयवत्वारोपेण न दोष इति भावः ॥ [4]"एकान्ता अनुबन्धा" इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम् ॥ भाष्ये

अन्यथा व्याख्यायत इति । (भा)

न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भ्रमितव्यमितिभावः ॥

---

१ अ ८ । पा ४ । सू ५३ ॥ २ अ १ । पा ३ । सू ३ ॥
३ अ १ । पा १ । सू ५५ ॥ ४ परिभाषेन्दु — ५ ॥

इत्यन्त्यस्येति । (भा)

एवं च तेन इलोपे आभ्यामित्यसिद्धिरितिभावः ॥ ननु मुस्थानिकत्यदाद्यत्वेन व्यवधानान्नाऽनो हलादिविभक्तिपरतेत्यत आह

येननेति । (कै)

आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम् । इदमिदो लोप इत्यर्थेऽप्यावश्यकम् । एवं च नलोपे द्वयोरकारयोः पररूपे [1]"सुपि चे"ति दीर्घे सिद्धमाभ्यामिति ॥

अत्र ग्रहणादिति । (कै)

अत्र शब्देन पुनः सनः परामर्शात् सनि योऽभ्यासत्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः ॥ भाष्ये

विषयमपेक्षिष्यामह इति । (भा)

यत्र मुचोऽकर्मकस्य गुणस्तत्राऽभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु मुमुचते वत्सः स्वयमेवेत्यत्रापि स्यादिति भावः । [2]"विभाषा भवद्" इति वार्त्तिकेऽपि वक्ष्यत्येव सिद्धेऽवस्येत्युच्चारणसामर्थ्याद् [3]"अलोऽन्त्यस्य" इति न प्रवर्त्तते इति प्रत्याख्याता परिभाषा ॥ एवं च [4]"अन्यविज्ञानात् सिद्धम्" इत्यस्य स्थितत्वाद्वार्त्तिके वाशब्दप्रयोगस्तदाह

अथवा व्यक्तमेवेति ॥ (भा)

---

१ अ ७। पा ३। सू १०२ ॥ २ विभाषा भवद्भगवदघवतामोच्चावस्य ॥
३ अ १। पा १। सू ५२ ॥ ४ अत्रैव भाष्ये ॥

( तस्मिन्नितिनिर्दिष्टे पूर्वस्य । १। १। ६६ । ) ( अ. १। पा. १। आ. ६ )
( तस्मादित्युत्तरस्य । १। १। ६७ । )

एतच्चेति । (कै)

अवधिनाऽवधिमतो निर्णयं ब्रूवतेत्यर्थः ॥ संयोगोपधेत्यादिव्यवहारस्तु गौणा इति भावः ॥

षष्ठीप्रथमयोरपीति । (कै)

दृष्टान्ते "अमीषां ब्राह्मणानाम्" इत्युपाददता भगवता सूचितमिदम् ॥

उक्तान्न्यायादिति । (कै)

भाष्योक्तादित्यर्थः ॥

जातौ बहुवचनमिति । (कै)

भाष्यकृता[१] "जात्याख्यायाम्" इति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥

---

# तस्मिन्निनतिनिर्दिष्टे पूर्वस्य । १ । १ । ६६ ॥
# तस्मादित्युत्तरस्य । १ । १ । ६७ ॥

स्वरूपपदार्थकत्वेनेति । (कै)

स्वरूपस्य तत्र विशेष्यत्वादिति भावः ॥

---

१ अ १ । पा २ । सू ५८ ॥

## प्रश्न इति। (कै)

[१]"तस्मिन्नणि च" इत्यत्रैवोतान्यत्रापीति प्रश्न इति भावः॥

## तत्रैव पूर्वेति। (कै)

ननु [२]"तस्मान्नुडचि" [३]"तस्मान्नुड्द्विहलः" [४]"तस्माच्छसः" इति सूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न। यतो द्विहलो नुड्विधायके नास्योपयोगः। तत्राङ्गाधिकारेण लिङ्गिमित्ताङ्गसम्बन्धिदीर्घात् पूर्वस्य प्रत्यासत्त्या तदङ्गसम्बन्धिनोऽसम्भवेन फलाभावात्। एवं "तस्मान्नुडची"त्यत्रापि न दोषः। उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानादिति भावः॥

## तस्मिन्निति। (कै)

परामृष्टखञव्यवधानाय सम्बुध्यन्तमुदाहरति।

## यौष्माकीणेति॥ (कै)

## षकारस्येति। (कै)

"तस्माद्" इत्येतत् साहचर्या"च्छस" इति पञ्चमी ग्रसा च सामानाधिकरण्यं ग्रसवयवे लक्षणयैवेति भावः॥ मुख्यार्थे सामानाधिकरण्यात् सम्भवात् स्थान्याकाङ्क्षासत्त्वाच्च अवयवषष्ठीत्याशङ्कते

---

१ अ ४। पा ३। सू २॥ २ अ ६। पा ३। सू ७४॥
३ अ ७। पा ४। सू ७१॥ ४ अ ६। पा १। सू १०३॥

## अथेति । (कै)

[१]"अथ इति स्थानषष्ठीत्य" पाठः । "इति षष्ठी"त्येव पाठः ॥
[२]"आन्" इत्यशब्दस्य शसि रूपम् ॥

## इति करणादिति । (कै)

लोकेऽर्थप्रधानस्य पदार्थविपर्य्यासकेतिना शब्दप्रधानत्वदर्शना-दितिभावः ॥ नन्वेकार्थप्रत्ययद्वयोपादानं व्यर्थमत आह

## थालेति । (कै)

एवं च शब्देनेत्यनेन सामानाधिकरण्यानुपपत्तिर्जातीयस्तु तद्वति स्वभावादितिभावः ॥ नन्वेवं जातीय एव प्रयुज्यतां किं थालेत्यत आह

## लौकिके इति । (कै)

उभयोः प्रकारवद्वृत्तित्वेऽप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा । अत एव कस्य प्रयोग इति चिन्त्यम् ॥ ननु दूषितस्यैव कथमुदा-हरणत्वेन दानमत आह

## सिद्धान्तेति ॥ (कै)

## अर्थनिर्देशार्थ एवेति । (कै)

अन्यथा तस्मिन्निति शब्देऽव्यवहिते इत्यर्थः स्यादितिभावः ॥

## नैतदनुकरणमिति । (कै)

प्रागुक्तयुक्तेरितिभावः ॥

---

१ अत्रैव कैयटे ॥ २ आनुपलभत इत्यादौ ॥

## [१]सर्वनाम्नेति । (कै)

सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थः । सप्तमी तस्य सप्तम्यन्तार्थकत्वबोधनायानुवादिकेति भावः ॥ इति शब्दलभ्यमर्थमाह

## यत्र सप्तम्यर्थेति । (कै)

सप्तम्यर्थबोध इत्याद्यर्थः । अत एव [२]"तस्मान्नुडचो"त्यादौ न प्रवृत्तिः । अचोत्यस्य षष्ठ्यर्थत्वादितिभावः । सप्तमीपञ्चम्यर्थाविधिकरणावधी । अयं पदोपस्थितिपक्षेऽर्थो दर्शितः पक्षान्तरेऽपि सप्तम्यन्तार्थेऽव्यवहिते सतीत्यर्थो बोध्यः ॥ भाष्ये

## [३]सामान्यवाचीति । (भा)

बुद्धिस्थत्वेनैव तदादीनां बोधकतेति भावः । सामान्यमनिर्द्धारित

---

१ सर्वनाम्नाऽयं निर्देशः क्रियते ॥ २ अ ६ । पा ३ । सू ७४ ॥

३ सर्वनाम च सामान्यवाची । तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति । किं पुनः सामान्यं को* वा विशेषः । गौः सामान्यं कृष्णो विशेषः । न तर्हीदानीं कृष्णः सामान्यं भवति गौर्विशेषो भवति । भवति च । यदि तर्हि सामान्यमपि विशेषो विशेषोऽपि सामान्यं सामान्यविशेषौ न प्रकल्पेते । प्रकल्पेते च । कथम् । विवक्षातः । यदास्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन तदा गौः सामान्यं कृष्णो विशेषः । यदा कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन विवक्षितस्तदा कृष्णः सामान्यं गौर्विशेषः ॥

---

* "वा" इति नास्ति सम्पुस्तके ॥

विशेषम् । [१]"तस्मिन्नणि च" इत्यादेरपि सप्तमी पञ्चमीविशेषणत्वादित्याशयः ॥

## सामान्यस्य । (कै)

उक्तबुद्धिस्थत्वस्य ॥

## सर्वविशेषेषु भावात् । (कै)

सत्त्वादित्यर्थः ॥ उक्तमर्थमजानानस्य चोद्यमित्यभिप्रायेणाह

## सामान्येति । (कै)

"तस्मिन्निती"त्यस्य [१]"तस्मिन्नणि च" इत्यादिः कथं विशेषस्तस्यापि स्वन्नादिनिरूपित सामान्यत्वादिति अचि इत्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम् ॥ ननु कथमनवस्थितिः पूर्वावगतं सामान्यं पश्चादवगतो विशेष इति व्यवस्थासम्भवादाह

## कदाचिदिति । (कै)

परिच्छेद्यपरिच्छेदकभावोऽनियत इत्यर्थः । एवं प्रकृतेऽप्यचीत्यादीनां बुद्धिस्थत्वेन परिच्छेदाद् बुद्धिस्थस्यापि तैः परिच्छेदादनिर्णय इति भावः ॥

## विशेष्यं प्रधानमिति । (कै)

परिच्छेद्यमित्यर्थः ॥

---

१—२ अ ४ । पा ३ । सू २ ॥

परोपकारितया। (कै)

परिच्छेदकत्वेन ॥ एवं प्रकृतेऽपि तस्मिन्नित्यर्थस्य परिच्छेद्यत्वेन विवक्षणात् सामान्यत्वमचीत्यादीनां परिच्छेदकत्वविवक्षणाद्विशेषत्वमिति भावस्तदाह

इहापीति। (कै)

अयं भावः। सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयादचीत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति ॥ तदेवं पर्य्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविधया कृतं प्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह भाष्ये

[१]पितेत्यादि। (भा)

यथा "पराशरात्मजं वन्दे शुकतातं तपो निधिम्" इत्यत्र तथा राजपुरुषाश्व इत्यत्र पुरुषो राजापेक्षया विशेष्यः अश्वापेक्षया विशेषणम्। एवं प्रकृते खञादिनिरूपितसामान्यस्यापि "तस्मिन्नणि च" इत्यस्य "तस्मिन्नित्ये"तत्प्रतिविशेषत्वमिति भावः ॥

इत्याहेति। (कै)

इत्यत आह इत्यर्थः ॥

निर्देशप्रयोजनानामिति। (कै)

---

१ अपर आह प्रकल्प्येते च। कथम्। पितापुत्रवत्। तद्यथा। स एव कं चित् प्रति पिता भवति कं चित् प्रति पुत्रो भवति। एवमिहापि स एव कं चित् प्रति सामान्यं कं चित् प्रति विशेषः ॥

( तस्मिन्निति निर्दिष्टे पूर्वस्य । १। १। ६६ । ) ( अ. १। पा. १। आ. ६ )
( तस्मादित्युत्तरस्य । १। १। ६७ । )

बोधप्रयोजनकानां शब्दानां मध्ये इत्यर्थः ॥ [1]द्विवचनविभज्योपपदत्वाभावादाह

भाष्यकारेति । (कै)

परेतु नैर्देशिकानां मध्येऽन्येभ्यः शब्देभ्यः इत्यध्याहृत्य विभज्योपपदे तरप् । अत एव "न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यमि"ति तत्सूत्रस्थभाष्येणाविरोध इत्याहुः ॥

सप्तमीशब्देनेति । (कै)

तथा च "[2]सप्तम्यां जनेर्ड" इत्यादावेवेदमुपतिष्ठतेति भावः । किं च यत्र सप्तम्यन्तनिर्देश इत्यर्थे "[3]नेड्वशि कृति" इत्यादौ दोषः । तत्र "कृती"ति सप्तमीनिर्देशसत्त्वात् परन्तु षष्ठ्यर्थे स इति भावः । सप्तमीनिर्दिष्ट इति सूत्रकरणेऽपि तदर्थं ज्यादिनिर्देश इत्यर्थे स एव दोषः । यथाश्रुतमेव कस्मान्न गृह्यते इत्यत आह

न पुनरिति । (कै)

अत एव किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येतेति मोक्तम् ॥

अन्तरेणापीति । (कै)

साकाङ्क्षतयोच्चारिते इति पदाध्याहारादिति भावः ॥

---

१ अ ५ । पा ३ । सू ५७ ॥ २ अ ३ । पा २ । सू ९७ ॥
३ अ ७ । पा २ । सू ८ ॥

## पुनर्निर्दिष्टेति। (कै)

एवं च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः। बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन तस्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यते इति भावः॥ ननु प्रत्ययस्यार्थेन पौर्वापर्य्यासम्भवात् कथं जनपदे इत्यत्रास्योपस्थानमत आह

## तत्रायमर्थः स्यादिति। (कै)

लक्षणा स्यादिति भावः॥

## अर्थेन पौर्वेति। (कै)

तद्वाचकशब्दलक्षणायां च न मानमिति भावः। अत्रार्थनिर्देशे च व्याख्यानमेव शरणम्। एवं च "अथ किमर्थम्" इत्यादिपूर्वपक्षसिद्धान्तावेकदेशिनोरिति बोध्यम्। किं चार्थनिर्देशे जनपदे यः प्रत्यय इत्यन्वयेऽनियमप्रसङ्गाभावान्नियमफलाय परिभाषा नोपतिष्ठते इत्यपि बोध्यम्॥ भाष्ये

## आनन्तर्य्यमात्रे इति। (भा)

न तु व्यवधाने इत्यर्थः॥

## ननु संहितायामिति। (कै)

निमित्तस्थानिनोरन्येनाव्यवधानं संहितेति भावः॥

## उपश्लिष्ट इति। (कै)

उपसमीपे श्लिष्टोऽत्यन्तसमीप इति हि तदर्थः॥

## नैष दोष इति । (कै)

वर्णशून्यकालाभावः संहितेति भावः ॥

## सत् सप्तमीति । (कै)

औपश्लेषिकाधिकरणत्वस्य व्यवहिते बाधात् सत्ता तु व्यवहितेऽपीति भावः। एवं च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्य्यग्राहकमिति तात्पर्य्यम् । वस्तुत औपश्लेषोऽप्यल्पव्यवहितेऽस्त्येव। किंचिद्दूरस्थितेऽपि वृक्षमूले तिष्ठतीति कटव्यवधानेऽपि भूमौ शेत इति च व्यवहारात् ॥ ननुव्यवहिते इकोऽचः पूर्वत्वाभावेनाप्राप्तेर्निर्दिष्टग्रहणं व्यर्थमत आह

## व्यवहितेऽपीति । (कै)

मथुरायाः पूर्वं पाटलिपुत्रमित्यादिव्यवहारादिति भावः ॥

## यत्र विषय इति । (कै)

लक्ष्यभेदेन लक्षणभेद इति भावः। वस्तुतः संहिताधिकारो न कर्त्तव्य इत्यभिप्रायकमिदं भाष्यं संहिताधिकारप्रत्याख्यानं च तत् सूत्रे भाष्ये स्पष्टम् ॥ "किमुदाहरणम्" इत्यादिना सूत्रप्रयोजनस्योक्तत्वात् प्रश्नानुपपत्तिरत आह

## किं नियमार्थमित्यादि ॥ (कै)

ननु पूर्वोत्तरयोर्योगयोरिति भाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात् सापेक्षस्यासमर्थत्वेन योगाविशेष इति समासो न स्यादत आह

**कर्मणि षष्ठीति । (कै)**

क्रियायाः कारकांशे नित्यसापेक्षत्वेनाविरुद्धः समास इति भावः । पूर्वोत्तरयोर्योगयोरिति तु फलितार्थकथनम् ॥

**अच्युपश्लिष्टस्येति । (कै)**

औपश्लेषिकेऽधिकरणे सप्तमीति भावः । आद्यसूत्रोदाहरणं दध्युदेति द्वितीयसूत्रोदाहरणं पचत्योदेति ॥ ननु नियमपक्षात् षष्ठीप्रकृप्तिपक्षः प्रशस्तोऽनुवाददोषाभावादत आह

**तत्र षष्ठीति ॥ (कै)**

भाष्ये "योगयोः" इति द्विवचनोपपत्तये आह

**कर्मणीति । (कै)**

युज्यमानयोः पूर्वपरयोरविशेषात् सम्बन्धाविशेषादित्यर्थः । वस्तुतस्तु व्यधिकरणे षष्ठ्यौ प्रतियोगित्वेन सम्बन्धित्वाच्च द्विवचननिर्देश इति बोध्यम् ॥

**सत्सप्तमीपक्षेऽपीति । (कै)**

"[1]यस्य च भावेन" इति सप्तमीति भावः ॥ इदं चिन्त्यमित्याह

**[2]उपपदविभक्तेरिति । (कै)**

कारकविभक्तित्वं च कारकाधिकारपठितसंज्ञानिमित्तक-

---

१ अ २ । पा ३ । सू ३७ ॥

२ उपपदविभक्तेः कारकविभक्तिर्बलीयसी । परिभाषेन्दुशे—१०२ ॥

विभक्तित्वम् । एतच्च[1] "तत्र च दीयते" इति सूत्रे कैयटे स्पष्टम् ॥

न तु [2]दिग्योगेति । (कै)

सप्तम्या अप्युपलक्षणमिदम् । एतच्च[3] "आम्लोप" इत्यत्र निरूपयिष्यामः ॥ पर्यायस्यैवाऽऽपादने बीजमाह

न हि युगपदिति । (कै)

स्थानित्वेन कार्यित्वेन प्राधान्यं निवर्त्यत्वं च । निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वं च तच्चोभयमेकदा एकस्य विरुद्धमिति भावः ॥ ननु "[4]सन्देहः" इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्या-भात्यत आह

[5]सन्देहस्त्विति ॥ (कै)

ननु कार्य्यकालत्वात् परिभाषयोः पौर्वापर्य्याभावात् कथं विप्रतिषेधोऽत आह

---

१ तत्र च दीयते कार्य्यं भववत् । ५ । १ । ९६ ॥

२ अ २ । पा ३ । सू २९ ॥ ३ अ ६ । पा ४ । सू २३ ॥

४ अचि पूर्वस्य अचि परस्येति सन्देहः । भा ॥

५ उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायादधिकरणे सप्तमी कृता न तु दिग्योगलक्षणा पंचमी तत्र दध्युदकम् इत्यादौ पर्य्याय-प्रसङ्गः । न हि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनं पूर्वस्यैवाऽनन्तरस्यैव भवतीति स्वयं चानेन क्रियते परनिवृत्तिर्व्यवहितनिवृत्तिश्च सन्देहस्तूपक्रममात्रतयोपन्यस्तः । न हि सन्देहादलक्षणमिति न्यायात् पर्य्यायप्रसङ्गात् ॥

सूत्रपाठेति। (कै)

अत एवाग्रे "[1]ङमो ह्रस्वाद्" इति चैपादिकमुदाहरणं संगच्छते। तत्र हि कार्य्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम्॥

विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति। (भा)

इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम्। अत एव "[2]ङ: सि धुट्" इत्यत्र द्वयोरनवकाशत्वेऽपि न क्षतिः॥ भाष्ये

वक्ष्यति तास्यादिभ्य इति। (भा)

"[3]तास्यनुदात्तेद्" इति सूत्रे "[4]अभ्यस्तसिजर्थ इति" "[5]अभ्यस्तानामादिः" "[6]आदि सिच" इति सूत्रयोः "लसार्व-धातुक" इति सप्तम्यन्तानुवृत्तिसिद्धये इत्यर्थः॥ ननु भाष्ये "सर्वनामस्थानस्य" "[7]गोत" इति षष्ठीदर्शनात् "णिद्" इत्य-नेनान्वयो न स्यादत आह

---

१। अ ८। पा ३। सू ३२॥ २ अ ८। पा ३। सू २९॥

३ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्निङोः। ६। १। १८६॥

४ वक्ष्यति तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थ इति। भा॥

५ अ ६। पा १। सू १८९॥

६ आदिः सिचोऽन्यतरस्याम्। ६। १। १८७।

७ गोतो णित् (७। १। ९०) गोतः परस्य सर्वनामस्थानस्य सर्वनाम-स्थाने परतो गोत इति सन्देहः। गोतः परस्य सर्वनामस्थानस्य॥

## णित्त्वमिति। (कै)

भावप्रधानो निर्देश इति भावः॥ गोतो णित्त्वे को दोष-

इत्याह

## [1]तिष्ठतीत्यादि॥ (कै)

## पदस्य चैकेति। (कै)

व्यक्तिपक्ष इदम्। व्यक्तिपक्षेऽप्येवं विधप्रयोगसाधनायैवं व्याख्यानमिति भावः। यद्वाऽन्तशब्दस्यावयववाचित्वेनेदृशविषये जातिग्रहणासम्भव एवेत्याहुः॥ "[2]ङः सि धुट्" इत्यादौ उभयोरप्यनवकाशत्वादाह

## पूर्वोपात्तेष्विति। (कै)

"[3]बहोरि"ति पञ्चमी अचरितार्थाऽत एवेष्ठादिषु षष्ठी। अत एव "[4]भूच बहोः" इति पृथग्निर्देशश्चरितार्थः। "गोत" इत्यादौ सर्वनामस्थाने इति सप्तमी पूर्वत्र चरितार्था गोशब्दस्य णित्त्वे वैयर्थ्यं च। तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः। "[5]रुदादिभ्यः सार्वधातुक" इति "[6]लिङः स लोप" इत्यादौ चरितार्थम्। तत्र हि सार्वधातुके विद्यमानस्य सस्य

---

१ यदि गोशब्दस्य णित्त्वं स्यात्तदा तिष्ठति गौरित्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात्॥

२ अ ८। पा ३। सू २९।

३-४ बहोर्लोपो भू च बहोः। ६। ४। १५८॥

५ अ ७। पा २। सू ७६॥ ६ अ ७। पा २। सू ७९॥

लोप इत्यर्थः। "[१]आमि सर्वनाम्न" इत्यामीति "[२]चेलश" इत्यच सावकाशम्। "[३]कम" इति सूत्रेऽपीति "[४]मय उञ" इति सूत्रे चरितार्थम्॥ भाष्ये "[५]पञ्चमीनिर्देशो भविष्यति" इत्यस्य वचनात् स्वार्थे एव भविष्यतीत्यर्थः। सप्तमी तु षष्ठ्यर्थे इति भावः॥ भाष्ये एकदेशी प्रौक्ष्याह

[६]यथार्थं वेति॥ (भा)

तत्रार्थशब्दो न प्रयोजनादिवाचीत्याह

यथाविषयमिति॥ (कै)

प्रदेशेष्विति। (कै)

प्रागुक्तेष्वित्यर्थः॥ भाष्ये

[७]पूर्वस्य षष्ठीति। (कै)

---

१ अ ७। पा १। सू ५२॥ २ अ ७। पा १। सू ५३॥

३ अ ८। पा ३। सू ३२। ४ अ ८। पा ३। सू ३३॥

५ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः। वा। विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोऽयं विप्रतिषेधः। सर्वत्रैवात्र* कृतसामर्थ्या सप्तम्यकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति। भा॥

६ यथार्थं वा षष्ठीनिर्देशः। वा। यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः॥

७ यत्र पूर्वस्य कार्य्यमिष्यते तत्र पूर्वस्य षष्ठी कर्त्तव्या। यत्र परस्य कार्य्यमिष्यते तत्र परस्य षष्ठी कर्त्तव्या॥

---

* क्वचिद् भाष्यपुस्तके "अत्र" इति नास्ति॥

पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्य्यमित्यर्थः । एवं चोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् ॥ तत्र तत्र सप्तम्यन्त-षष्ठ्यन्तयोर्द्वयोः पाठे गौरवं मत्वेतर एकदेशी आह

[1]स तर्हीति ॥ (भा)

एकदेशी प्रौढ्यैवाह

न कर्त्तव्यः ॥ (भा)

अनेनैवेति । (भा)

षष्ठीपदानुवृत्तिगौरवादयमेकदेशी । उभयोः प्रकल्पकत्व-वारणाय परत्वानवकाशत्वे चावश्यके इति च ॥

निर्दिष्टे पूर्वस्य षष्ठीति । (भा)

पूर्वस्य कार्य्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवती-त्यर्थः । एवमुत्तरस्येति ॥

न ह्यीति । (कै)

आवृत्तिप्रसङ्गादिति भावः ॥ इतर एकदेशी "उपदेश" इति "[2]इत्सञ्ज्ञम्" इत्यत्रानुवर्त्तते इति मत्वाऽऽह

---

१ स तर्हि तथा निर्देशः कर्त्तव्यः । न कर्त्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति । तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी । तस्मादित्युत्तरस्य षष्ठी । तत्तर्हि षष्ठीग्रहणं कर्त्तव्यम् । न कर्त्तव्यम् । प्रकृतमनुवर्त्तते । क्व प्रकृतम् । षष्ठी स्थाने योगा ( १ । १ । ४९ ) इति ॥

२ अ १ । पा ३ । सू २ ॥

[1]इत् संज्ञेति ॥ (भा)

तद्व्याचष्टे

[2]उपदेशाभावादिति । (कै)

"[3]स्थानेऽन्तरतम" परिभाषयाऽनुमीयमानत्वेनादेशस्योच्चारणाभावादित्यर्थः॥ ननु स्थानिन्येव तस्याः प्रवृत्तेरनुमीयमानादेशो निरनुबन्धक एवेत्यत आह

[4]स्थानी चेति । (कै)

यदा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञादिप्रतीच्यते। यच्च कार्य्यं तच्चेत्संज्ञेति प्रयोग एवेत्यभिमानः। एकादेशशुक्लत्वादिव नात्यन्तं निर्भरः कार्य्य इति बोध्यम् ॥

---

१ अत्र भाष्यम् । "प्रकल्पकमिति चेन्नियमाभावः। वा। प्रकल्पकमिति चेन्नियमस्याभावः। उक्तं चैतन्नियमार्थोऽयमारम्भ इति। प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः। तत्र को दोषः। गुप्तिज्किद्भ्यः सन् (३ । १ । ५) गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत्तस्मादित्युत्तरस्येति। अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते तत्रान्तर्यतः सनः सन्नेव भविष्यति। नैवं शक्यम्। *इत्संज्ञा न प्रकल्पेत उपदेश इतीत्संज्ञोच्यते ॥

२ आदेशस्योपदेशाभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः॥

३ अ १। पा १। सू ५० ॥

४ स्थानी चोत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति ॥

---

* "तत्र" इत्यधिकम् दाक्षिणात्यीयभाष्यपुस्तके ॥

## ततश्चेति । (कै)

पूर्वस्य जायमानो यद्यपि पूर्व एवेति तचापि षष्ठीकल्पनमिति भावः ॥

## विरोधाभावादिति । (कै)

स्थानिभेदादित्यर्थः । अत एव विप्रतिषेधाप्रवृत्तिः । यद्यपि कार्य्यित्वनिमित्तत्वे युगपद्विरुद्धे तथाप्येकदेशयुक्तित्वान्नात्यन्तं निर्भरः कार्य इति बोध्यम् । एवमग्रेऽपि बोध्यम् ॥

## यच त्वस्तीति । (कै)

"तस्मिन्निति" इत्यस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् क्वचित् पूर्वस्य षष्ठीति विधिपरं क्वचिन्नियमार्थमित्यर्थः ॥

## सूत्र एवेति । (कै)

षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्चोपदेशोत्तरकाले सूत्र एवेत्संज्ञा कार्य्यन्तु प्रयोग एवेति भावः । एवं च निरनुबन्धस्यैव प्रत्ययेन विधानात्तदादेशस्य कुतस्सानुबन्धकतेतितात्पर्य्यम् ॥ भाष्ये

## उपदेश इति ह्येत्संज्ञोच्यते इति । (भा)

एवं च तदुक्तिर्व्याहतेतिभावः ॥ "हलन्त्य" सूत्रे उपदेशपदाऽसम्बन्ध एवेति तत्सूत्रे वक्ष्यमाणपक्षेऽप्याह

## अथ वेति ॥ (भा)

## परत्वविशिष्टस्येति । (कै)

अनुत्पत्तौ धातोः परस्य इति वक्तुमशक्यत्वादितिभावः ॥

## उपश्लेषादिति । (कै)

पञ्चम्या इति शेषः ॥

## प्रवृत्त्यन्तराभावादिति । (कै)

पुनः प्रवृत्तौ मानाभावादितिभावः ॥

## अपेक्षाया इति । (कै)

अनयोः सम्बन्धाभावे हि तस्मिन्नित्यनेन षष्ठीप्रक्लृप्त्यपेक्षा न च प्रकृते तथा लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यर्थः ॥ भाष्ये

## अथवाऽस्तु तावदिति । (भा)

प्रथमाषष्ठीनिर्देशसामर्थ्यात् प्रथमत इग्यणोः स्थान्यादेशभावोऽस्तु तत एतत्सूत्रबलाद्यणः स्थानित्वेऽपि न क्षतिरित्यर्थः ॥ भाष्ये

## यच्च नाम सौत्री षष्ठी यदि चेदानीमिति । (भा)

यच्च सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्हि अस्तु प्रकल्पयत्वित्यर्थः । परं त्विदं प्रौढ्या [4]"अथवा नानुत्पन्ने सनि" इति प्रागुक्तन्यायाद् [5]"गाङ्कुटादिभ्य" इत्यादौ षष्ठीप्रक्लृप्तावपि न दोषः । ङित्पदस्य धर्मपरत्वादिति बोध्यम् ॥ यद्यपि युगपत्प्रक्लृप्ति-विरोधाच्च सम्भवति तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति

---

४ अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यं यदा चोत्पन्नः सन् तदाकृत-सामार्थ्या पञ्चमीतिकृत्वा प्रक्लृप्तिर्न भविष्यति । भा ॥

५ अ १ । पा २ । सू १ ॥

( तस्मिन्निति निर्दिष्टे पूर्वस्य । १। १। ६६ । ) ( अ. १। पा. १। आ. ९ )
( तस्मादित्युत्तरस्य । १। १। ६७ )

[1]नोभे (भा)

इत्यादिना ॥

तथैव प्रकॢप्तिरिति । (कै)

अवर्णादचि अवर्णस्याचश्चैको गुणो भवतीत्यर्थः इति भावः ॥ ननूभयोः प्रकल्पकत्वाभावेऽपि कस्य प्रकल्पकत्वमत आह

तत्र परत्वेति । (कै)

[2]"ङः सि धुट्" इत्यादौ परत्वमुभयोस्त्वनवकाशत्वमिति भावः । ननु [3]"दीर्घात्" इति सूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च षष्ठीप्रकल्पनं स्यादत आह

दीर्घाच्छे इति । (कै)

[4]"सुराच्छाये"ति पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोपन्यासः । युक्तश्च तथा-पाठः । वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् ॥

---

१ यदप्युच्यते सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्य्यप्रसङ्ग इति । नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति नोभे युगपत्प्रकल्पिके भवत इति । यदयमेकः पूर्वपरयोः ( ६ । १ । ८४ ) इति पूर्वपरग्रहणं करोति । भा ॥

२ अ ८ । पा ३ । सू २९ ॥ ३ अ ६ । पा १ । सू ७५ ॥

४ विभाषा सेनासुराच्छायाशालानिशानाम् । २ । ४ । २५ ॥

# स्वंरूपं शब्दस्याशब्दसंज्ञा । १ । १ । ६८ ॥

[१]स्वरूपस्येति । (कै)

शब्देनार्थप्रतीतावर्थे तेषां चित्कार्य्याणामसम्भवात्तद्वाचकशब्द-मात्रग्रहणादितिभावः ॥

[२]अन्येत्विति । (कै)

शब्दस्य रूपमिह शास्त्रेन विधित्सितमिति नेह प्रदेशविशेषा-समर्पकं लिङ्गमस्तीतिभावः ॥ ननु शब्दस्य इत्येव लिङ्गं यत्र शब्द-ग्रहणं तत्र स्वरूपमेव ग्राह्यं न तु पर्य्यायादीत्यर्थः । तेन जनपदे अपत्यम् इत्यादौ नास्याप्रवृत्तिरत आह

विध्यन्तरेति । (कै)

न हि स्वंरूपम् इत्यस्य [३]"अग्नेर्ढक्" इत्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा सम्बन्धः सम्भवतीति भावः ॥ भाष्यकारोऽप्याह

---

१ स्वरूपस्य पर्य्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परि-भाषेयमिति केचिदाहुः ॥

२ अन्ये तु लिङ्गाभावाद्विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः ॥

३ अ ४ । पा २ । सू ३३ ॥

रूपं शब्दस्य संज्ञा इति (भा)

इत्ययमेव पक्षो युक्तः॥ ननु संज्ञापक्षे उभयगतिन्यायादेकस्यानेकार्थसम्भवात्तदर्थस्य प्रतीतौ तत्र कार्य्यासम्भवे ढगादयः पर्य्यायादिभ्योऽपि दुर्वारा इत्यत आह

देवदत्तादयश्चेति॥ (कै)

नियमार्थत्वमुपपादयति

[१]सर्वार्थेति। (कै)

एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादितिभावः॥

शक्तियुक्त इति। (कै)

शक्त्याश्रय इत्यर्थः॥

सर्वशब्दप्रत्याय्यशक्तिरिति। (कै)

प्रत्याय्यत्वशक्तियुक्त इत्यर्थः॥ अनेन नियमद्वयं दर्शितम्। अनेन शब्देनायमेवार्थो ग्राह्यः। अयमर्थोऽनेनैव शब्देन बोधनीय इतिचेति। वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तत्रास्मदादिज्ञानविषयः। सर्वार्थसर्वशब्दानामस्माकं विशिष्याज्ञानात् किन्तु योगिनामेव तज्ज्ञानम्। एवं च शास्त्राधिकारिणोऽस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्यासम्भव्येव। इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावत्स व्यवहारोपयोगिनी। तस्मात्प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इति बोध्यम्। तत्र द्वितीयो नियमश्चिन्त्यः।

---

१ सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्त एवार्थ इति व्यवहाराय नियमः क्रियते। कै॥

आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित् ॥ ननु रूपरूपिणोश्च भेदाभावाच्छब्दस्येति षष्ठ्यनुपपन्ना संज्ञासंज्ञिसम्बन्धश्चानुपपन्न इत्यत आह

रूपेति ॥ (कै)

सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह

शुकेति । (कै)

न च तच्चोच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम्। ताल्वादिव्यापाररूपोच्चारणस्याश्रौतत्वेन शब्दश्रवणानन्तरं जायमानवक्तृविशेषानुमानानापत्तेः। उदात्तादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः। वर्णनिष्ठतया प्रतीयमानानां ध्वनिनिष्ठत्वकल्पने मानाभावादिति भावः ॥ ननु प्रायेणसामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टं नचेह तदित्यत आह

तत्रेति ॥ (कै)

स्वशब्दो व्यक्तिबोधको आत्मीयत्वेन। एवं च शब्दस्य तत्तज्जातिविशिष्टस्य स्वंव्यक्तिस्तद्रूपसामान्यसंज्ञकमित्याद्यः पक्षः। शब्दस्य [1]स्वंरूपमित्युद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयते इति द्वितीयपक्षसम्भवः सामानाधिकरण्यस्यचोपपत्तिः। [2]नचानयोः फले कश्चिद्विशेष इत्याह

व्यक्तिरिति ॥

---

१ शब्दस्य रूपम् - । क । ग । ङ ॥

२ नचानयोः पक्षयोः - । क । ग । ङ ॥

## व्यक्तिद्वारेणेति । (कै)

सामान्यस्य [1]ढगादिभिस्साचात्पौर्वापर्य्यासम्भवादिति भावः ॥

## रूपग्रहणं किमर्थम् (भा)

इति भाष्यस्य स्वशब्देनैव जातिर्वाच्या व्यक्तिर्वा शब्दस्य स्वं स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति। सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः। "[2]वृद्ध" इत्यादौ व्यभिचारादित्याशयः। शब्दस्य सूच्चोच्चारितस्य स्वं स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् ॥ भाष्ये

## रूपं शब्दस्य संज्ञेति । (भा)

अत्र संज्ञाशब्दो बोध्यपरः। कर्मव्युत्पत्तेः। अन्यथा स्वशब्देनार्थबोधनाय रूपग्रहणमित्युत्तरभाष्यासङ्गतेः। नह्यर्थः शब्दस्य संज्ञा किन्तु बोध्य एवेति बोध्यम् ॥ तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रहः इत्यत आह

## प्रतीताविति ॥ (कै)

"उपदेशः" सम्बन्धग्रहणम् ॥ "अन्तरङ्गत्वं" प्रथमतः श्रोत्रेणोपस्थित्या ॥ "अहेयत्वमु"पपादयति

## अनुकरणेति । (कै)

शब्दमात्रतात्पर्य्यकोच्चारणस्यैवानुकरणत्वात् ॥ अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह

---

[1] ढगादिभिः। क। ह॥ [2] अ १। पा १। सू ७॥

नचार्थ इति । (कै)

शब्दात्मिकानामेवावर्त्तिनीत्वेन संज्ञात्वात् तादृशसंज्ञाव्यवहाराच्चेति भावः॥ ननु [1]स्वशब्दस्याभिधेयमित्येवार्थोऽस्त्वित्यत आह

संज्ञित्वे चेति । (कै)

लोकत एव सिद्धेरिति भावः॥

ज्ञापकमिति । (कै)

स्वशब्देन बहिरङ्गस्याप्यर्थस्य ग्रहणे इत्यर्थः॥ नन्वन्यस्य स्वीयस्य [2]सत्त्वेन तद्व्यावृत्त्यर्थं रूपग्रहणमित्यर्थो भाष्याल्लभ्यते एवं च शास्त्रेऽर्थस्याग्रहणे कथमर्थवत्परिभाषासिद्धिरिति चेन्न। अनत्स्वीयमस्ति यतोऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमिति भाष्याशयात्। एवं चाऽधिकसंग्रहार्थं रूपग्रहणं रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य शब्दबोध्यत्वं बोध्यत इति तात्पर्य्यम्॥ तत्रोभयानुग्रहाय सति सम्भवेऽर्थवतो रूपस्य ग्रहणमसति केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणं तदाह

यत्र चार्थवतेत्यादि । (कै)

अर्थोपस्थापकेन रूपेणत्यर्थः। अत एव भिन्नविभक्तिनिर्द्देशस्वरितार्थः॥

[3]इह योग्यतेति । (कै)

---

१ स्वं। ग। ङ॥ २ सत्त्वे तद्व्यावृत्त्यर्थम्। क। ग। ङ॥
३ "इह योग्येति" इति बालशास्त्र्यादिनमुद्रापितविवरणपुस्तकेऽस्ति तत्तु न सम्यक्॥

योग्यता बोधजनकतारूपा तया लक्ष्यते कल्प्यते इति योग्यतालक्षणः शक्तिः। तस्या उभयाश्रयकत्वेन उभयाधीनत्वलक्षणगुणयोगात् गौण्या वृत्त्या वा सम्बन्धपदव्यवहार्य्यत्वमिति बोध्यम् ॥

इत्यर्थ एवेति । (कै)

अर्थे कार्य्यस्य सम्भवादिति भावः ॥ ननु संज्ञाविधायकस्य तत्प्रतिषेधार्थकत्वमयुक्तमत आह

संप्रत्यय इति । (कै)

भावेऽङिति भावः ॥ नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेऽपि कथं स्वरूपस्यैव ग्रहणमत आह

शब्द इति (कै)

तथाच प्रथमप्रतीतत्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमिति भावः ॥

शब्दपूर्वक (भा)

इत्यस्य शब्दज्ञानपूर्वक इत्यर्थः ॥

प्रत्यासत्त्येति । (कै)

अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थेऽसम्भवे कार्य्यं न तु तत्पर्य्यायादिष्विति भावः। अर्थे कार्य्यासम्भवे तु तस्यैव। एवं चोपस्थितस्यार्थस्य सर्वथा त्यागे मानाभावादर्थवत्परिभाषाऽपि सूत्रं विना सिद्धेति तात्पर्य्यम्। एवं चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहायेति बोध्यम् ॥ ननु अर्थज्ञानोत्तरं

परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह

[1]अस्योपलब्धुरिति। (कै)

श्रोतुरित्यर्थः॥ भाष्ये

शब्दपूर्वको हीति। (भा)

हिः प्रसिद्ध्यर्थः। श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोके प्रसिद्धमित्यर्थः॥ युक्त्यन्तरमप्याह

आतश्चेति। (भा)

एवं च शब्दस्यार्थप्रतीतौ कारणत्वादर्थे कार्य्यासम्भवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्य्यमिति भावः॥ इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्य्यमर्थेऽसम्भव इत्याह

शब्दपूर्वकश्चेति। (भा)

शब्दविशेषणश्चाऽर्थविशेष्यकः प्रत्यय इत्यर्थः। "[2]न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति भावः॥ चकारेण चास्य युक्ततरत्वं सूचितम्॥ भाष्ये

तस्मादर्थनिवृत्तिरिति। (भा)

अर्थवाचकशब्दान्तरनिवृत्तिरित्यर्थः॥ फलान्तरं शङ्कते

इदं तर्हीति॥ (भा)

एवमर्थमिति। (कै)

---

१ अर्थस्योपलब्धेरिति। ग। २ हरिः॥

निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः ॥

## कि प्रत्यय इति । (कै)

न चैवं "[1]पेषं वासवाहनधिषु च" इति धिग्रहणं व्यर्थं स्याद् न हि धाधातोः किं विनोदकस्य ध्युत्तरपदत्वं सम्भवति तत्र हि "[2]कर्मण्यधिकरणे च" इति तदुत्तरसूत्रेण किरिति वाच्यम् । उपलक्षणमिदं "[3]सनिमीमाघु" "[4]नेर्गद" इत्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम् ॥

## कुमारी घ इति । (कै)

नन्वयं षष्ठीतत्पुरुषः कर्मधारयो वोभयथापि नात्र प्राप्तिस्तत्र "स्त्रियां समानाधिकरणे" इत्यनुवृत्तिरिति चेन्न । घोऽस्त्यस्याः सा घा कुमारी घा अस्येति बहुव्रीहौ कुमारी घ इत्यर्थाद् घादिषु ह्रस्वत्वं पुंवद्भावादिप्रतिषेधेनेत्युक्तेः पुंवत्त्वं बाधित्वा ह्रस्वप्राप्तिरेवेत्याशयात् ॥ घुसंज्ञाविधानस्य तर्हि कोऽवकाश इत्यत आह

## [7]ई हलीति । (कै)

घसंज्ञापि "[8]किमेत्तिङव्ययघाद्" इत्यादौ चरितार्था तत्र हि तिङन्तात्पराऽव्ययघान्तप्रातिपदिकाऽसम्भवादिति बोध्यम् ॥

---

३ अ ६ । पा ३ । सू ५८ ॥		४ अ ३ । पा ३ । सू ९३ ॥
५ अ ७ । पा ४ । सू ५४ ॥		६ अ ८ । पा ४ । सू २७ ॥
७ अ ६ । पा ४ । सू ११३ ॥		८ अ ५ । पा ४ । सू ११ ॥

## प्रदेशेष्विति। (कै)

सर्वप्रदेशेष्वित्यर्थः॥ संज्ञावचनसामर्थ्यगम्यप्रकरणात् प्रत्यासत्तिन्यायो बाध्यत इत्यभिप्रायः। न च "ईं इस्वघोः" "क्तिनेत्तिङ-व्ययघा" इत्यत्र तयोस्तारितार्थम्। तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमप्ग्रहणं च कुर्य्यादिति बोध्यम्॥

## उभयगतिरिति। (कै)

संज्ञावचनस्य प्रत्यासत्तेश्चानुग्रहायोभयगतिरिति भावः॥ सूत्रारम्भमभ्युपेत्येदम्।

## [1]षड्भ्य इति। (कै)

भाष्ये संज्ञाशब्दो बोधकपरः। न हि षकारान्तो बोधकशब्दस्तत्रोच्चाचित इत्यर्थ इति भावः॥

## षकारान्तादिति। (कै)

जश्शसोर्लुकः प्राग् जश्त्वाभावात्। एवं च तदर्थं तस्य षट्-संज्ञा विधीयत इति न ज्ञापकत्वमिति भावः॥

## डकारान्त इति। (कै)

षष उत्तरयोर्जश्शसोरिति स्वरूपग्रहणेन लुकि कार्य्ये जश्त्वमसिद्धमिति भावः॥ तथापि संज्ञासूत्रे टान्तोच्चारणात् [2]"षड्भ्य" इत्यादौ डत्वासिद्धत्वेनैव निर्वाहः। संहिता पाठेन डान्तस्य संज्ञात्वे [3]"षट्चतुर्भ्य" इत्यत्र चर्त्वासिद्धत्वमावश्यकमिति तात्पर्य्यम्।

---

१ अ ७। पा १। सू २२॥ २ अ ७। पा १। सू २२॥
३ अ ७। पा १। सू ५५।

[1]"आद्यन्ते"त्यादि ज्ञापकं शास्त्रीयशब्दसंज्ञायाम स्वरूपग्रहणमित्यर्थं बोधयतु न तु शब्दपदार्थके इत्याशयेनाह भाष्ये

मन्त्राद्यर्थमिति । (भा)

शब्दानुविद्धस्यैवेति । (कै)

"नसोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति हर्युक्ते-रितिभावः। तद्बोध्यत्वेन सञ्चरितत्वमित्यन्ये ॥ कार्याभावमुपपादयति

सामान्यशब्देनेति । (कै)

एवं च पदार्थभेदाभावात् साहित्यरूपकार्यासम्भव इति भावः॥

पर्य्युदासे इति । (कै)

कश्चित्तु [2]"अराजेति" च्छेदाभावात् किं च राजशब्दः शब्द-परः मनुष्यशब्दस्त्वार्थपरः इति दुर्लभं स्यात् किं च एवममनुष्य-शब्देनापि मनुष्यपर्य्यायाणामेव ग्रहणं स्यादितीदं वाचनिकमेवे-त्याह ॥ आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह

मृगेति । (कै)

एवं मत्स्याद्यर्थमित्यादिशब्दप्रयोजनं चिन्त्यम् ॥

---

१ अ १। पा १। सू १४ ॥

२ सभा राजामनुष्यपुर्वा (२।४।२३) इत्यत्र । अत्रैव भाष्ये ॥ इन-सभम् ईश्वरसभम् । तस्यैव न भवति । राजसभा । तद्विशेषाणां च न भवति । *पुष्यमित्रसभा ॥

---

* वाणीविलासमुद्रापितभाष्यपुस्तके "पुष्यमित्रसभा । चन्द्रगुप्तसभा" इति पाठोऽस्ति ॥

# अणुदित्सवर्णस्य चाप्रत्ययः । १ । १ । ६९ ॥

[1]किं यद्येति । (कै)

नाक्षेपोऽयं किन्तु विशेषजिज्ञासेत्यर्थः । उत यौगिक इत्यन्वयः । “किमर्थम्” इत्यत्रार्थशब्दोऽभिधेयपर इति तात्पर्य्यम् ॥ नन्विदमः परत्वात् त्यदाद्यत्वेऽन्तरङ्गत्वाच्च पररूपे अर्धह्रतीयमात्रस्य सवर्णग्रहणेऽपि नान्तरतम आदेशः सम्भवतीति प्लुत एव भविष्यति । न च प्लुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव भविष्यतः । ह्रस्वोच्चारणन्तु लाघवार्थं स्यादिति वाच्यम् । एवं तर्हि परत्वाद्धलि-लोपे मात्रिकत्वान्मात्रिक एव भविष्यति तत्र नाप्नोति वर्त्तते फलाभावादत आह

विशेषेति । (कै)

येननाप्राप्तिन्यायादितिभावः । शादीनां चोपदेश एवेत्संज्ञा-लोपयोरण्त्वेन सवर्णग्रहणप्रसक्तिः ॥

[2]अनुनासिक इति । (कै)

पक्षे इति शेषः ॥ नियमार्थं तत्स्यादत आह

१ “अप्रत्यय इति किमर्थम्” इति भाष्यमुपादाय “किं यस्य प्रत्यय-संज्ञाविहिता तस्य प्रतिषेध उत यं प्रतीयते विधीयते इति यौगिक प्रत्ययस्तस्यापीति प्रश्नः” इत्युक्तम् ।

२ नभूव इत्य ।

## ग्रहेरेवेति । (कै)

[1]"वृतो वा" इत्यनेन विरोधादितिभाव इति केचित् । वस्तुतस्तु यथा [2]"दिक्सङ्ख्ये" इति नियमादप्राप्तसमासविधायकं [3]"तद्धितार्थे"ति एवं ग्रहेरेवेति नियमादप्राप्तदीर्घविध्यर्थं "वृतो वा" इति स्यादिति चिन्त्यैषा व्याख्या । तस्माद् विधेयसङ्कोचस्यान्याय्यत्वात् तथा नियम इति भावः ॥

## ववरिथेति । (कै)

[4]"ववर्थ" इति छन्दसि इडभावनिपातनाद्भाषायां [5]"क्रसृभृवृस्तु" इति इट्प्रतिषेधो न । अलिट्येव "वृतो वा" इत्यर्थात् लिटि ह्रस्व एवेतिभावः ॥

## वाग्रहणमिति । (कै)

अत एव भाष्ये [6]"यद् विभाषां शास्ति" इत्युक्तम् ॥ भाष्ये

## [7]भाव्यमानेति । (भा)

---

१ अ ७ । पा २ । सू ३८ ॥ २ अ २ । पा १ । सू ५० ॥

३ अ २ । पा १ । सू ५१ ॥

४ बभूथाततन्थजगृभ्मववर्थेति निगमे । ७ । २ ६४ ॥

५ अ ७ । पा २ । सू १३ ॥

६ यत्तर्हि वृतो वा ( ७ । २ । ३८ ) इति विभाषां शास्ति ॥

७ भाव्यमानेन सवर्णानां ग्रहणं न इत्येवं न भविष्यति । प्रत्यये भूयान् परिहारः । अनभिधानात् प्रत्ययः सवर्णान्न ग्रहीष्यति । यान् हि प्रत्ययः सवर्णान् गृह्णीयाद् न तैरर्थस्याभिधानं स्यात् । अनभिधानान्न भविष्यति इदं तर्हि प्रयोजनम् । इह केचित् प्रतीयन्ते केचित् प्रत्याय्यन्ते । ह्रस्वाः प्रतीयन्ते । दीर्घाः प्रत्याय्यन्ते ॥

इयं च जातिग्रहणप्राप्तं गुणाभेदप्राप्तं चाऽण् साधारण्येन प्राप्तं सवर्णग्रहणं वारयितुमावश्यकीतिभावः॥

साधारणश्चेति। (कै)

"भूयान्" इत्युक्तिर्नापूर्वाऽनेकसमाधानाभिप्राया किन्तु सूत्रोक्ता-प्रत्ययग्रहणमपेक्ष्येति "भूयान्" इति प्रतिज्ञायैकपरिहारोपन्या-सेऽपि न विरोध इति भावः॥ ननु [1]"अस्य च्वौ" इत्यादाविवा-ऽर्थाभिधानासमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह

[2]प्रत्यय इतीति। (कै)

प्रत्ययविधौ सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यम्। तच्चाऽन्वर्थत्वादसम्भवीति न तत्र सवर्णग्रहणमिति भावः॥

[3]उच्चार्यन्त इति। (कै)

उच्चारणं चात्र साक्षाच्छब्देन बोधनं विवक्षितम्। अतो-ऽणादिशब्दप्रतीयमानेकारादिभिः सवर्णानां ग्रहणं सिद्धम्॥

ह्रस्वैर्गृहीतैरिति। (कै)

प्रकृतसूत्रस्थाणपदेनेति शेषः॥ ननु प्रत्याहारसूत्रोपदिष्टा एवाण इति कथमाकारो ग्राहक इत्यत आह

यथैवेति। (कै)

न चाऽऽचारसामान्यार्थिकविषयकः प्रतिषेधः प्रत्याख्यमान-

---

१ अ ७। पा ४। सू ३२॥

२ प्रत्यय इत्यन्वर्था संज्ञाकृता येनार्थं प्रतियन्ति स प्रत्ययः॥

३ प्रतीयन्ते श्रूयन्ते उच्चार्यन्ते अनादिचोदनाखित्यर्थः॥

विषयं तु सवर्णग्रहणमिति वैपरीत्यं किन्न स्यादिति वाच्यम् । तथासत्यको विधीयमानस्य पूर्वसवर्णदीर्घस्य कुमार्य्यावित्यादावप्राप्ते "[१]दीर्घाज्जसि च" इति प्रतिषेधोऽनर्थकः स्यादिति भावः । एवं च वर्णसमाम्नायपठितानामेव ग्राहकत्वबोधनार्थमप्रत्ययपदमिति तात्पर्य्यम् ॥

उभयार्थम् । (कै)

ह्रस्वदीर्घोभयविध्यर्थम् । एवं च यत्नाधिक्यमेवासिद्धमिति भावः ॥

न्याय्य एवेति । (कै)

अनण्त्वादित्ययमित्यर्थः ॥ यदुक्तं तथैवेति तत्राह

[२]अत्र हीति ॥ (कै)

"स्वात्मनि क्रिया" स्वस्मिन् प्रवृत्तिः ॥ विरोधे हेतुमाह

अनिष्पादादिति । (कै)

अर्थावोधादित्यर्थः ॥ नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं बहुविषयपरिभाषार्थः शक्यते प्रतिपादयितुमत आह

[३]प्रतीयत इति ॥ (कै)

---

१ अ ६ । पा १ । सू १०५ ॥

२ अत्र हि सूत्रे प्रत्याहारसन्निविष्टा एव गृह्यन्ते स्वात्मनि क्रियाविरोधादनिष्पादाद्ग्रहणकशास्त्रान्तराभावाच्च अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासम्भवोऽन्येषु प्रदेशेषु अनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्य्याणि लभन्ते ॥

३ प्रतीयते विधीयते इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः ॥

भाष्ये "[1]ज्ञापयति" इत्यस्य योगेन बोधयतीत्यर्थः ॥ "अप्रत्यय" इति च वाक्यभेदेन निषेधार्थमण् इत्यस्य च नात्र सम्बन्धः। तेनोक्तपक्षार्थलाभ इति भावः। वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयतीति भाष्याचरार्थः। "विधीयते" इत्यर्थे "प्रतीयत" इत्यस्य प्रयोगदृष्ट्या कैयटोक्तं चिन्त्यम् ॥

## आकृतीति । (कै)

प्रत्याहारसूत्रेषु "[2]अक्ष चौ" इत्यादिषु चेत्यर्थः ॥ नेयमुदिद्विषया शङ्का चुलादिजातौ मानाभावेन तस्याऽऽवश्यकत्वादित्याशयेनाऽऽह

## उदिदिति ॥ (कै)

## कालादिभिन्नस्येति । (कै)

एकोऽवर्ण उदात्तत्वादिकं ध्वनिगतमिति पक्षेऽपि उपाधिभेदभिन्नत्वाद्ग्रहणं न सिध्यतीति भावः। अनन्ताऽवर्णव्यक्तय इति पक्षे तु अग्रहणं स्पष्टमेवेति बोध्यम् ॥ नन्वेतत्प्रयोजनम् "[3]अक्ष चौ" इत्यादौ वा अणादिप्रत्याहारेषु वा। तत्राद्यं तत्राऽनुवृत्तिनिर्देश इत्यादिना दूषयिष्यति नान्त्य इत्याह

## प्रत्याहारग्रहण इत्यादि ॥ (भा)

"[4]प्रत्याहारग्रहणे सवर्णग्रहणमि"ति वार्त्तिकस्य देशार्थः।

---

१ तज्ज्ञापयत्याचार्य्यो भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति ॥

२-३ अ ७। पा ४। सू ३२ ॥

४ तत्र प्रत्याहारग्रहणे सवर्णग्रहणमनुपदेशात् । का ॥

"[1]अक" इत्यादावीकारादीनामगादिसंज्ञाभिर्ग्रहणं न प्राप्नोत्यनुपदेशादक्षरसमाम्नाये तेषामनुच्चारणादित्यर्थस्तदाह

**यच संज्ञयेति ।** (कै)

एकस्यैव युगपत्प्रत्याय्यप्रत्यायकत्वयोर्विरोधादित्यर्थः ॥

**यच स्वरूपेणेति ।** (कै)

इदं चिन्त्यम् । व्यक्त्यानन्त्येतस्याण्त्वाभावात् । तस्माद्यः स्वरूपेणोच्चार्य्यते "अक" इत्यादावकारादिरिति वक्तुमुचितम् ॥ "प्रत्याहारे" अ इ उण् इत्यादौ ॥ भाष्ये

**यथा जातीयकानामिति ।** (भा

वर्णसमाम्नायपठितानामित्यर्थः ॥

**संज्ञेति ।** (भा)

"[2]आदिरन्त्येन" इति कृतागादिसंज्ञेत्यर्थः ॥ यद्वाऽगादावीकारादिभिर्ह्रस्वैर्दीर्घाणामग्रहणं कुतोऽनुपदेशाद् "अकोऽचि" इत्यादाविकारादीनामनुच्चारणादित्यर्थस्तदाह

**अथवेति ।** (कै)

भाष्यस्वारस्यं लाघव्याख्यायामेव ॥

**उच्चार्य्यमाणैरेवेति ।** (कै)

पुस्तकदर्शनादौ व्यभिचारादित्यर्थः ॥

**सन्निहिता इति ।** (कै)

---

१ अ ६ । पा १ । सू १०१ ॥ २ अ १ । पा १ । सू ७१ ॥

बुद्धिसन्निहिता इत्यर्थः। अयं भावः। शब्दा उपस्थिता बोधं जनयन्ति। उपस्थितिस्तु स्मृतिरूपा प्रत्यक्षरूपा च न लभ्येवेति नियमः। लिपिस्मारितपदैर्बोधानापत्तेरिति॥

सन्निधानमिति। (कै)

प्रतीतिरित्यर्थः। यथायोगमुच्चारणेन संज्ञया वेत्यर्थः॥

प्रतीयमानो हीति। (कै)

यद्यप्युच्चारणे प्रधानमपि अर्थप्रतीतावङ्गभावम्प्रतिपद्यते तथाप्युच्चारणहतायास्तत्प्रतिबिम्बविशिष्टस्फोटाभिव्यक्तेश्चिरस्थायितयोपपद्यते। शब्दज्ञानमात्रस्य तु न तदभिव्यञ्जकत्वम्। वक्ष्यमाणहेतोरिति भावः॥

अन्यस्येति। (कै)

दीर्घादिरूपशब्दस्येत्यर्थः॥ भाष्ये

[१]ह्रस्वसम्प्रत्ययादिति। (भा)

तृतीयातत्पुरुषः॥

स्टगित्युक्ते सम्पाठमात्रं गम्यते। (भा)

एतेनोच्चारितानामेव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तेर्वाचकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेनेदमयुक्तमित्यपास्तम्। मानसजपस्थल इव तत्रापि स्वीयसूक्ष्मोच्चारणाद्बोधेनाक्षतेः।

---

१ ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाण*संप्रत्यायकत्वाच्छब्दस्यावचनम्॥

---

* अत्र "शब्द" इत्यधिकम् बहुषु भाष्यपुस्तकेषु।

जपे हि मन्त्राणां वैस्वर्य्यनियमेन तत्तत्स्थानेषूच्चादिदेशोपलभ्यमानत्वरूपोदात्तत्वादेर्माचाकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभिव्यक्तेः। यद्वा लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वमत एव लिपौ शब्दत्वभ्रमो बालानाम् । यद्वा । लिपावनादेश्शब्दतादात्म्याध्यासाद्बोधकत्वम् । लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामप्यन्तः करणादावात्मत्वप्रत्यये भ्रमत्वं जानतामनादिसिद्धारोपेणैव व्यवहारवद्बोधोऽपि ॥ ननु ऋगित्युक्ते तद्विशेषाप्रतीतेरर्थप्रतीतिसम्भावनाया अप्यभाव ऋक्त्वस्य वेदत्वस्य चार्थप्रतीतिजनकतानवच्छेदकत्वादत आह

## यद्यपीति । (कै)

ऋक्शब्देन विशिष्टसन्निवेशापि ऋक्प्रत्याय्यत इत्यन्वयः। यत्र सङ्केतादिवशादृगित्युक्ते [1]"अग्निमीले पुरोहितम्" इत्याद्यानुपूर्वीप्रकारेण बोधस्तत्रापि सा स्वार्थं बोधनादिक्रियाकर्मत्वेन न प्रत्याययतीतिभावः ॥

## प्रत्यायनमिति । (कै)

तच्चैतत्सूत्रेणैवेति बोध्यम् ॥ अनेन तत्प्रत्यायनमशक्यमित्याह भाष्ये

---

१ ओम् अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् । ऋक्संहि—अ १ । म १ । अ १ । सू १ । ऋक् १ । अग्निनामकं देवमीळे । स्तौमि । ईड स्तुतौ । इति धातुः । डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः । तथा च पठ्यते ।

"अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः ।
अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्" ॥

[१]अवरकालत्वादिति ॥ (भा)

[२]परा सूत्रादिति। (भा)

"सूत्रात्" प्रत्याहार सूत्रात् "परा" परकाला क्रियत इत्यर्थः। तेषामनादित्वादेषां पाणिनिकृतत्वादिति भावः ॥

[३]अवरकालैवेति। (भा)

वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादितिभावः ॥ "शब्दक्रमः" अष्टाध्यायीक्रमः ॥

[४]प्रत्याहारोत्तरकाला सवर्णसंज्ञेति। (भा)

[५]नाऽऽज्झलौ (पा)

इत्येतद्विषयनिर्णयोत्तरं तत्परिहारेण सवर्णपदशक्तिग्रहस्यैव व्यवहारोपयोगित्वादितिभावः ॥

वर्णानामुत्पत्ताविति। (भा)

प्रतीताविव्यर्थः ॥ "अक" इत्यादावाद्यवर्णस्य एव प्रत्यायकत्वादध्याहारेण व्याचष्टे

---

१ वर्णपाठ उपदेश इतिचेदवरकालत्वात्परिभाषाया अनुपदेशः ॥

२ किं परा सूत्रात् क्रियते इत्यतोऽवरकाला ॥

३ नेत्याह। सर्वथावरकालैव ॥

४ वर्णानामुपदेशस्तावत्। उपदेशोत्तरकालेत्संज्ञा। इत्संज्ञोत्तरकाल आदिरन्त्येन सहेता (१। १। ७१) इति प्रत्याहारः। प्रत्याहारोत्तरकालासवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्ययः इति ॥

५ अ १। पा १। सू १० ॥

अइउणिति ॥ (कै)

उत्पादयतीति । (कै)

प्रत्याययतीत्यर्थः ॥ "प्रत्याहारे" अइउणित्यादौ । न च प्रत्याहारेषु तदाद्यवाच्ये लक्षणाङ्गीकाराज्ञ दोषः । उक्तभाष्यरीत्या तदाद्यानां प्रत्यायकत्वाभावेन तेषामग्रहणत्वेन लक्ष्यतावच्छेदकलक्षणामूलसम्बन्धज्ञानयोर्दुरुपपादत्वात् ॥ एवं प्रत्याहारेषु सूत्रप्रयोजनाभावमुक्त्वा [१]"अस्य च्वौ" इत्यादावपि तमाह

[२]तत्रानुवृत्तिनिर्देश इति (भा)

भाष्ये । वृत्तिं वर्णसमाम्नायमनुगतस्तत्सदृशोऽनुवृत्तिरकारादिस्तस्य निर्देशः स्वरूपेणोच्चारणमित्यर्थः ॥ तत्र सवर्णाग्रहणे हेतुमाह

व्यक्तीति । (कै)

अनन्ता व्यक्तय इति पक्षे इत्यर्थः ॥ तदाह

अवान्तरभेदेति । (कै)

जात्येकत्वेऽपि व्यक्तीनां परस्परं भेदसम्भवादित्यर्थः ॥ एकाऽवर्णव्यक्तिरिति पक्षे तु यद्यपि सिध्यति तथापि सोऽसङ्गतः । उदात्तादिविरुद्धधर्माध्यासात् यदि तु ध्वनिनिष्ठास्ते तदा कत्वखत्वादिकमपि तन्निष्ठमस्तु किं वर्णैर्नचेदनन्ता एवेति भावः ॥ अनणो वचनादपि कथं ग्राहकत्वमत आह

---

१ अ ७ । पा ४ । सू ३२ ॥

२ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् । वा ॥

[1]अणसहश इति ॥ (कै)

उभयम् । (कै)

अनण्त्वमनुच्चारणं च ॥

मध्यपातिनामिति । (कै)

दृष्टान्तार्थम् ॥

नास्तीति । (कै)

अइउणित्यादावलादि जातिनिर्देशादेषामणत्वं प्रत्याहारग्रहणेषु च न दोषः ॥ "क्वादय" इत्यादिनिर्देशाश्चैवार्थे लिङ्गमित्युच्यते तदा सूत्रमेव व्यर्थमित्याह

आकृतीति ॥ (कै)

प्रत्याहारे । (कै)

अइउणित्यादि सूत्रे ॥

अनुवृत्तिनिर्देशे (कै)

[2]"अस्य च्वौ" इत्यादौ ॥

उपदिश्यते । (कै)

उच्चार्यते प्रत्याय्यते वा ॥

नान्तरीयकमिति । (कै)

जातेः साक्षादुच्चारणासम्भवात्तदुच्चारणम् । किं च । जातौ

---

१ अण्सहशोऽपीति गृह्येत इत्यर्थः ॥

२ अ ७। पा ४ सू ३२ ॥

कार्य्यान्वयस्य व्यक्तिं विना साक्षादसम्भवात्तदुच्चारणं तद्बोधनमित्यर्थः॥ तत्र दीर्घादिव्यक्त्याक्षेपे बीजमाह

[1]अत्वं चेति॥ (कै)

प्रमाणकृतभेदे दृष्टान्तमभिधाय गुणकृतभेदेऽप्याह

शुक्ले इति॥ (कै)

श्रुतिः। (कै)

श्रवणोपलब्धिः॥

भेदाद्भेद इति। (कै)

जातेरिति शेषः॥

[2]सत्यपीति। (कै)

श्रुतिभेदो हि व्यक्तिभेदसाधको नाकृतिभेदे साधक इति भावः। अत एव ह्रस्वोऽयमकारो दीर्घोऽयमकार इति अत्वेन सामानाधिकरण्यानुभवः। इकारादित्वेनाननुभवान्न। अत एवोदात्तादयो न जात्यन्तरप्रयोजका इति तात्पर्य्यम्। न च आकारोऽयं न अकार इति प्रतीत्यनापत्तिः। तस्या व्यक्तिभेदविषयकत्वात्॥ भाष्ये

अनेकान्तेनेति। (भा)

अनियमेनेत्यर्थः। अभेदेन सामानाधिकरण्य इति भावः॥ तदाह

---

१ अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते यथा गोत्वं कृष्णे पिण्डे स्थूले शुक्ले कृष्णे चेति॥

२ सत्यपि श्रुतिभेदे एकाकृतियोगोऽस्त्येव यथा कृष्णे स्थूलेऽपि च गोपिण्डे गोत्वयोगः॥

अभेदस्यापीति ॥ (कै)

प्रत्यभिज्ञानादिति । (कै)

स एवायमितिप्रत्यभिज्ञानादित्यर्थः । अकारोऽकार इत्येकाकारप्रत्ययाच्चेत्यपि बोध्यम् ॥

नासावन्यत्वमिति । (कै)

भेदप्रतीतिमेवेत्यर्थः ॥

प्राणीति । (कै)

यद्यपि प्राणित्वं न जातिस्तथापि साधारणधर्मत्वाभिप्रायेणोक्तम् ॥

गवाश्वरूपेति । (कै)

गोत्वाश्वत्वरूपेत्यर्थः ॥ परे तु ह्रस्वषड्भेदवृत्त्येव अत्वं दीर्घषड्भेदवृत्त्येवात्वमित्यादिः "ननु चेति" भाष्याशयः । सकलव्यापकमत्वमप्यस्तीत्युत्तरम् ॥ ननु व्यापकजात्यैक्येऽपि व्याप्यजात्या भेदोऽप्यस्तीत्यत आह

अनेकान्तो हीति । (भा)

व्यापकधर्मेण समानाधिकरणव्याप्यधर्मकृतो भेदः केवलभेदबुद्धिन्न करोतीत्यर्थ इत्याहुः ॥ ननु जातिनिर्द्देशे "[1]अष्टन आ" इत्यादावपि तन्निर्द्देशादकारादयः स्युर्यत्राधिक्यं तूभयार्थं स्यात् । ह्रस्वोच्चारणे तु अर्द्धमात्रिकेन तस्यान्तरतम्याद् ह्रस्व एव स्यादत आह

---

[1] अ ७। पा २। सू ८४॥

अष्टन इति ॥ (कै)

दीर्घव्यक्तीति । (कै)

व्यक्तेरुपलक्षणत्वे आन्तरतम्याद्धस्व एव स्यादिति यत्नाधिक्यानर्थक्यं तदवस्थमिति विशेषणत्वमेव तस्या इति भावः । अत्रातिरिक्तमात्रादि नास्त्येवेति तात्पर्य्यम् । केचित्तु दीर्घषड्भेदवृत्त्यात्वजातेरेवात्वव्याप्त्यायास्तत्र निर्देश इति वदन्ति ॥

अशब्दार्थ इति । (कै)

शब्दजन्यप्रतीतिविशेष्यत्वाभाववानित्यर्थः । यद्वा । शक्यतावच्छेदकत्वेऽप्यशक्य इत्यर्थः ॥

सर्वव्यक्तीनामिति । (कै)

जातिवैशिष्ट्येन प्रत्येकवृत्तिपरस्परभेदत्यागपूर्वकमभेदेनैकरूप्येणाश्रयणाज्जात्याक्रान्तसर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः । पूर्ववार्त्तिकेऽण्ग्रहणाकरणे आकृतिग्रहणं हेतुः । आकृतेरपि भेदशङ्कायामनन्यत्वाच्चेतिवार्त्तिकखण्डः । अपरमते अण्ग्रहणाकरणे सर्वव्यक्तीनामनन्यत्वं हेतुरनन्यत्वे आकृतिग्रहणम् । आकृतेर्ग्रहणं विशेषणत्वेनाश्रयणं रूपसामान्यादित्यथमाकृतिग्रहणादित्यस्यार्थोऽपरमत इत्येके ॥ जात्याश्रयणमावश्यकमित्याह

तद्वचेति ॥ (भा)

पूर्वा परा वेति । (कै)

उभयोरपि ग्रहणत्वं न स्यात् । अन्यतरस्य प्रत्याहारसूत्रोपात्तादन्यत्वादितिभावः ॥

### अवात्तामिति। (कै)

वसेर्लुङि तसस्तामि वृद्धौ "[1]सः सी"ति तत्वे "झलो झली"ति सिज्लोपे रूपम्॥ ननु "[2]झल" इति सूत्रं क्व चरितार्थमत आह

### अबुद्धेति। (कै)

बुधेर्लुङि रूपम्॥

### भेद एवेति। (कै)

व्यक्त्योः परस्परं भेद एवेति भावः॥ भाष्ये

### अनेकान्त इति। (भा)

उपात्ताभेदकधर्मसमानाधिकरणो भेदकधर्म इत्यर्थः। प्रकृतेऽभेदकधर्मस्त्वम्। प्रयोगार्थे तु मध्यमेत्युक्तेर्द्रुतविलम्बितयोरित्युक्तम्॥

### ह्रस्वदीर्घादीति। (कै)

वृत्त्या कालप्रमाणेन पृथक्त्वमिति तृतीयासमास इतिभावः। भाष्ये तु शेषविवक्षया षष्ठी हेतौ पञ्चमी वा॥

### आकृतिग्रहणादिति। (कै)

तदुक्तम् "[3]अइउण्" सूत्रे भाष्ये "[4]तद्वच्च तपरकरणम्"। "एवं च कृत्वा तपराः क्रियन्ते। आकृतिग्रहणेनातिप्रसक्तमिति" कृत्वेति॥

### एकाकृतीयोग इति। (कै)

तन्मात्रनिष्ठत्यादिः॥

### उदिदिति (कै)

---

१ अ ७। पा ४। सू ४९॥
२ अ ८। पा २। सू २६॥
३ शिव सू १॥
४ शिवसू-वा॥

कुचुटुतुपूनां प्राचां संज्ञा तथेहापि व्यवहारः । न तु सर्वेचेत्संज्ञा प्राप्नोति । अनुवादे तदप्राप्तेरिति बोध्यम् ॥ नन्वण्ग्रहणप्रत्याख्यानेऽनुवादेष्विव विधावपि जातिनिर्देशात् सर्वग्रहणप्रसङ्ग इत्यत आह

**भाष्यमानेष्विति ॥** (कै)

**यथाश्रुतमिति ।** (कै)

जातिविशेषावच्छिन्नव्यक्तिविशेषरूपमित्यर्थः ॥

**उत्पत्तिवाक्यत्वादिति ।** (कै)

विधिवाक्यत्वादित्यर्थः । विधौ हि प्रमितित्वितत्वादिविशिष्टोपादानेन वाक्यार्थभेदोऽनुवादेत्वेतस्य सिद्धत्वेनाऽप्रमितित्वितत्वात्तद्विशेषणोपादानं न वाक्यभेदमन्तरेण भवति सचाऽन्याय्य इति भावः । यत्तु क्वचिद्विधावपि व्यक्त्यन्तरस्योपादानं तद् "[1]दिव उद्" इत्यादौ तपरत्वाल्लिङ्गादिति द्रष्टव्यमित्याहुः ॥

**नान्तरीयकत्वादिति ।** (कै)

अनेन नान्तरीयकविशेषणविषय एवं विवक्षाऽविवक्षाविचारं प्रतिध्वनयति । अत एव "न श्रेयांसं प्रबोधयेद्" इत्यादौ अनुवाद्यविशेषणश्रेयस्त्वादेर्विवक्षायामपि न दोषः । वस्तुतोऽत्र व्याख्यानमेव शरणम् । नान्तरीयकसङ्ख्यालिङ्गविषयन्यायस्य प्रधानव्यक्तिविषयकत्वानौचित्यात् । उपेयिवानित्यादौ उपेत्यविवक्षाया नञो विवक्षायाश्च दर्शनात् । ऌकारेण ऌकारग्रहणाय तु ऌवर्णस्य ऌवर्णवद्भावो वाच्य इति तात्पर्य्यम् । परे तु जातिपक्षेऽपि तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियमार्थत्वात् तत्प्रयुक्तसवर्णग्रहण-

---

१ अ ६ । पा १ । सू १३१ ॥

निषेधायाऽ"प्रत्यय" इति पृथक्कार्य्यमेव। ध्वनितं चेदं [1]"ज्यादादीयस" इति सूत्रे भाष्ये। किं च तत्र व्यक्तिविवक्षायां यत्र क्वचित् प्रयोगे एकाकारव्यक्तिः साध्वी स्याद् न प्रयोगान्तर इति व्यक्तिविवक्षया समाधानं दुर्घटमित्याहुः॥

---

# [2]तपरस्तत्कालस्य। १। १। ७०॥

युजेः सम्बन्धवाचकत्वेन सम्बन्धस्योभयनिरूप्यत्वेन सम्बन्ध्यन्तराकाङ्क्षायामाह

**न्यायेनेति॥** (कै)

**प्रसिद्धत्वादिति।** (कै)

---

१ अ ६। पा ४। सू १६०॥

२ तपरस्तत्कालस्य। १। १। ७०॥

अयुक्तोऽयं निर्देशः। तदित्यनेन कालः प्रतिनिर्दिश्यते तदित्ययं च वर्णः तत्रायुक्तं वर्णस्य कालेन सह समानाधिकरण्यम्। कथं तर्हि निर्देशः कर्त्तव्यः। तत्कालकालस्येति। किमिदं तत्कालकालस्येति।

---

तपरस्तत्कालस्य। १। १। ७०॥

अयुक्त इति (भा)। न्यायेनासम्बद्ध इत्यर्थः। न्यायशब्दस्य प्रयोगः प्रसिद्धत्वान्न कृतः। कदाचित् प्रसिद्धार्थस्यापि प्रयोगो दृश्यते न्यायेनायुक्तमिति। धात्वर्थेऽन्तर्भूतस्य प्रयोगाभावः। न हि भवति

निष्ठान्तयुजेः प्रायो न्यायसम्बन्धिन्येव प्रयोगादित्यर्थः ॥ नन्वेवं युज्यर्थेऽन्तर्भूतत्वादप्रयोग इति कुतो नोच्यते इत्यत आह

धात्वर्थ इति । (कै)

यद्ययमन्तर्भूतः स्यात्तदा न्यायेनायुक्त इति प्रयोगो न स्यादिति भावः । दण्डेनायुक्त इत्यादि च न स्यादित्यपि बोध्यम् । एतेन मेघो वर्षतीत्यादौ प्रसिद्धा जलमित्यादेरप्रयोगादकर्मकतेति नव्योक्तिः परास्ताः ॥ भाष्ये

प्रतिनिर्दिश्यते इति । (भा)

सामानाधिकरण्येन विशेष्यत इत्यर्थः ॥ "तदित्ययं च वर्ण" इत्यस्य साकाङ्क्षत्वादाह

परामृष्ट इति ॥ (कै)

वर्णस्यैव परामर्शे हेतुमाह

---

तस्य कालस्तत्कालः । तत्कालः कालो यस्य सोऽयं तत्कालकालः । तत्कालकालस्येति ॥ स तर्हि तथा निर्देशः कर्त्तव्यः । न कर्त्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य सोऽयमुष्ट्रमुखः । खरमुखः । एवं तत्कालकालस्तत्कालः । तत्काल-

---

जीवति प्राणानिति ॥ तदिदित्यनेनेति (भा) । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् ॥ तदित्ययं च वर्ण इति (भा) । तपरशब्दवाच्यस्यार्थस्य तच्छब्देन परामर्शात् ॥ वर्णस्येति (भा) । वर्णवाचिनस्तच्छब्दस्येत्यर्थः ॥ कालेनेति (भा) । कालवाचिनेत्यर्थः । कालो हि प्रसिद्धपरिमाणा क्रियाऽप्रसिद्धपरि-

तपरेति। (कै)

तः परो यस्मात् इति विग्रहेऽवध्यवधिमतोः सामानाद्यात् सवर्णत्वस्य वर्णनिष्ठत्वाच्च तेन वर्ण एवोच्यत इति भावः॥ एकार्थवृत्तित्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वात् कथं "वर्णस्य कालेने"ति भाष्यमत आह

वर्णवाचिन इति॥ (कै)

सामानाधिकरण्यानुपपत्तिप्रदर्शनायकालस्वरूपमाह

कालो हीति॥ (कै)

अपरिच्छिन्नस्य विभोः कालस्य व्यवहारानुयोगित्वादाह

प्रसिद्धेति॥ (कै)

वर्णास्त्विति। (कै)

गुणरूपत्वाद्द्रव्यरूपत्वाद्वेत्यर्थः। जन्यमात्रं कालोपाधिरिति तु न युक्तं दिवसादिव्यवहारस्य सूर्यक्रियादिभिरेव दर्शनादिति

---

स्येति॥ अथवा साहचर्यात्ताच्छब्द्यं भविष्यति। कालसहचरितो वर्णोऽपि काल एव॥

किं पुनरिदं नियमार्थमाहोस्वित्प्रापकम्। कथं च नियमार्थं स्यात् कथं वा प्रापकम्। यद्यत्राणग्रहणमनुवर्तते ततो नियमार्थम्। अथ निवृत्तं ततः प्रापकम्॥ कश्चात्र विशेषः॥

---

मानस्य क्रियान्तरस्य परिच्छेदिका यथा दिवसमधीत इति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते स चाऽध्ययनस्य परिच्छेदकत्वात्कालः। वर्णस्तु क्रियात्मको न भवति॥

तस्य काल इति (भा)। यैव एकस्य वर्णस्य परिच्छेदिकाक्रिया-

भावः। एतत्कालस्वरूपकथनं "[१]कालाः परिमाणिना" इति सूत्रस्थभाष्यविरुद्धमिति तत्रैवोपपादयिष्यते॥

सैवेति। (कै)

तज्जातीयेत्यर्थः॥

तदीया क्रियेति। (कै)

उच्चारणरूपेत्यर्थः॥

क्रियान्तरस्य। (कै)

वर्णान्तरोच्चारणस्य॥

वर्ण एवेति। (कै)

वर्णाश्रितक्रियागतपरिच्छेदकलस्याऽऽश्रये उपचाराद्वर्णपरामर्शिनस्तच्छब्दस्य मुख्यवृत्तेरेव कालशब्देन सामानाधिकरण्यमित्यर्थः॥ पूर्वव्याख्यातो विशेषमात्र

१ अ २। पा २। सू ५॥

तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम्। १॥

तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम्। उदात्तानुदात्तस्वरितानुनासिकानाम्॥ अस्तु तर्हि प्रापकम्।

निमेषादिः सैव यस्य परस्य स तत्कालकालः॥ उष्ट्रमुख इति (भा)। गम्यमानार्थत्वाद् द्वितीयमुखशब्दाप्रयोगः। उष्ट्रो मुखमस्योष्ट्रमुखः। न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात् सादृश्य प्रतीतिः। समग्रेण चोष्ट्रेण मुखस्य सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्त्तते मुखेनैव मुखस्य सादृश्यं प्रसिद्धमिति सामर्थ्यादुष्ट्रमुखमिव

वर्णसहेति । (कै)

अनेन लक्षणाबीजं सम्बन्धो दर्शितः ॥ क्रियायाः परिच्छेदकत्वं सापेक्षं न स्वत इति दृष्टान्तेनाह

यथेति ॥ (कै)

भाष्ये

प्रापकमिति । (कै)

स्वतन्त्रविधायकमित्यर्थः ॥

षण्णामिति । (कै)

अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तद्भावाच्चेदं चिन्त्यम् । अत एव वार्त्तिके स्वरभिन्नेत्येवोक्तं न तु गुणभिन्नेति । भाष्येऽप्युदात्तानुदात्तस्वरितानामित्येव पाठः ॥ ननु

प्रापकमिति चेद्ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः । २ ॥

प्रापकमिति चेद्ह्रस्वग्रहणे दीर्घप्लुतयोस्तु प्रतिषेधो वक्तव्यः ॥

विप्रतिषेधात् सिद्धम् । ३ ॥

अणः सवर्णान् गृह्णातीत्येतदस्तु तपरस्तत्कालस्येति वा तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन । अणः सवर्णान् गृह्णातीत्यस्याव-

मुखमस्येत्यर्थो गम्यते । एवमिहापि वर्णः कालो न भवति इति सामर्थ्यात्तदीया क्रिया क्रियान्तरपरिच्छिन्ना सती क्रियान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक उच्यते ॥ अथवेति ( भा ) । वर्णसहचरितायां क्रियायां तच्छब्दो वर्त्तते स कालो यस्येति तद्वर्णसमवेता क्रियापरिच्छेदिकाऽस्येत्यर्थः । यथाऽश्मादिद्रव्यं द्रव्यान्तरपरिच्छिन्नं सुवर्णादीनां परिच्छेदकं तद्वत् क्रियापीत्यर्थः ॥

तच्च तपरत्वसामर्थ्यादस्य सूत्रस्याऽऽवृत्तिमङ्गीकृत्याऽऽवृत्तस्याण्ग्रहणाननुवृत्त्या विध्यर्थत्वान्न दोष इत्यत आह

तपरकरणमिति ॥ (कै)

नन्वाकडारादन्यत्र संज्ञासमावेशदर्शनाद्विप्रतिषेधादित्ययुक्तमत आह

विरोधो हीति। (कै)

न हि संज्ञासमावेशे संज्ञात्वं प्रयोजकं किन्तु विरोधाभाव इति भावः। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादत्र युगपदसम्भवरूपो विरोध इति तात्पर्य्यम् ॥ तपरत्वसामर्थ्यात् प्रतिलक्ष्यं लक्षणभेदाच्च "अतो भिस" इत्येतद्विषयं "तपर" इति लक्षणमनवकाशमिति न युक्तो विप्रतिषेध इति शङ्कते

अत इतीति ॥ (कै)

तपरत्वस्य सन्दिग्धत्वात् विप्रतिषेधोपपत्तिरित्युत्तरयति

नैतदिति ॥ (कै)

---

काशः। ह्रस्वा अतपरा अणः। तपरस्तत्कालस्येत्यस्यावकाशः। दीर्घास्तपराः। ह्रस्वेषु तपरेषूभयं प्राप्नोति। तपरस्तत्कालस्येत्येतद्भवति विप्रतिषेधेन ॥ यद्येवं

---

दीर्घग्रहणा इति (भा)। भेदका उदात्तादय इति भावः। तत्र वृद्धिरादैच् (१। १। १) इति यस्मामाकाराणां वृद्धिसंज्ञोच्यते एकस्यैव तु दीर्घस्य स्यात् तपरकरणं त्वैजर्थमेव स्यात् ॥

ह्रस्वग्रहणा इति (भा)। अतो भिस ऐस् (७। १। ९) इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति। इदं हि सूत्रमनण्-

## सिद्धं त्विति । (भा)

उत्पत्तिपक्षेऽपि उपलब्धीनामेव कालभेदात् वृत्तिवैविध्यम् । वर्णास्तु वृत्तिभेदेऽप्येकरूपा एवेति भावः ॥

## अवस्थिताः । (भा)

नियतकालाः ॥

## चिराचिरवचनात् । (भा)

चिराचिरकालोच्चारणजनकयत्नाद् जायमानवैकृतध्वनेरुपलब्धीनामेव भेद इति भावः ॥

## उपचयापचयौ । (कै)

कालवृद्धिह्रासौ ॥

## आलस्यादिभेदादिति । (कै)

आलस्यादिना गतिक्रियाया भेदेऽपि यथा न मार्गभेदस्तथाऽऽलस्यादिनोच्चारणक्रियातो वैकृतध्वनिभेदेऽपि न वर्णस्वरूपभेद इति भावः ॥

---

सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते । सिद्धमेतत् । कथम् । अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु ।

---

मुखसुखार्थस्यापि तकारस्य दर्शनात् । ऋदृत इद्धातोः (७।१।१००) इति यथा ॥ यद्येवमिति (भा)। यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्त्तयतीत्यर्थः ॥ त्रिभागाधिका इति (भा)। द्रुतं श्लोकमर्धं वोच्चारयति वक्तरि नाडिकाया यस्या मत्र पानीय-

तद्भेदे । (कै)

प्रयत्नभेदे । तद्भेदेनेति तृतीयान्तः क्वचित् पाठः ॥

वृत्तिभेदात् । (कै)

द्रुतादिवृत्तिभेदात् ॥

भिन्नकाला एवेति । (कै)

चिराचिरोपलब्ध्युपयोगिवृद्धिह्रासयुक्ता एवेत्यर्थः । अयं भावः । उत्पत्तिवादिनो वर्णोत्पत्तिं प्रत्युच्चारणव्यापारस्य कारणत्वात् तावत्तावत्कालावच्छिन्नोच्चारणेन ह्रस्वदीर्घादेरिव द्रुतादेरपि तावत्कालस्यैवोत्पत्तिः स्यात् । न चाऽनुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इति वाच्यम् । विनिगमनाविरहादिति । अतो नित्यमतिरिक्तं स्फोटमादाय समाधत्ते भाष्ये

एवं तर्हीति ॥ (भा)

अत्रेति । (कै)

भाष्ये इत्यर्थः ॥

स च नित्य इति । (कै)

---

किं पुनस्तर्हि वृत्तिविशेषः । वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते । वक्ता कश्चिदाश्वभिधायी भवति । आशुवर्णानभिधत्ते । कश्चिच्चिरेण

---

फलानि भवन्ति तस्या एव मध्यमायां वृत्तौ द्वादश फलानि भवन्ति । नवानां त्रिभागास्त्रीणि फलानि तदधिकानि न च द्वादश सम्पद्यन्ते विलम्बितायां तु वृत्तौ षोडश फलानि भवन्ति ॥ सिद्धं त्विति ( भा ) । सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ । यथा गन्तृणामाकाशादि-

आकाशादिवदिति भावः ॥ ननु स्फोटोऽसिद्धस्तन्नित्यत्वं चेत्यत आह

एतच्चेति । (कै)

स एवायमकार इति प्रत्यभिज्ञानाद् एकं पदमिति प्रत्ययाच्च तत्सिद्धिरित्यन्यत्र विस्तरः ॥ ननु ध्वनिरपि शब्दविशेष एव स कथं शब्दगुणोऽत आह

शब्दस्येति । (कै)

व्यञ्जकत्वेन स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसरणद्वारा स्वधर्मकृपित तदुपलब्धिहेतुत्वेनेत्यर्थः ॥ तद्विषयायाः पुनः पुनरुपलब्धेर्नैरन्तर्येऽपि न वर्णभेद इति दृष्टान्तेनोपपादयति

तद्यथेति । (कै)

पुनः पुनरुपलम्भोऽविच्छेदेन दर्शनम् ॥

ह्रस्वदीर्घेत्यादि । (कै)

तमेवायं विलम्बितमुच्चारित वानन्यो द्रुतमितिवदिह व्यक्ति-प्रत्यभिज्ञानाभावादिति भावः । एवं च परिदृश्यमानकालभेद

---

कश्चिच्चिरतरेण । तद्यथा । तमेवाध्वानं कश्चिदाशुगच्छति कश्चिच्चिरेण गच्छति कश्चिच्चिरतरेण गच्छति । रथिक आशु गच्छत्याश्विक-

---

भेदाद् गतिभेदोऽपि न मार्गभेद इत्यर्थः ॥ विषम इति (भा) । वर्णाः प्रयत्नजन्याः । तद्भेदे वृत्तिभेदाद्भिन्न काला एव । अध्वा तु व्यवस्थित एव न गन्तृक्रियाजन्यः ॥ एवं तर्हीति (भा) । व्यक्ति-स्फोटोऽत्र विवक्षितः स च नित्यः । एतच्च "येनोच्चारितेन" इत्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम् ॥

उपलब्धिगत एवेति तात्पर्य्यम् । अत्रेदं बोध्यम् । एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाभिव्यज्यते ॥

### ध्वनिः शब्दगुण इति (भा)

भाष्ये ध्वनिशब्देन वर्णा वैकृतध्वनिश्च । तत्र वैकृतध्वनेः स्फोटस्य तत्तद्रूपेण पुनः पुनरभिव्यक्तिः कार्य्यमिति तदभिव्यक्तस्फोटस्य तत्कालत्वमेव । ह्रस्वदीर्घप्लुतरूपस्फोटस्तु भिन्नकालावच्छिन्नैर्विजातीयैर्ध्वनिभिरभिव्यक्तो भिन्न एव लौकिकैर्ध्वनिगतभेदेन तद्भेदस्यापि संप्रत्ययात् । कैयटे "ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना" इत्यस्य व्यञ्जकभेदेनाऽऽरोपितभेदा एव भिन्नध्वनिभिर्वर्णैर्व्यज्यन्त इत्यर्थः । विलम्बितादिवृत्तौ तु स्फोट एकजातीय एव ।

### ध्वनिकृता वृद्धिः (भा)

इत्यस्य वैकृतध्वनिकृतोपलब्धिकालवृद्धिरित्यर्थः । वर्णोपरागाभिव्यक्तिजनकयत्नीयकालोपरागेणैव स्फोटस्य भानम् । अत एवाऽस्य प्राकृतत्वेन व्यवहारः । अयं तु वैकृतः । तत्त्वं चास्यादिकृतत्वात् ।

---

स्थिरेण पदातिस्थिरतरेण । विषम उपन्यासः । अधिकरणमत्राध्वा व्रजति क्रियायाः । तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम् ॥
एवं तर्हि **स्फोटः शब्दो ध्वनिः शब्दगुणः** । कथम् ।

---

शब्दगुण इति (भा) । शब्दस्य गुण उपकारको व्यञ्जकत्वेनेत्यर्थः । तद्यथा । घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते तथा विलम्बितायां वृत्तावकार एव पुनः पुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यते इति सर्ववृत्तिषु तत्कालत्वम् । ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्नाभिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः ॥

वर्णाभिव्यक्त्युत्तरकालश्चायम् । अयं तूपलब्धेरेव पौनः पुन्ये कारणम् । पौनः पुन्यं चाविच्छेदेनोपलब्धिधारामात्रेण न तु विच्छिद्योपलब्ध्या । एतद्दवच्छिन्नत्वेन तु न स्फोटोपलब्धिः । ह्रस्वाकार एवायमिति प्रत्यभिज्ञानात् । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायात् । उत्पत्तिवादिनां त्वेवं वक्तुमशक्यमिति स्पष्टमेव ॥ ननु "भेर्य्याघातो" भेरीदण्डादिसंयोगविशेषः स कथं गच्छेदत आह

भेरीमिति । (भा)

कर्मण्यणिति भावः ॥ भाष्ये

आहत्य (भा)

तं शब्दमुपलभमान इति शेषः ॥ ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादिष्विति वैषम्यमत आह

उपलब्धिसामान्ये इति । (कै)

यथा तत्र तस्य ध्वनेस्तावत्कालमुपलम्भस्तथेहापि तत्तद्वृत्तौ तावत्तावत्कालं तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव

---

भेर्याघातवत् । ५ ॥

तद्यथा भेर्याघातः । भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति

---

भेर्य्याघात इति (भा) । भेरीमाघ्नन्तीति भेर्य्याघातः । उपलब्धिसामान्ये दृष्टान्तः । यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं कश्चिच्चिरतरं च एवं वृत्तिभूपन्नानां कालभेदो विषयस्य त्वभेद एव ॥

स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः । न चैतावता स्फोटभेद इति तात्पर्य्यम् ॥ ननु भेर्य्याघातस्थले स्फोटाभावात् स्फोटस्तावानेवेत्यनुपपन्नमत आह

दार्ष्टान्तिकेति ॥ (कै)

भाष्ये

ध्वनिः स्फोटश्च (भा)

स इति शेषः ॥ किन्तदित्यत आह

शब्दानामिति ॥ (भा)

व्यञ्जकत्वेन । (कै)

उपलब्धिजनकत्वेन । वैकृतध्वनेरप्युपलब्धिपौनःपुन्यकारणत्वाद्व्यञ्जकत्वमिति भावः । तदुपक्रमेणैव भाष्यप्रवृत्तेस्तदुभयं स्वभावतः सिद्धमिति शेषः ॥ ननु तत्र प्रमाणान्तरापेक्षेति भावः । योगिप्रत्यक्षसिद्धं चैतदुभयमिति तात्पर्य्यम् । इदमेव कैयटेन "प्रमाणेने"त्यनेनोक्तम् । वस्तुतस्तु भेर्य्याघातस्थलेऽपि स्फोट एव भेरीताड़नाभिव्यक्तः श्रोत्रग्राह्यः शब्दानां चिराचिरोपलब्धि-

---

कश्चित्त्रिंशत्कश्चिच्चत्वारिंशत् । स्फोटश्च तावानेव भवति ध्वनिकृता वृद्धिः ॥

---

स्फोटस्तावानेवेति ( भा ) । दार्ष्टान्तिकोपन्यासः ॥ ध्वनिः स्फोटश्चेति ( भा ) । व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते व्यङ्ग्यस्त्वभिन्नकाल

करात्यत्वमहत्त्ववान् वैकृतध्वनिरेवाल्पत्वादिना लक्ष्यते॥ "महत्त्वं" चिरकालत्वम्॥ वैकृतध्वनिस्फोटयोः प्रमाणमाह

उभयं तदिति॥ (भा)

तदुक्तं हरिणा।

"वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।"

"ग्रहणे" तत्तत्कालकत्वेन ग्रहणे॥

"वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते।"

इति॥

"शब्दस्योर्द्ध्वमभिव्यक्तेर्वृत्तिभेदाय वैकृतः।"

इति च॥ "उभयम्" इत्यावृत्त्या योजनीयम्। उभयं गृह्यत इति शेषः। तेन व्यक्तवाचामुभयम्। अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः। ध्वनिपदेन प्राकृतवैकृतावुभावप्युच्येते। ग्रहणकर्मीभूतमुभयन्तु प्राकृतवैकृतध्वनिस्फोटरूपम्। वैकृतस्याल्पत्वादिचिराचिरोपलब्ध्यनुमेयमिति बोध्यम्॥

---

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषां चिदुभयं तत् स्वभावतः॥

---

एवेत्यर्थः॥ उभयमिति (भा)। व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः स्वरूपेण सिद्धावित्यर्थः॥ केषां चिदिति (भा)। व्यक्तानामुभयं गृह्यते अव्यक्तानान्तु ध्वनिरेव॥

# आदिरन्त्येन सहेता। १। १। ७१॥

संज्ञयैवेति। (कै)

संज्ञाबोधकेनान्त्यसमभिव्याहृतेच्छब्दसहितादिशब्देनेत्यर्थः ॥ आक्षेपप्रकारमाह

आद्यन्तौ चेति। (कै)

यद्यप्यादिशब्दः परमात्रमपेक्षते अन्त्यश्च पूर्वमात्रं तथापि सह प्रयुज्यमाणौ मध्यापेक्षाविति भावः ॥ [1]"मध्यमानामेव" इत्येवकारः सौलभ्यद्योतकः ॥

स्वंरूपमित्यनुवर्त्तनादिति। (कै)

अन्ये तु आद्यन्तशब्दाभ्यामवयववाचकाभ्यामवयवीसमुदाय आक्षिप्त इति सम्बन्धित्वेनाविशेषादादेरपि ग्रहणम्। अन्त्यस्य तु न। "आचाराद्प्रधानत्वाल्लोपश्च बलवत्तर". इत्युक्तेरन्यानुबन्धानामिवास्यापि संज्ञाकार्य्याभावात्। स्वशब्देन विशेषणीभूताऽन्त्यमात्रपरामर्शासम्भवेऽपि विशिष्टपरामर्शे बाधकाभावेनाप्रधानतृतीयानिर्देशादित्यनया युक्त्या न निर्वाहः। एतत्फलितार्थकथनमेव भाष्ये

---

१ आद्यन्तौ च मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् ॥

स्वस्य च रूपस्येति । (भा)

तेन चाद्यन्त्यशब्दौ पूर्वापरशब्दवन्नावधिमच्छब्दौ किन्त्ववयवशब्दाविति सूचयतीत्याहुः ॥

समुदायादेवेति । (कै)

तस्यैव संज्ञिनार्थेनार्थवत्तया प्रातिपदिकत्वादितिभावः ॥ ननु स्वंरूपमित्यस्यानुवृत्तौ तेनादिवदन्त्यस्यापि परामर्शः स्यात् किं च सहग्रहणेन संज्ञात्व इव संज्ञित्वेऽपि साहित्यापत्तावन्त्यसहितादेर्विशिष्टस्य यणितिरूपस्य संज्ञित्वे दध्यत्रेत्यादौ णकारसहितः स्यादत आह

स्वं रूपन्त्विति । (कै)

अत्र वदन्ति । समुदितस्य संज्ञात्वे प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशमिति ग्रहणकसूत्रस्थभाष्यविरोधः । टिघुभाद्येकदेशवदस्यापि ग्राहकत्वप्रसक्त्यभावात् । तस्मादाद्यवर्ण एव वाचकः । अन्त्यस्तु तात्पर्यग्राहकः सहग्रहणात्तु विशिष्टे तदारोपादिशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति ॥

---

# येन विधिस्तदन्तस्य १।१।७२॥

ननु येनेति करणे तृतीया न कर्त्तरि षष्ठ्यापत्तेः । शास्त्रे करणं च विशेषणमेवेत्यग्रे भाष्यकृद्वक्ष्यति । तदन्तस्येति बहुव्रीहिः ।

एवं च इको यण् इत्यादौ विशेष्याभावात् कथमतिव्याप्तिरत आह

शब्दानुशासनेति । (कै)

वस्तुतोऽस्यार्थस्य भाष्येऽग्रे वक्ष्यमाणत्वान्नैतं पूर्वपक्षी जानातीति विशेष्यप्रदर्शनं व्यर्थम् । यत्सम्बन्धी विधिः स तदन्तस्य संज्ञेति सूत्रार्थं मत्वा शङ्का अत एवाग्रे विधेयेनापि तदन्तविधिं वक्ष्यति । विधिरिति च भावे किः । शौचत्वाच्च तृतीयेत्याहुः ॥ नन्वयनमित्यादितस्त्वयनमित्याद्यर्थाबोधाद् अर्थाभिधानयोग्यस्यैवाऽऽदेशत्वात् कथमत्राऽऽदेशोऽत आह

प्रकरणेति ॥ (भा)

भाष्ये

यथैवेति । (भा)

एषा तदन्तविधावयादेः कार्य्यत्वम् । अयादेस्तु तदन्तविधौ साधुत्वख्यापनादिना बोध्यमानतया कार्य्यत्वमिति विवेकः ॥

अजादिरिति । (कै)

यस्मिन् विधिरिति परिभाषणादिति भावः ॥

षष्ठीनिर्देशादिति । (कै)

पूर्वपरयोरिति षष्ठी तु साधारणीति भावः ॥ तदादितदन्तविध्युपस्थितिसामर्थ्याच्च तद्प्रवृत्तिर्बोध्या । अत एव "[१]अल्लोऽन्त्यस्य" इत्यादेरप्रवृत्तिरित्याहुः ॥ भाष्ये

---

१ अ १ । पा १ । सू ५२ ॥

## अन्तरङ्गबहिरङ्गे इति। (भा)

वर्णमात्राश्रयत्वेन वार्णस्यान्तरङ्गत्वमिष्यते तदपि चेत् समुदायस्य न कोऽपि विशेषः स्यादिति भावः॥

## अन्तरङ्गलक्षणस्य (भा)

इत्यस्य तत्त्वाभिमतस्येत्यर्थः॥

## बाधक (भा)

इत्यस्य तव मते उभयोः समत्वेन परत्वादिति शेषः॥ "गुणः" "[1]पुगन्त" इत्यनेन॥

## गुणो हीति। (कै)

इकारस्येति शेषः। गुणः पञ्चकाश्रयः। ऊठ्तु चतुष्काश्रयः इति विवेकः॥

## नानेति। (कै)

अचि यण् प्रत्यये गुण इति भावः। इदं चिन्त्यम्। इयाये-त्याद्यसिद्धेः। ज्ञापकासम्भवाच्च। केचित्त्वत्रापि तदादितदन्त-विधावस्य वार्णत्वाभावात्तदप्रवृत्तिः सा वक्तुं चाशक्या। वार्णा-दसिद्धेरिति भाष्याशयः। यद्वा तदप्रवृत्तिरनित्यत्वादुभयसम्मतेति भाष्याशय इत्याहुः॥ व्याचतिं निराकरोति

## असतीति। (कै)

सति तु तस्मिन्नान्तरङ्गत्वमिति भावः। इदं तु बोध्यम्। एवमपीगन्तशब्दाजादिशब्दमात्रापेक्षत्वं यणो गुणस्य त्वकारौत्या

---

१ अ ७। पा ३। सू ८६॥

पदार्थपञ्चकापेक्षत्वमिति कथञ्च बहिरङ्गत्वम् । तस्मात् संज्ञापेक्षं न बहिरङ्गं गुणादूठ् तु नित्यः । सिद्धान्ते ऊठि कृते यणा बाधाद् गुणो न नित्यः । इदानीं तदसिद्धिरपि दोष इति भाष्याशय इति ॥

## एवमिति । (कै)

सति तदादितदन्तविधित्वे यणा तुल्यनिमित्त इति न स बहिरङ्ग इति भावः ॥ भाष्ये "ऊणशब्दमाश्रित्येत्या"दिना यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्श्यते । एवं च परत्वाद्गुणः स्यादिति कैयटस्याशयः । अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो न तु स्थान्यादिपरोऽपीति सूचयति । यण् निमित्तो नशब्दावयवत्वेन नशब्दस्य ततो बहिष्ट्वाभावः । गुणनिमित्तनशब्दादूनशब्दस्य बहिर्भूतोऽकारघटितत्वाद्यणो बहिरङ्गत्वमिति भावः ॥ भाष्ये

## अल्विधिश्चेति । (भा)

स्थानिवदित्यत्र अलो जायमानो विधिरित्यर्थः । अलोऽन्यस्यादेशो नेति नियमेनेतिशेषः ॥

## यिन्नित्यस्येति । (कै)

कदाचिदिन्नित्यस्येत्यपि बोध्यम् । सर्वथादेशस्य स्थानिवत्त्वात् सुलोपः स्यादिति भावः ॥ नन्वेवमनेकाल्शिदिति व्यर्थं कदाचिदेकाल्त्वस्यापि सर्वादेशत्वसिद्धेरत आह

## अनेकालिति ॥ (कै)

सर्वस्यैवेति । (कै)

षष्ठीनिर्दिष्टसर्वस्यैवेत्यर्थः॥ प्रकृतं नाम पूर्वत्र निर्दिष्टमनुवर्त्तमानं चेद् "ईदूदेद्द्विवचनम्" इत्यत्र तदन्तविधिर्न स्यादत आह

प्रस्तुत इति । (कै)

प्रस्तावस्य बुद्धिसन्निधिः । भाष्ये प्रस्तुत इत्यर्थक"प्रकृते" इत्यस्य विशेष्ये इति शेषः॥

तदन्तविधिभाज इति । (कै)

तदन्तश्चासौ विधिभाक् चेति कर्मधारयः। तदन्तशब्दे च बहुव्रीहिरिति बोध्यम् । शब्दरूपं विशेष्यमादाय तु अस्य न सर्वत्र प्रवृत्तिरव्यावर्त्तकत्वादिति भावः॥

कर्म्मसाधन इति । (कै)

भावसाधनत्वेऽपि न बाधकं प्रसिद्धत्वादेव विधेयं कर्म लभ्यते ॥

स शब्द इति । (कै)

इह शास्त्रे प्रायः शब्दस्यैव कार्यकरणत्वादिति भावः॥

तेन विशेषणेनेति । (कै)

कार्यविधाविति शेषः। विशेषणत्वलाभोऽप्येवम् । करणस्य व्यापारवत्त्वनियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणशब्देनोच्यते तस्य चेतरव्यावृत्तिकरणमेव व्यापार इति भावः।

---

१ अ १ । पा १ । सू ११ ॥

तच्च प्रत्यासत्त्या शब्दप्रयोज्योपस्थितिविषय[1]विशेषणमेव प्रायेण तदन्तग्राहकमिति "[2]इको यणचि" इत्यादौ न दोषः । कश्चित्तु सति गमकेऽतादृशं [3]शब्दरूपं विशेष्यमादायापि तदन्तविधिरिति भावः । तदपि अन्तरङ्गत्वात् समानाधिकरणविशेषणमेवेति बोध्यम् ॥ भाष्ये

**अन्येन चान्यस्येति ।** (भा)

अनेन यस्य कार्यं यस्मिन् परतस्तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । समाशो भोजनम् ॥ सेनाङ्गत्वादेकत्वं प्राप्नोतीत्यत आह

**[4]बह्विति ।** (कै)

बह्वर्थवाचिपूर्वोत्तरपदकत्वाभावाद्द्वन्द्वस्येत्यर्थः ॥

**[5]तस्य ।** (कै)

गृह्यमाणस्य ॥

---

१ शब्दप्रयोज्योपस्थितिविषयं विशेषणमेव । क । ख । ङ ॥

२ अ ६ । पा १ । सू ७७ ॥

३ शब्दरूपविशेष्यमादाय । क । ख । ग । ङ ॥

४ बहुप्रकृतित्वाभावादेकवद्भावाभावः ॥

५ येन विधिस्तदन्तस्येति चेद्ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः (वा) इति वार्त्तिकस्य "ग्रहणोपाधीनाम्" इति प्रतीकमुपादायोक्तम् । "गृह्यते उच्चार्यते इति ग्रहणं तस्य ये उपाधय इष्यन्ते ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसम्बन्धमनुभवेत्" ॥

उपाधय इति। (कै)

विशेषणानीत्यर्थः ॥

प्राप्नुवन्ति। (कै)

उपाधय इत्यनुकर्षः ॥ वार्त्तिके "तदन्तोपाधी"ति भावप्रधानो निर्देश इति बोध्यम् ॥ [1]तदन्तसंज्ञायामप्यकारस्यास्तु विशेषणेन सम्बन्धो विरोधाभावादत आह

संज्ञा ह्येति ॥ (कै)

विशेषणभावम्। (कै)

गुणभावम्। यद्वा संज्ञिप्रत्यायने तद्बोधे सति विशेषणत्वमापन्नेत्यर्थः। [2]"आत्मने"ति पाठे स्वयमित्यर्थः। "आत्मन" इति पाठे तु सम्यगेव। "गुणानां च परार्थत्वात् पदार्थैकदेशत्वाच्चे"ति न्यायादिति भावः ॥

अवधित्वेति। (कै)

अवधित्वं च तदनारम्भकत्वे सति पञ्चम्यन्तपदवाच्यत्वरूपं पूर्वादियोगे अवयवित्वं च तदारम्भकत्वमिति [3]ते एकस्य न सम्भवत इत्यर्थः ॥

ओष्ठः पूर्वो यस्माद् (कै)

इति विग्रहे एष दोषः। षष्ठ्यर्थे बहुव्रीहौ तु यद्यपि पूर्वशब्दस्य

---

१ तदन्तसंज्ञायामप्यकारस्यास्तु विशेषणेन सम्बन्धः— इति वालेन्टाइनमुद्रापितविवरणपुस्तकेऽस्ति तत्तु न सम्यक् ॥

२ "कथमात्मनो विशेषणसम्बन्धम्—" इत्यत्र ॥

३ ते एकं प्रत्येकस्य न सम्भवत इत्यर्थः। क। ख। ग। इ ॥

प्रथमावयववाचित्वाद्धलावयवत्वमोष्ठ्यस्य लभ्यते इति नायं दोषस्तथापि सुखूर्षतीत्यादौ दोषो बोध्यः । एवम् [1]"उतश्च" इति सूत्रे पूर्वशब्दस्यावयववाचित्वे प्रत्ययविशेषणत्वासम्भवः । संयोगपूर्वकोकारान्तप्रत्ययभावेन अव्यावर्त्तकतया [2]"असंयोगपूर्वाद्" इति [3]निषेधस्य वैयर्थ्यापत्तेः । न चाङ्गविशेषणत्वं चणु इत्याद्यसिद्धेरतो व्यवस्थावाची पूर्वशब्दः श्रूयमाणप्रत्ययविशेषणम् । तदुक्तं भाष्ये

पूर्वग्रहणमुकारान्तविशेषणमिति । (भा)

न च असंयोगादिति वक्तव्ये पूर्वग्रहणाद्विशेषणस्याप्युकारस्य विशेषणमिति न दोष इति वाच्यम् । वाच्यवृत्त्याऽलाभात् । किञ्च व्यवहिते चिणु इत्यादावपि निषेधार्थं पूर्वग्रहणं स्यादिति भावः ॥ भाष्ये "निपूर्त्याः" इत्यत्र [4]"न ध्याख्या" इति न त्वनिषेधः । विशेषणविशेष्यभावे कामचारेऽपि संज्ञासूत्रस्य प्रबलत्वात् पूर्वं तदन्तविधिरेव स्यादत आह

इष्ट्यादीति । (कै)

एवं च विशेषणत्वज्ञानसापेक्षतयाऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्त्या बहिरङ्गत्वादस्य पूर्वमुकारादीनामेव तद्विशेषणमिति भावः ॥

गुणप्रधानभावानपेक्षा इति । (कै)

एवञ्च तत्र वाक्यभेद एवेति भावः ॥

---

१ अ ६ । पा ४ । सू १०६ ॥

२ उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ ॥

३ निषेधवैयर्थ्यापत्तेः । क । ख । ग । ङ ॥

४ न ध्याख्यापॄमूर्च्छिमदाम् । ८ । २ । ५७ ॥

इयन्त्विति। (कै)

तदपेक्षत्वाद्विधिवाक्यैकवाक्यतापन्नैवेत्यर्थः॥ यदुक्तं संज्ञायेति तत्राह

तत्रेति। (कै)

गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवतीति न्यायादिति भावः॥ भाष्ये

[1]यथेष्टमिति। (भा)

विशिष्टे वैशिष्ट्यं विशिष्टस्य वैशिष्ट्यं विशेष्ये विशेषणं तत्र च विशेषणान्तरमेकत्र द्वयमिति योगेषु यथेष्टमित्यर्थः। एवञ्च व्याख्यानात् प्रकृते [2]विशिष्टवैशिष्ट्यमितिरीत्यैव बोधो न तु [3]विशेष्ये विशेषणमितिरीत्येति तात्पर्य्यम्॥

सुबन्तस्येति। (कै)

"सुपा" इत्युपस्थितस्येति शेषः॥

तद्विशेषणत्वेनेति। (कै)

सुबन्तैः श्रितादिभिरित्यर्थ इति भावः॥

---

१ सिद्धन्तु विशेषणविशेष्ययोर्यथेष्टत्वात्। वा। यथेष्टत्वादित्यनेनेदं दर्शयति। चतुर्विधेषु विशिष्टवैशिष्ट्यबोधेषु मध्ये विशिष्टस्य वैशिष्ट्यमेवेह सम्मतं न त्वितरत्त्रिकं व्याख्यानाल्लक्ष्यानुरोधाच्च। इह सिद्धान्ताभिमतं विशेषणविशेष्यभावं स्फुटीकर्त्तुं बहूनि वार्त्तिकानि प्रवृत्तानि॥

२ विशिष्टस्य वैशिष्ट्यम्। क। ग। ङ॥

३ विशेष्ये विशेषणमित्यादिरीत्या –। क। ख। ग। ङ॥

श्रितान्तमिति । (कै)

विसर्गान्तस्य तदन्तत्वाभावादिति भावः ॥

सम्बुध्यन्तमिति । (कै)

इदमुपलक्षणं कष्टं परमश्रिता इत्यादेः ॥

तदन्तविध्यभाव इति । (कै)

नड़ादीनां विशेष्यत्वात्प्रातिपदिकस्य विशेषणत्वेऽपि तदन्तस्य नड़ादेरसम्भवादिति भावः ॥ अत्र वदन्ति । एवं हि कष्टश्रितमित्यादेरप्यसिद्धिरिति भाष्यस्य निर्दलत्वापत्तिः । यत्तु सुप्सहितैः श्रितादिभिरितिविवरणकृतः सिद्धान्ताशयवर्णनम् । तन्न । "[1]पूर्वकालैक" इत्यादौ "सुप" इति प्रथमान्ते तथार्थासम्भवात् । तस्मात् समर्थपरिभाषोपस्थितं समर्थपदार्थं प्रति विशेषणतया प्राप्ततदन्तविधेर्निषेधार्थमिति भाष्याशयः । उपस्थितसमर्थपदं च सूचीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तं तस्य च तत्प्रकृतिके लक्षणया "सुपा" इत्यनेनान्वयः । न हि सामर्थ्यं सुबन्तेनैवेति नियमः कुम्भकार इत्यादौ सुपः प्राग्भागेऽपि तदङ्गीकारात् । "परिपूर्णं पदम्" इति न्यायस्तु यस्योत्तराकाङ्क्षयाऽन्वयस्तद्विषयो न तु यत्रान्वयस्तद्विषय इति "[2]कुत्सित" इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यते इति दिक् ॥

तत्र यद्यपीति । (कै)

एवं च ङीबभावेऽपि ङीषा सिद्धिरिति भावः ॥

किं नद्या इति । (कै)

यद्यपि पाठे उपसर्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय

---

१ अ २ । पा १ । सू ४९ ॥ २ अ ५ । पा ३ । सू ७४ ॥

तच्चारितार्थ्याच्चिन्त्यमिदम्। एवं च तस्यावश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित्।' नन्विञो ञित्वाद्वृद्धिस्वराद्यर्थात्तदन्तविधिस्तत्र न हि श्रयशब्दस्य "[१]यस्येति च" इति लोपे तेषां सम्भवोऽस्तीत्यत आह

## उत्तरार्थमिति। (कै)

बाहविरित्यादौ स्वरादिसिद्धये इति भावः॥

## अकचीति। (कै)

सर्वजसिति स्थिते"ऽन्तरङ्गानपी"ति न्यायेन शीभावादि बाधित्वाऽकचि "यस्मात् प्रत्ययविधिरि"त्युक्तेरप्रत्यय इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी नस्यादित्यर्थः॥

## लुगिति। (कै)

यद्यपि "[२]हल्ङ्याद्दि" सूत्रेणाऽपि सिध्यति तथाऽपि सर्वविभक्त्युत्पत्तिपक्षे इदम्॥

## पराङ्गेति। (कै)

तथाच आमन्त्रिताद्युदात्तत्वं स्यात् "[३]चितः स प्रकृतेः" इत्यन्तोदात्तत्वेष्यत इति भावः॥

## अन्येत्वाहुरिति। (कै)

अमो मित्त्वेन परस्य इत्यस्य तत्राप्रवृत्तौ तत्संनियोगशिष्टाद्यु-

---

१ अ ६। पा ४। सू १४८॥ २ अ ६। पा १। सू ६८॥

३ चितः सप्रकृतेर्बह्वकजर्थम् (वा) चितः (६। १। १६३) एतत् सूत्रस्य वार्त्तिकम्॥

दात्तत्वाप्रवृत्त्या शेषनिघातेन तस्यानुदात्तत्वप्राप्तिरिति भावः ॥ ननु भिनत्तीत्यादौ "[1]यदागमा" इति न्यायेन न दोष इति चेन्न । अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । न चात्र तदस्ति । अन्तावयव इत्यंशस्याप्रवृत्त्याऽवयवत्वे मानाभावात् । यस्य विहितस्तदन्तावयव इति तदर्थात् । एवं च नन्दतीत्यपि[2]तदुदाहरणं बोध्यम् । भाष्ये च "[3]अम्वत" इत्युपलक्षणम् बोध्यमिति कश्चित् ॥ ननु [4]तदन्तान्तस्येति पाठेऽपि विशेष्यासंनिधानात् कथं "[5]सर्वादीनि" इत्यादावस्य प्रवृत्तिरत आह

## तत्रेति । (कै)

अव्ययेत्यस्यान्वर्थेत्यादिः । वस्तुतः शब्दरूपं विशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते । इदं तु चिन्त्यम् । शब्दसंज्ञिनोऽसत्त्वे हि स्यादप्याक्षेपः सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाभावात् । किञ्चान्वर्थत्वं योगरूढत्वं योगरूढस्थले हि योगान्वित[6]रूढार्थस्यैव प्रतीतिर्दृष्टा न तु तयोः परस्परमुद्देश्यविधेयभाव इति कस्य विशेष्य तया तदन्तविधिः स्यादिति बोध्यम् ॥

## वा प्रकारा इति । (कै)

वा सदृशा इत्यर्थः । "[7]भूवादय" इति सूत्रे द्वन्द्वैकशेषगर्भा

---

१ परिभाषेन्दुशे – ११ ॥

२ एवं च नन्दतीत्यपि तदुदाहरणं बोध्यम् । क । ख । ग । इ ॥

३ अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ... अम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् । वा ॥

४ तदन्तान्तस्येति वक्तव्यम् । भा ॥ ५ अ १ । पा १ । सू २७ ॥

६ योगान्वितरूढ्यर्थस्यैव । क । ग । इ ॥ ७ अ १ । पा ३ । सू १ ॥

बहुव्रीहिरितिभावः। एवं हि प्रभूपराभू इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम्। तस्मादयं समाधिरकज्विषय एवेति बोध्यम्। "[१]एरज्" इत्यादौ तु व्यपदेशिवद्भावेनैतन्न्यासे सिद्धिर्बोध्या॥

## न तु सामर्थ्यादिति। (कै)

उष्ट्रमुखवत् तदभावादित्यर्थः॥

## यथाऽवयवेति। (कै)

अवयवी प्रत्यवयवमवयवान्तरसन्निधौ समवेत इति भावः॥ नन्वेवमपि भूयोऽवयवसन्निकर्षस्यैवावयविप्रत्यक्षे हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह

## अथवेति॥ (कै)

ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह

## गौणेनापीति। (कै)

स्वरितत्वगुणयोगाद्यथाऽन्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः॥ तदेवाह

## [२]छत्रेत्यादि। (कै)

छत्रं गुरुश्छिद्रावरणं गौण्योच्यते तत्रैव हि च्छात्र इष्यते।

---

१ अ ३। पा ३। सू ५६॥

२ किं यस्य छत्रधारणं शीलं स छात्रः। किं चातः। राजपुरुषे प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। छत्रमिव छत्रम्। गुरुश्छत्रम्। गुरुणा शिष्यश्छत्रवच्छाद्यः शिष्येण च गुरुश्छत्रवत्परिपाल्यः॥

एवं [1]पार्श्वशब्दोऽनृजूपाये [2]अयः शूल शब्दस्तीक्ष्णोपाये दण्डाजिनो दम्भे [3]शीतोऽलसे उष्णः शैघ्र्ये गौणः। तदेव पार्श्विकायःशूलिकदाण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टः। "[4]तस्यादित" इत्यत्र चार्द्धह्रस्वशब्दोऽर्द्धमात्रालाचणिक इत्याद्युह्यम्। आदिनाऽऽ[5]"धारोऽधिकरणमि"त्यादिसंग्रहः॥

## मध्यपातिन इति। (कै)

यस्याकजादिस्तदेकदेशत्वेनाकजादेर्विज्ञानादिति वार्त्तिकार्थः॥

भाष्ये

## [6]अल्पपरिमाणानामिति। (भा)

---

१ किं यः पार्श्वेनान्विच्छति पार्श्वकः। किं चातः। राजपुरुषे प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। पार्श्वमिव पार्श्वम्। य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते पार्श्वक इति॥

२ किं योऽयः शूलेनान्विच्छति स आयः शूलिकः। किं चातः। शिवभागवते प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। अयः शूलमिवायः शूलम्। यो मृदुनोपायेनान्वेष्टव्यानर्थान्रभसेनान्विच्छति स उच्यते आयः शूलिकः॥

३ किं यः शीतं करोति स शीतको यो वोष्णं करोति स उष्णकः। किं चातः। तुषार आदित्ये च प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। शीतमिव शीतम्। उष्णमिवोष्णम्। य आशु कर्त्तव्यानर्थांश्चिरेण करोति स उच्यते शीतक इति। यः पुनराशु कर्त्तव्यानर्थानाश्वेव करोति स उच्यते उष्णक इति॥

४ अ १। पा २। सू ३२॥ ५ अ १। पा ४। सू ४५॥

६ केचिच्छब्दा अल्पपरिमाणानामर्थानां वाचका भवन्ति। य एते संख्याशब्दाः परिमाणशब्दाश्च। भा॥

अत्र परिमाणमानुपूर्वीविशेषोऽपि ॥ परिमाणेत्युपलक्षणम् परिच्छिन्नार्थानां तदाह

संख्येति ॥ (भा)

भाष्ये

अर्थानामिति । (भा)

संज्ञिभूतानां शब्दानामित्यर्थः ॥ नन्वधिकगङ्गादिजननेऽपि पुनः स्वलवदकस्याऽधिकस्योपजननेऽपि सर्वकस्य सर्वशब्दमचतमेवेत्यत आह

[१]नित्या इति । (कै)

वस्तुतः परिच्छिन्नपरिमाणकग्रहणे एकदेशविकृतन्यायस्याप्रवृत्तिरितिभाष्याशयः ॥ ननु नित्यशब्दवादेऽकच्चतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमत[२] आह

[३]यद्यपीति ॥ (कै)

अव्यतिरेककृत इति । (कै)

अनवयवत्वेऽपि ज्ञापकाङ्गेदबुद्धिं न कुर्वन्तीत्यर्थः । एकदेशसादृश्यं च मध्यपातित्वेन बोध्यम् ॥ ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भेण वार्त्तिककृतोऽन्वर्थत्वं नेष्टं किं च संज्ञिनामुपात्तत्वेनाक्षेपे मानाभाव इत्यत आह

---

१ नित्या हि शब्दा विकारोपजनरहिता इति ॥

२ इत्यत आह । क । ग । ङ ॥

३ यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकादव्यतिरेककृत इत्यर्थः ॥

अपूर्वो वेति । (कै)

एतद्वार्त्तिकमूलाद् व्याख्यानादव्यावर्त्तकमपि शब्दरूपं विशेष्य-मादाय तदन्तविधिरिति भावः ॥ अयं चाद्यादिचेति द्वन्द्वमभि-प्रेत्याह

क्षेमेति ॥ (कै)

विधीयत इति । (कै)

सूत्रे विधिशब्देन प्रतिषेधविरोधो न विवक्षित इति भावः ॥ ननु "स्वंरूपमि"त्यनुवृत्त्या स्वस्यापि संज्ञासिद्धौ किं "[1]तस्य च" इत्यनेनात आह

स्वमिति । (कै)

तेन सूत्रप्रत्याख्यानादिति तात्पर्य्यम् ॥

प्रत्ययान्तत्वादिति । (कै)

स्त्रीप्रत्ययान्तत्वादित्यर्थः ॥

स्वरूपविधिविषयैवेति । (कै)

प्रातिपदिकविशेषोपादानविहितकार्य्यविषयैवेत्यर्थः ॥

किं पुनः कारणम् (भा)

इति भाष्ये कारणशब्दः प्रयोजनवाची ॥

तज्ज्ञापयतीति । (भा)

बोधयतीत्यर्थः । अन्तग्रहणं नियमार्थमिति तात्पर्य्यम् ॥

---

१ एतत्सूत्रस्य वार्त्तिकमिदम् ॥

## नाच तदन्तादिति। (भा)

ननु "[1]समासप्रत्ययविधौ" इत्यस्य विशेषणविशेष्यभावव्यत्यासतात्पर्य्यग्राहकतया दित्यादाविवाचापि तदन्तविधिसम्भवेनान्तग्रहणसामर्थ्यादेव केवलेऽप्रवृत्तावप्रातिपदिकेनेति व्यर्थम्। एतेन "[2]ग्रहणवतेति" निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम्। किं च परमदित्यादिभ्य इवाऽनभिधानेन केवले ऽप्रवृत्तिरितिव्यर्थैव सेति चेन्न। विशेषणविशेष्यभावव्यत्यासतात्पर्य्यग्राहकतया "समास" इत्यादिप्रतिषेधवचनवदस्याप्यावश्यकत्वात् सूत्रभाष्यवार्त्तिकारूढ़तात्पर्य्यग्राहकाभावेऽपि तदन्तविधिकल्पने ऽतिप्रसङ्गापत्तेः। अत एव "[3]उगिद्वर्णग्रहणवर्जम्" इत्यादेश्चारितार्थ्यम्। अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि॥

## [4]सा तर्ह्येषेति। (भा)

"व्यपदेशिवद्भावोऽप्रातिपदिकेन" इत्येषा॥

## यदयमिति। (भा)

"पूर्वाद्" इत्यंशो ज्ञापक इत्यर्थः॥

---

१ समासप्रत्ययविधौ प्रतिषेधः। वा॥

२ ग्रहणवताप्रातिपदिकेन तदन्तविधिर्नास्ति। परिभाषेन्दुशे – ३१॥

३ एतत्सूत्रस्य वार्त्तिकम्॥

४ सा तर्ह्येषा परिभाषा कर्त्तव्या। न कर्त्तव्या। आचार्य्यप्रवृत्तिर्ज्ञापयति व्यपदेशिवद्भावोऽप्रातिपदिकेन इति यदयं "पूर्वादिनिः" "सपूर्वाच्च" (५–२–८६, ८७) इत्याह। नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्। स पूर्वात्पूर्वादिनिं वक्ष्यामीति। तत्तर्हि योगविभागं करोति॥

सर्वस्मादिति। (कै)

पूर्वशब्दव्यतिरिक्तादपीत्यर्थः॥ भाष्ये

यत्तर्हि योगविभागमिति। (भा)

न च "[1]इष्टादिभ्यश्च" इत्यत्रानुवृत्त्यर्थं तथा पाठोऽत एवानिष्टीति प्रयोगसिद्धिरिति वाच्यम्। एतद्भाष्यप्रामाण्येन तत्प्रयोगाभावानुमानात्। प्रकारान्तरेण सिद्धौ तु नास्माकं क्षतिः। एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेति दिक्। एवं च "[2]रोणी"त्यादौ केवलस्याप्राप्ते"[3]स्तस्य चेति वक्तव्यमि"ति सिद्धम्॥ ननु तदन्तविधिविषये "तस्य च" इत्यनेन केवलादपि चेद् "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति व्यर्थमत आह

अप्रातिपदिकेनेति। (कै)

ज्ञापकस्य सजातीयापेक्षत्वादितिभावः। अत एव "[4]पूर्वादिनि-रि"त्येव तदन्तविधिना सिद्धे "[5]स पूर्वाच्च" इत्यस्य "[6]ग्रहणवते"ति परिभाषाज्ञापकत्वं कैयटोक्तं संगच्छते॥

यस्मान्तेति। (कै)

अन्तग्रहणमुपलक्षणम्। अत एव "[7]एकगोपूर्वाद्" इत्यस्य केवलैकशब्दे न प्रवृत्तिः। "ग्रहणवते"त्यपि प्रत्ययविधौ निषेधस्ये-

---

१ अ ५। पा २। सू ८८॥ २ अ ४। पा २। सू ७८॥
३ तस्य च। वा। तस्य चेति वक्तव्यम्। भा॥
४ अ ५। पा २। सू ८६॥ ५ अ ५। पा २। सू ८७॥
६ परिभाषेन्दुशे – ३१॥ ७ अ ५। पा ४। सू ११८॥

वानुवादकं लाघवात्। स्पष्टं चेदम् "[1]असमासे निष्कादिभ्य" इति सूत्रे भाष्यकैयटयोः॥ रथ्ये "[2]तद्वहति रथ" इतियत्। गौत्ये "[3]नौ वयोधर्म" इति। हल्ये "[4]मतजनहलात् करणजल्पकर्षेषु" इति यत्॥ भाष्ये

**परमरथ्य इति।** (भा)

रथाद्रथाङ्गवोढोरित्येवं शैषिकप्रकरणे पाठे सिद्धे "तद्वहती"-त्यत्र रथग्रहणं रथांशे तदन्तविधौ ज्ञापकं शैषिके यति हि द्विरथ इत्यादौ "[5]द्विगोर्लुग्" इति लुक् तत्र सूत्रेऽचीति न सम्बध्यते-ऽनभिधानाच्च नातिप्रसङ्गः। वहत्यर्थे तु द्विरथ्य इत्येव। तस्या-प्राग्दीव्यतीयत्वात्। इतरयोस्तु वाचनिक एव॥ यत्तु "[6]हलसीराट्ठग्" इत्यपि "[7]तस्येदम्" "तद्वहति" इत्यधिकारे च द्विः पठ्यते तत्तु इदं शब्देन वोढृरूपार्थग्रहणज्ञापकं तदाह

**ठञ्च भवतीति॥** (कै)

भाष्ये

**सुपाञ्चालक इत्यादि।** (भा)

"[8]जनपद" इत्यधिकारे "[9]अवृद्धादपि बहु" इति वुञ्

---

१ अ ५। पा १। सू २०॥
२ अ ४। पा ४। सू ७६। अ ४। पा ३। सू १२१॥
३ अ ४। पा ४। सू ९१॥
४ अ ४। पा ४। सू ९७॥
५ अ ४। पा १। सू ८८॥
६ अ ४। पा ४। सू ८१॥
७ अ ४। पा ३। सू १२०॥
८ अ ४। पा २। सू १२४॥
९ अ ४। पा २। सू १२५॥

तद्विधौ चायं तदन्तविधिः। "[1]सुसर्वार्द्धाज्जनपदस्य" "[2]दिशो-मद्राणाम्" इत्युत्तरपदवृद्धिः॥

वृद्धिमानिति। (कै)

वृद्धिनिमित्तमित्यर्थः॥

अवयवानामिति। (कै)

पूर्वपदत्वे इति शेषः। "[3]पूर्वापराधरे"त्येकदेशिसमासः। "[4]सन्धिवेलाद्यृतु" इत्यण्। "[5]अवयवादृतोः" इत्युत्तरपदवृद्धिः॥ ननु शरच्छब्द एव कालवाची न तु पूर्वशरच्छब्द इति कथं ठञ् इत्यत आह

तच्च हीति। (कै)

अत एव "[6]सन्धिवेलादि"सूत्रे नक्षत्राणां कालेन विशेषणं संगच्छते॥ भाष्ये

[7]ठञ्विधौ संख्याया इति। (भा)

"[8]तदस्य परिमाणम्" "[9]संख्यायाः संज्ञा" इति सूत्रे इति भावः॥

द्वे षष्टी परिमाणमस्येति। (कै)

संघादिरत्र विशेष्यः॥

---

१ अ ७। पा ३। सू १२॥ २ अ ७। पा ३। सू १३॥
३ अ २। पा २। सू १॥ ४ अ ४। पा ३। सू १६॥
५ अ ७। पा ३। सू ११॥ ६ अ ४। पा ३। सू १६॥
७ ठञ्विधौ संख्यायाः। वा। ठञ्विधौ संख्यायाः प्रयोजनम्। भा॥
८ अ ५। पा १। सू ५७॥ ९ अ ५। पा १। सू ५८॥

## प्रतिषेधादिति। (कै)

"[1]आर्हादगोपुच्छाद्" इत्यनेन तस्य प्रत्ययप्रतिषेधत्वात्तत्र [2]तदन्तविधिर्भविष्यत्येव। तेन "[3]प्राग्वतेः" इति ठञ्विधायके "[4]संख्यायाः संज्ञा" इति सूत्रे तदन्तविधिसत्त्वेन "प्राग्वतेः" इत्यधिकारप्राप्तष्ठञ् भवतीत्यर्थः॥

## पुनः प्रत्ययार्थसमर्थेति। (कै)

अस्येति प्रत्ययार्थः। तदितिसमर्थविभक्तिः। अनुवर्त्तमानस्य लुक्सम्बद्धतया पुनरुपादानेन तद्विलक्षणत्वसूचनादनेन विहितस्य लुगभाव इत्यर्थः॥

## इते वेति। (कै)

अनुवर्त्तमानसोऽस्येति सहितपरिमाणमित्यनेन विहितस्य लुकि पुनस्तदस्य परिमाणमिति वचनसामर्थ्यात् स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद् द्विगुनिमित्तत्वाभावाद्वा लुगभाव इत्यर्थः। इदं वृत्तिकारमतेनोक्तम्। वस्तुतस्तु "[5]तदस्येति" पुनरुपादानमात्रेणार्हीयत्वापगमे तत्त्वेऽपि लुगभावे वा द्वे षष्टी जीवितपरिमाणमस्येत्यर्थेऽनेन ठञि लुकमाशङ्क्य "कालाद्" इत्यधिकारस्थेन "[6]तमधीष्ट" इति सूत्रेण टञा द्विषाष्टिकः साधितो भाष्ये

---

१ अ ५। पा १। सू १९॥
२ तदन्तविधिर्भवत्येव। क। ख। ग। इ॥
३ अ ५। पा १। सू १८॥ ४ अ ५। पा १। सू ५८॥
५ अ ५। पा १। सू ५७॥ ६ अ ५। पा १। सू ८०॥

कालग्रहणेन यथाकथंचित्कालवाचिनो ग्रहणमिति चोक्तं तद्वि-विरुध्येत । तद्गृह्णीत्याऽनेनापि ठञि लुगभावात् । तस्माद् द्वे षष्ठी परिमाणमस्य संघस्य स परिमाणमस्येति भाष्योदाहरणार्थः । तत्र द्विगुनिमित्तत्वाभावान्न लुक् । संघे द्विसंख्यानतिरेकस्यापि सत्त्वात् तस्यापि संख्याशब्दत्वमित्यपरे ॥ भाष्ये

[1]पदाङ्गेति । (कै)

तदन्तविधेरपवादोऽयम् । अत एव "तस्य च" इति पुनर-भिहितं तदन्तविधौ हि बहुच् पूर्वेऽपि स्यात् तच्च नेष्टमिति वार्त्तिकाशयः ॥

पदशब्देनेति । (कै)

अत एव भाष्ये उत्तरपदाधिकारे प्रयोजनदानम् ॥ तदन्त-विध्यपवादत्वादस्यापि विशेषण एव प्रवृत्तिरित्याशयेनाह

उत्तरपदेनेति । (कै)

शब्दरूपं विशेष्यमादायेत्यन्ये ॥

समासान्त निषेध इति । (कै)

"[2]ऋक् पूरब्" इति प्राप्ते । अत एव "[3]द्व्यन्तरुपसर्ग" इतीत्त्वं न तत्र ह्याप इति कृतसमासान्तानुकरणं व्यत्ययेन षष्ठ्यर्थे प्रथमा । अत्र चेदमेव भाष्यं मानमित्याहुः ॥

---

१ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ॥

२ अ ५ । पा ४ । सू ७४ ॥ ३ अ ६ । पा ३ । सू ९७ ॥

## तत्वमपीति । (कै)

.वार्त्तिकस्थेन "[1]दीर्घविधौ" इति विषयनिर्देशेनेदं विरुध्यते ॥ भाष्ये

## [2]पद्युष्मदस्मदस्थ्यादीति (भा)

समस्तं पृथक् पदम् ॥

## अनडुहः (भा)

इति लसमस्तमेव । अन्यथा नुमोऽनडुच्छब्दमात्रान्वयित्वेना- सामर्थ्यात्समासो न स्यात् । पदाद्योऽनडुहो नुम् च तदन्तविधिं प्रयोजयन्तीत्यर्थः । समासे एव "[3]पादस्य लोप" इत्यन्तलोपविधा- नात् सामर्थ्यादेव तदन्तविधिर्भविष्यतीत्याशयेन काका पृच्छति भाष्ये

## [4]अस्तिचेति ॥ (भा)

आचार्य्यदेशीय आह

## एवं तर्हीति । (भा)

सन्निधेर्लिङ्गं वलीय इति भावः ॥

---

१ महदप्सुस्वनसृणां दीर्घविधौ । वा ॥

२ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् । वा ॥

३ अ ५ । पा ४ । सू १३८ ॥

४ अस्ति चेदानीं कश्चित् केवलः पाच्छब्दो यदर्थो विधिः स्यात् । नास्तीत्याह । एवं तर्ह्यङ्गाधिकारे प्रयोजनं नास्तीति ज्ञात्वा पदाधिकारस्य प्रयोजनमुक्तम् ॥

तदन्तविधिरिति । (कै)

तदपवाद उत्तरपदविधिरित्यर्थः ॥ अर्थाधिकाराश्रयेण परिहरति

नैषेति ॥ (कै)

नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणाविति पूर्वोदाहृतासङ्गतिरत आह

एवं चेति । (कै)

अर्थभेदेन तत्साध्विति भावः ॥ पादशब्दादाख्यानणिचि णिनिमित्तकटिलोपस्य स्थानिवत्त्वात्पदादेशाऽप्राप्तेराह

पदेरिति । (कै)

"क्वौ लुप्तम्" इति निषेधान्न णिलोपस्य स्थानिवत्त्वमित्यर्थः । अत एव "पादस्य पदाज्याति" इति नासूचि तथा सति तस्यैव प्रतिपदोक्तत्वात् पद्भावः स्यात्स्येतितात्पर्य्यम् ॥

इह । (कै)

"[१]द्युपथि" इति प्रयोजनवार्त्तिके ॥

इत्यत एवेति । (कै)

"पद्युपदि"ति वार्त्तिकस्यादित्यर्थः ॥

आदित्यधिकारादिति । (कै)

"[२]आच्छी"त्यतः । अन्यथा नुम् बाधकः स्यात् । अम् च नुमो बाधकः स्यादिति भावः ॥

---

१ द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् । वा ॥

२ अ ७ । पा १ । सू ८० ॥

**अन्यथाऽमामोरेवेति।** (कै)

"यतुः" याद्दचर्य्यादितिभावः॥

**अन्यच्च चेति।** (भा)

भाष्यादङ्गाधिकारादन्यच प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा नोदयति॥

**यद्येवमिति।** (कै)

"अन्यच" इत्यनेन भाष्येण "[१]इको झल्" इत्यादौ निषेधाभावात्तदन्तविधिरनुज्ञायते। एवञ्च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तच वर्णग्रहणमिति परिहरति

**उच्यत इति॥** (कै)

**सिद्धे तदन्तविधाविति।** (कै)

उक्तवचनेन वाचनिक इत्यर्थः। यत्तु प्रत्ययाचिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रसिद्ध एव स इति। तन्न। तादृशार्थस्य नियताचेपे आचिप्तस्य वा शाब्देऽन्वये मानाभावात्। किञ्च "[२]वनो रच" इत्यादौ "समासप्रत्ययविधौ" इत्यनेन अत्रापि निषेधापत्तिः। मम तु सौत्रस्यैव स निषेध इति न दोषः॥ पञ्चम्यन्तात् परः प्रत्ययो यत्र कार्य्यान्तर विधानायाऽनूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनम् इति वार्त्तिकार्थस्तदाह

**यत्रेत्यादि॥** (कै)

---

१ अ १। पा २। सू ९॥ २ अ ४। पा १। सू ७॥

परिगृह्यते । (कै)

अनुद्यते ॥

नत्वं स्यादिति । (कै)

वृषन्तीर्णत्यादौ धातोस्तकारस्य तत्पूर्वदस्य च तत्स्यादित्यर्थः ॥

न च संज्ञाविधाविति । (कै)

संज्ञया विधावित्यर्थः इत्यभिमानः ॥

यत्र हीति । (कै)

संज्ञाया विधौ स निषेधो न तु संज्ञया विधौ ॥

तर्हीति । (कै)

प्रदेशेषु तदन्तग्रहणं यदि तर्हीत्यर्थः ॥

पुनस्तदन्तेति । (कै)

घादिभिरुत्तरपदस्य विशेषणादिति भावः ॥

तस्मादिति । (कै)

"[1]संज्ञाविधौ प्रत्ययग्रहणे" इति "[2]प्रत्ययग्रहणे चापञ्चम्या" इति वचनाभ्यामिति भावः ॥

नायमर्थ इति । (कै)

प्रत्यासत्त्या चास्यार्थस्य प्रसक्तिः ॥

पञ्चम्यन्तादिति । (कै)

पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः । "समासप्रत्ययविधौ" इति तु सौत्रस्य निषेध इति न तेनाऽस्य गतार्थतेतिभावः ॥

---

१ परिभाषेन्दुशे २८ ॥ २ प्रत्ययग्रहणे चापञ्चम्याः ॥

## तत्प्रत्ययादेव। (कै)

. विकारावयवविहितप्रत्ययादेव। एवं चौष्ट्रविकारादौष्ट्रकादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः॥ भाष्ये

## [1]यञिञोः फगिति। (भा)

यद्यपि "[2]ङ्याप् प्रातिपदिकाद्" इत्यधिकाराद् "अपञ्चम्या" इति निषेधस्तत्र प्राप्नोति तथापि न तद् व्यधिकरणं विशेषणं किन्तु "[3]यञिञोः" इति पञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति "अपञ्चम्या" इत्यस्याऽविषयोऽयमितिभावः॥

## तस्मादिति। (कै)

"[4]प्रत्ययग्रहणे यस्मात् स विहित" इति नियमोऽत्रापि तदन्तविधावपेक्ष्य एव। एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय। अन्यथा परमगार्ग्यशब्दात् फकि पारमगार्ग्यायण इति स्यादितिन्यायव्युत्पादनार्थमित्यर्थः॥ नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः। नहीदृशेऽर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसंभावनापीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति चेन्न। परमगार्ग्यैकदेश गार्ग्यशब्दादेव प्रत्ययः परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायादित्यदोषात्। विशिष्टैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव निष्कृष्यैकार्थीभाव एव वृत्तौ

---

१ यञिञोः फग् भवति॥ २ अ ४। पा १। सू १॥
३ अ ४। पा १। सू १०१॥ ४ परिभाषेन्दुशे २४॥

निमित्तमित्यत्र न मानम् । अत एव "[1]अनुपसर्जनात्" इति सूत्रे कुम्भकारीशब्दैकदेशात् कारीशब्दादण्णुत्पत्तिः शङ्किता भाष्ये । अस्य कैयटस्याप्यत्रैव तात्पर्य्यम् । "[2]एतन्न्याय" इत्यस्यापि "यस्मादिहित" इत्यादिन्यायेन समस्तैकदेशात् प्रत्यय इत्येतन्न्यायेत्यर्थः । नन्वेवं "[3]सुपि च" "[4]रोः सुपि" इत्यादौ सुबन्ते इत्यर्थापत्तिः । न हि तत्र पञ्चम्यन्तात्परत्वेन प्रत्ययो विशेष्यत इति वाच्यम् । "[5]तस्मिन्निति" परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थिताङ्गादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः ॥ ननु "येन

---

१ अ ४ । पा १ । सू १४ । अत्र भाष्यम्—इदं तर्हि प्रयोजनम् प्रधानेन तदन्तविधिर्यथा स्यात् । कुम्भकारी नगरकारी । अत्र हि प्रत्ययग्रहणे यस्मात् स तदादेर्ग्रहणं भवतीत्यवयवादुत्पत्तिः प्राप्नोति । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति । कृद्ग्रहण इत्युच्यते नचैतत्कृद्ग्रहणम् । कृदकृद्ग्रहणमेतत् कृदप्ययमण् तद्धितोऽपि एवं तर्हीकारान्तेन समासो भविष्यति । यद्येवं लभ्येत कृतं स्यात्तत्तु न लभ्यम् । किं कारणम् । अत्र हि गतिकारकोपपदानां कृद्भिः सह समासो भवतीति समास एव तावद्भवति समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोति । अवयवादुत्पत्तौ सत्यां को दोषः । कौम्भकारेयो न सिध्यति । अवयवस्य वृद्धिस्वरौ स्याताम् । तस्मादनुपसर्जनाधिकारः ॥

२ अत्रैव कैयटे ॥ ३ अ ७ । पा ३ । सू १०२ ॥

४ अ ८ । पा २ । सू ६९ ॥ ५ अ १ । पा १ । सू ६६ ॥

नाप्राप्ति" न्यायेनायं निषेधो वाचनिकतदन्तविधेरेवेति "[1]घरूप" इत्यादौ उत्तरपदस्य विशेष्यतया प्राप्ततदन्तविधिः स्यादेवेत्यत आह

उत्तरपदेति। (कै)

अन्यथा "[2]हृदयस्य हृल्लेखयदण्" इत्यत्राण् ग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात्। लेख इत्यणन्तमेव तत्र गृह्यते घञन्तस्य त्वनभिधानात्तत्राग्रहणमेवेति भावः। अयमपि निषेधो विशेषण-विशेष्यभावव्यत्याससूचक एवेत्याह

तत्रेति॥ (कै)

प्राधान्येनेति। (कै)

शब्दरूपापेक्षयेत्यर्थः॥

धातोरिति। (कै)

इदं "[3]स्यतासि" विशेषणमिति चिन्त्यमिदम्। "[4]सुपि च" इत्यादौ अस्मदुक्तरीत्यैवात्रापि समाधानं बोध्यम्॥ नन्वलाऽनर्थ-केनेत्ययुक्तमर्थवत्परिभाषया विरोधादत आह

अर्थवदिति॥ (कै)

स्थितमिति। (कै)

"[5]स्वंरूपम्" इतत्रेति शेषः॥ कुतो हेतोरित्यत आह

---

१ अ ६। पा ३। सू ४३॥ २ अ ६। पा ३। सू ५०॥
३ अ ३। पा १। सू ३३॥ ४ अ ७। पा ३। सू १०२॥
५ अ १। पा १। सू ६८॥

## वर्णरूपतया तस्येति । (कै)

"वर्णरूपतया यस्ये"ति पाठे नार्थवत्त्वारूपमित्यतः प्राक् तस्य हीतिशेषो बोध्यः ॥

## अर्थवत्तेति । (कै)

तत्त्वसमानाधिकरणं रूपमित्यर्थः । "वर्णसमुदायग्रहणं प्राप्तम्" इति पाठे ऽनर्थकेत्यादिः । तदपि प्राप्तमिति शेषः ॥

## गुणत्वादिति । (कै)

तदन्तविधिनियमशेषत्वादित्यर्थः । वर्णसमुदायेन चेत्तदन्तविधिस्तर्ह्यर्थवतैवेति फलितम् । अन्ये तु अङ्गाधिकारे तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् ।

## [1]वर्णग्रहणं च (वा)

इत्यन्वाख्यानवार्त्तिके ज्ञापकसिद्धजातिग्रहणे न मानम् । एवम् "[2]अल्लैव" इत्यत्रापि "[3]एकत्वसंख्यागुणत्वाद्" इत्यपि चिन्त्यम् । जातिपरत्वे तद्गतसंख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषानुद्धारादित्याहुः ॥

## दीर्घोभवतीति । (कै)

"[4]इन्हन्" इति नियमेनानिवर्त्तितत्वादिति भावः । अर्थवत् परिभाषासिद्धार्थानुवादोऽयम् ॥

---

१ वर्णग्रहणं च सर्वत्र । वा ॥

२ अल्लैवाऽनर्थकेन नान्येनानर्थकेनेति वक्तव्यम् ॥

३ अल्लैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते । कै ॥

४ अ ६ । पा ४ । सू २१॥

**संपर्य्युपेभ्य इति। (कै)**

वृत्तिपाठमनुसृत्येदम् ॥

**तस्योच्छब्देनेति। (कै)**

**[1]वा पदान्तस्य (पा)**

इत्यतः पदग्रहणमनुवर्त्त्य तस्योदा विशेषणादुदन्तस्य पदस्य इत्यर्थ उचितः ॥ नन्वव्यभिचारात्तवर्गेणोदोऽपि विशेषणं व्यर्थमत आह

**वा निवृत्तत्वादिति। (कै)**

पदग्रहणमपि फलाभावान्निवृत्तं विशेषणं चेत्यपि बोध्यम् ॥

**पदप्रकरणात्। (कै)**

**[2]एङः पदान्तादति (पा)**

इत्यतः ॥ नन्वत्र करोतिर्न भूषणार्थोऽत आह

**भूषणेति। (कै)**

पायसं भूषयतीत्यर्थसम्भवादिति भावः ॥

**[3]केवलपदाधिकारोऽपीति। (कै)**

अन्यथाऽसन्देहायोत्तरपदेत्येव वदेदिति भावः ॥ भाष्ये

**नापीति। (भा)**

समासचरमावयवे तस्य रूढत्वादिति भावः ॥ नन्वेवं तदन्त-विध्यभावे वृत्रहणावित्याद्यसिद्धिस्तदन्तविधौ तु क्षीरपाणावित्यत्र दोषोऽत आह

---

१ अ ८। पा ४। सू ५९ ॥ २ अ ६। पा १। सू १०९ ॥

३ पदाङ्गाधिकारे इत्यत्र च केवलपदाधिकारोऽपि गृह्यते ॥

अलैवेति ॥ (कै)

ननु वार्त्तिकोक्तोऽपि फलतस्तदन्तविधिरेवेत्यत आह

प्राथम्येति । (कै)

सौत्रतदन्तविधिरेव ज्यायान् न तु वार्त्तिकोक्तोत्तरपदस्य इत्यंश इति नियम आवश्यक इति भावः ॥

परमादिरिति । (कै)

परमादिः समास उद्देश्यो महच्छब्दो न भवतीति विधेयं बोध्यम् ॥ भाष्ये

अन् इति । (भा)

"[1]अल्लोपोऽनः" "[2]इन्हन्पूषे"ति "[3]अत्वसन्तस्य" "[4]मन" इत्यादिषु वर्त्तमानानीत्यर्थः ॥

अर्थवानेवासिति । (कै)

इदं चिन्त्यम् । कृते ह्यागमे तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वादन्यत्र भाष्ये स्पष्टमुक्तत्वाच्च ॥

न्यायेनेति । (कै)

अत एव "[5]इको यणचो" त्यादौ न दोषः ।

[6]यस्मिन् विधिः (वा)

इति वाचनिकमेव "यस्मिन्" इति सप्तम्यन्तोपलक्षणं सप्तम्यन्तं यच्च विशेषणं तच्चेति यावत् ॥

---

१ अ ६ । पा ४ । सू १३४ ॥ २ अ ६ । पा ४ । सू १२ ॥
३ अ ६ । पा ४ । सू १४ ॥ ४ अ ३-४ । पा २-१ । सू ८२-९ ॥
५ अ ६ । पा १ । सू ७७ ॥ ६ यस्मिन्विधिस्तदादावल् ग्रहणे । वा ॥

# वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१।७३॥

ननु वृद्धिग्रहणाभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्य-मेव स्यादिति तन्मात्राक्षेपोऽनुपपन्न इति शङ्कते

**असतीति ।** (कै)

संकोचे प्रमाणाभावादच् शब्देन सर्वेष्वचु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति

**यस्येति ॥** (कै)

ननु "अचाम्" इति[1] निर्द्धारणे षष्ठी निर्द्धारणं च तुल्य-जातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नाति प्रसक्तिरत आह

**असतीति ॥** (कै)

**समीपार्थ इति ।** (कै)

पूर्वसमीपार्थ इत्यर्थः । एवं च तन्निरूपितसम्बन्धे षष्ठी न तु निर्द्धारण इति भावः । यस्याचामादिर्हलित्यर्थः स्यादिति तात्पर्य्यम् ॥

**नामधेयस्य त्विति ।** (कै)

"वा नामधेयस्य" इति वचनादिति भावः ॥ भाष्ये

---

१ यतश्च निर्द्धारणम् ( २ । ३ । ४१ ) इत्यनेन षष्ठी ॥

अचाऽपीति । (भा)

अण्प्रकृतावपीत्यर्थः ॥ नन्वेवं हलादेः सर्वस्य वृद्धत्वे "[१]प्रस्थेऽवृद्धम्" इति सूत्रे कर्क्यादिप्रतिषेधोऽनर्थकोऽत आह

प्रस्थ इति ॥ (कै)

तदित्यस्यानुपादान इति । (कै)

तदित्यस्याप्यनुपादाने इत्यर्थः ॥

वृद्धेरेवेति । (कै)

तथाच प्रदेशेषु त्यदादिविषये मुख्यो वृद्धशब्दोऽन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्य प्रसङ्ग इति भावः ॥ ननु "[२]मालादीनाम्" इति लिङ्गादादिसहचरितो यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह

मालादीति ॥ (कै)

भाष्ये

अथादीति । (भा)

"अचाम्" इति षष्ठ्युपादानसामर्थ्यादादिशब्दोऽध्याहरिष्यत इति प्रश्नः । यस्यावयविनोऽवयवानामचां मध्ये वृद्धिरप्यवयव इत्यध्याहारं विनैवार्थसम्भवेऽध्याहारे मानाभाव इत्युत्तराशयः ॥ तत्र प्रसङ्गादादिग्रहणसत्त्वासत्त्वयोराद्यन्तवत्सूत्रस्यैकग्रहणप्रयोजनं दर्शयति

सति चेति । (कै)

असत्येकग्रहणे पूर्वसहितेऽपि भाशब्दाकारे आदिवत्त्वात् सभासन्नयनस्यापि वृद्धत्वं स्यादिति भावः ॥

---

१ प्रस्थेऽवृद्धमकर्क्यादीनाम् ( ६ । २ । ८७ ) ॥
२ अ ६ । पा २ । सू ८८ ॥

**अच इति। (कै)**

. "एरच" इत्यर्थः। तत्र हि धातोरित्यधिकार इति भावः। घञपोः स्वरे विशेषः॥ नन्वेवं यस्य वृद्धिरवयव इत्येव सिद्धेऽचामितिव्यर्थमत आह

**अचामिति। (कै)**

तथाच राट्शब्दादेर्वृद्धत्वं नेति भावः। कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाजपेक्षया नत्वनादित्वं तस्यैव तेन ग्रहणान्न सभासन्नयने दोषः। अचामिति बहुत्वमविवक्षितं तेन मालीयादिसिद्धिः॥ ननु यत्र हल्घटिता अच एव सन्निविष्टास्तत्रास्य प्रवृत्तिरुचिता न तु हलन्तरितेष्वचु इति मन्यमानः शङ्कते भाष्ये

**[१]वृद्धसंज्ञायामिति॥ (भा)**

नन्वस्त्येव मातृकापाठे सन्निवेशोऽत आह

**सर्वस्येति। (कै)**

वृद्धत्वप्रयुक्तकार्य्यभाज इत्यर्थः। वृद्धत्वनिबन्धनकार्य्यस्य प्रातिपदिके सत्त्वादिति भावः॥

**अचामित्यनेन च केवलानामिति। (कै)**

सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरिति भावः। अज्मात्रसम्बन्धिनो यस्य समुदायस्याऽऽदिर्वृद्धिरित्यर्थः स्यादिति तात्पर्य्यम्॥ ननु प्रथमान्ताच्पदाभावादजेवादिरित्ययुक्तमत आह

---

१ वृद्धसंज्ञायामजसंनिवेशादनादित्वम्। वा॥

अजिति । (कै)

निर्द्धारणषष्ठ्याश्रयणान्निर्द्धारणस्य समानजातीयविषयत्वाच्च त-ल्लाभ इति भावः । अजन्त्यसमुदायेऽप्यजपेक्ष एवादिर्गृह्यत इति भाष्याक्षरार्थः ॥

[1]वृद्धिविशेषणार्थेति । (कै)

तस्याः प्रधानत्वादचामिति तस्या एव विशेषणं स्यादित्यर्थः । निर्द्धार्यमाणनिर्द्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः । तत्र वृद्धेरच्त्वाव्यभिचाराद् विशेषणसामर्थ्येन आक्षरसमाम्नायिकाजूप-लक्षणवृद्धिपरिग्रह इति भावः ॥

आकारस्य निवृत्तिप्रसङ्ग इति । (कै)

वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः ॥ तत्रासाधा-रणं प्रत्युदाहरणमाह

[2]ततश्चेति ॥ (कै)

भाष्योक्तस्य साधारणत्वं ध्वनयन्नाह

समुदायेति । (कै)

यस्येत्याद्यपेक्षया षष्ठीतिभावः । एवं यस्येति आद्युपजनित-व्यतिरेके षष्ठीमङ्गीकृत्याऽचामिति निर्धारणषष्ठ्यां दोषोऽभिहितः ॥ अनुपजनितव्यतिरेके यस्येति षष्ठ्यामपि तं वक्तुं भाष्ये एकान्तादि-त्वमुक्तं तद्व्याचष्टे

---

१ वृद्धिविशेषणार्था निर्द्धारणे षष्ठी स्यात् ॥

२ ततश्चाश्वलायन इत्यत्र न स्यात् ॥

[1]एकान्ता इति। (कै)

यस्य प्रातिपदिकस्येतिसम्बन्धः। एवं च यत्प्रातिपदिकावयवभूताऽचामादिर्वृद्धिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः॥ नन्वादिशब्दोपादानादेव सर्वेषामचामिति लभ्यतेऽत आह

[2]आदिग्रहणमिति॥ (कै).

उभयरूपत्वेऽपीति। (कै)

अज्झल्रूपत्वेऽपीत्यर्थः। यस्येति नाचां विशेषणं तेषामन्यविशेषणत्वाद् नाप्यादेर्व्यवहितत्वात् किन्तु वृद्धेः। अचामिति चादेर्विशेषणं सन्निधानाद् न वृद्धेर्व्यवहितत्वात्। एवं च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याऽजपेक्षादित्वस्योपपत्तये मध्येवर्त्तमानापि हलाकृतिर्न विवक्ष्यते इति भावः॥

सकलाजिति। (कै)

संकोचे मानाभावः॥

सतोऽपीति। (कै)

आदौ मध्ये वेतिशेषः॥

अचामितीति। (कै)

केवलाच् सन्निवेशासम्भवादिति भावः॥

---

१ एकान्ता अवयवा अचः प्रातिपदिकस्य तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः॥

२ आदिग्रहणं त्वन्यनिवृत्त्यर्थं स्यात्॥

[1]स्वरविधाविति। (कै)

स्वरे विधेये इत्यर्थः॥

अयोग्यत्वादिति। (कै)

स्वराणामज्धर्मत्वादिति भावः। अत एव "[2]यतोऽनाव" इत्यनाव इति प्रतिषेधः सार्थकः॥

[3]नुड् ग्रहणादिति। (कै)

हल्स्वरप्राप्तिविषयकमेवाऽनाव इति ज्ञापकमितिभावः। अन्यथा नुटोऽविद्यमानत्वाद्चक्षणानित्यादौ "ह्रस्वाद्" इत्येव मतुप उदात्तत्वं सिद्धमिति तदैयर्थ्यं स्यादिति तत्तात्पर्य्यम्॥

[4]पौरुषेयमिति। (कै)

आधुनिकमित्यर्थः॥

गृह्यते इति। (कै)

अत्र वार्त्तिकेत्यादिः। अत एव "[5]एङ् प्राचां देशे" इति चरितार्थं रूढ़माचस्य नामत्वेन ग्रहणे तदैयर्थ्यं स्पष्टमेव। घटीय इति "[6]गहादि" त्वात्साधु घाट इति त्वसाधु। अत एव भाष्ये देवदत्तशब्द उदाहृत इति भावः॥ भाष्ये

---

१ यथा स्वरविधौ अयोग्यत्वाद्व्यञ्जनमविद्यमानवद्वेवमिहाप्यचामिति वच-नादित्यर्थः॥

२ अ ६। पा १। सू २१३॥ ३ ह्रस्वनुड्भ्यां मतुप्। ६। १। १७६॥

४ वा नामधेयस्य (वा) इति वार्त्तिके पौरुषेयं नाम गृह्यते॥

५ अ १। पा १। सू ७५॥ ६ अ ४। पा २। सू १३८॥

[1]**गोत्रान्ताद्वेति ।** (भा)

गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः । चारायणो गोत्रान्तो यथाऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाभावेऽपीत्यर्थः । वेत्यनेन वृद्धसंज्ञा वा कर्त्तव्या इदमुपसंख्यानं वेत्युक्तं भवति ॥

**युवेतीञिति ।** (कै)

प्रकृते च गोत्रशब्देनापत्यमात्रम् । अपत्याधिकारादन्यत्वादिति भावः ॥ ननु "ओदनपाणिनीया" इत्यत्र वृद्धत्वे कोऽसमस्तवदतिदेशे इञन्तत्वाद् "[2]इञश्च" इत्यणिति भेदः स्यादत आह

**तेनेञश्चेति ।** (कै)

येन यूनि विहितो न गोत्रे तेनेत्यर्थः । "इञश्च" इत्यत्र गोत्र इति वर्त्तते पारिभाषिकं च तत्र गोत्रं गृह्यते इति भावः । यत्तु तेन लुकेति तन्न प्रत्ययलक्षणस्य दुर्वारत्वात् ॥ भाष्ये [3]जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेऽपि द्रष्टव्यम् ॥

[4]**अणिति ।** (कै)

स च केवलेभ्यः कण्वादिभ्यस्तस्यापवादः । वृद्धसंज्ञापक्षे तु समुदायस्य कण्वादिषु पाठाभावात् प्रत्ययविधौ तदन्तविधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥

———

१ गोत्रान्ताद्वाऽसमस्तवत् । वा ॥ २ अ ४ । पा २ । सू ११२ ॥

३ जिह्वाकात्यहरितकात्यवर्जम् । वा ॥

४ कण्वादिभ्यो गोत्रे । ४ । २ । १११ ॥

# त्यदादीनि च ।१।१।७४॥

भाष्ये

[1]अनुवर्त्तते इति । (भा)

पूर्वसूत्रात् परतो गच्छति नवेति विचारः ॥ ननूपसर्जनानां गणवहिर्भावेन कथन्तदादित्वमत आह

आदीति । (कै)

सामर्थ्याद् भूतपूर्वगतिराश्रयिष्यत इति भावः ॥

अचामित्यस्य त्विति । (कै)

इहादिग्रहणसम्बन्ध एव भाष्यतात्पर्य्यमिति भावः ॥ व्यपदेशि-वद्भावेन केवलेऽपि सिद्धमिति इह च नेति भाष्यमयुक्तमत आह

व्यपदेशिवदिति । (कै)

स निषेधः प्रत्ययविधौ तन्मात्रोपयोगिसंज्ञाविधौ चेति भावः । तदनाश्रित्यैवेदम् ॥ ननु नपुंसके भावे क्तल्युटौ घञपवादौ स्त्र्यधिकारात् परतो वासरूपविधिश्च नेति सम्बन्धमिति नपुंसक-प्रथमैकवचनमनुपपन्नमत आह

द्वितीयान्तमिति ॥ (कै)

नपुंसकेऽपीति । (कै)

"घञजपः पुंसि" इति भावघञ्विषयकं क्तादिस्त्विति भावः ॥

---

[1] यस्याचामादिग्रहणमनुवर्त्तते उताहो न ॥

चेतनावतस्त्यागोपादाने सम्भवतो यस्यादिरित्यस्य तु कथं ते स्यातामत आह

एतदिति। (कै)

योग्यत्वादादिरित्यस्यैकत्वेकवचनान्तेन सम्बन्ध इति शेषः। तुल्यजातीयस्येत्युपलक्षणं "त्यदादीनि" इत्यनेनाऽऽदिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम्॥

---

# एङ् प्राचां देशे। १। १। ७५॥

[१]कुणिनेति। (कै)

विधेयसम्बन्धलाभात् प्राङ्ग्रहणमाचार्य्यनिर्देशार्थमन्यथा प्राग्देश इत्येव वदेदिति भावः॥ लक्ष्याविषम्याय च व्यवस्थितविभाषाश्रयणं तत्फलमाह

तेनेति॥ (कै)

अन्येन त्विति। (कै)

श्रुतान्वये सम्भवत्यन्येनान्वयोऽनुचित इति तद्भावः॥ वाहीकश्च देशविशेषस्तत्र स ग्रामः प्रागदेशबहिर्भूतः। वाहीकदेशश्चोभयसम्बद्धः प्रागदेशबहिर्भूतो वा। अत एव "[२]अव्ययात्यप्" इति सूत्रे

---

१ कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषात्वञ्च। "ऋषिरासीन् महावीर्य्यः कुणिर्गर्गो महायशाः" ॥

महाभारत – कर्णपर्व – ५३ अध्याय॥

२ अ ४। पा २। सू १०४॥

[१]शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता । एतेनोभयवहिर्भूता वाहीका इत्यपास्तम् ॥

---

१ "तेभ्यष्ठञ्ञिठौ" इति वार्तिकव्याख्यानावसरे उक्तं भगवता । तथा च भाष्यम् "तेभ्यस्त्वबादिभ्यष्ठञ्ञिठौ भवतो विप्रतिषेधेन । अव्ययात्त्यब्भवतीत्यस्यावकाशः । अमात्यः । ठञ्ञिठयोरवकाशः । कारन्तविकी । कारन्तविका । आराम्नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । आरात्की । आरात्का । तीरोत्तरपदादञ्भवतीत्यस्यावकाशः । काखतीर । काखतीरी । ठञ्ञिठयोः स एव । कास्तीरो नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । कास्तीरिकी । कास्तीरिका । रूप्योत्तरपदाञ्ञो भवतीत्यस्यावकाशः । चयारूप्य चायारूप्या । ठञ्ञिठयोः स एव । दासरूप्यं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठौ परत्वाद्योपधलक्षणो वुञ्बाधते । दासरूप्यकः । उदीच्च ग्रामाच्च बह्वचोऽन्तोदात्तादञ् भवतीत्यस्यावकाशः । शिवपुर शैवपुरः । ठञ्ञिठयोः स एव । शाकलं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । शाकलिकी । शाकलिका । कोपधादण् भवति इत्यस्यावकाशः । निलीनक नैलीनकः । ठञ्ञिठयोः स एव । सोसुकं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठो परत्वात् कोपधलक्षणमण्को बाधते । सौसुकीयः ।" ४ । २ । १०४ ॥

शाकलं नाम नगरम् आपगा नाम निम्नगा ।
जर्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ।
कदा वाहेयिका गाथाः पुनर्गास्यामि शाकले ॥

महाभारत – कर्णपर्व – ४४ अध्याय ।

वाहीकग्रामाविति। (कै)

आद्ये अस्याप्राग्देशीयाविति शेषः पूरणीय इति बोध्यम्। अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्यते॥

ठञ्ञिठाविति। (कै)

"[१]वाहीकग्रामेभ्यश्च" इत्यत्र वृद्धादित्यनुवृत्तेः। प्रागुदग्विभागस्तु "[२]शरावत्यास्तु योऽवधेः। देशः प्रागुदक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर" इत्यमरेण दर्शितः। शरावती चोत्तरपूर्वाभिमुखीत्येके। ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये। उभयथापि प्रागुदक्स्वरूपे न विवादः। वाहीकलक्षणं च "[३]पञ्चानां

---

१ अ ४। पा २। सू ११७॥

२ लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः।
देशः प्राग् दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः॥
अमरकोष – भूमिवर्गः॥

३ देशांश्च विविधान् चित्रान् पूर्ववृत्तांश्च पार्थिवान्।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने॥
तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद् द्विजोत्तमः।
वाहीकदेशान् मद्रांश्च कुत्सयन् वाक्यमब्रवीत्॥
बहिष्कृता हिमवता गङ्गया च बहिष्कृताः।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये॥
पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः।
तान् धर्मबाह्यानशुचीन् वाहीकान् परिवर्जयेत्॥

सिन्धुषष्ठानामन्तरं ये समाश्रिताः। वाहीका नाम ते देशा न तत्र द्विवसं वसेद्" इति कर्णपर्वणि। एवं च धर्मवद्भिर्भूतत्वाद्वाही-

---

गोवर्द्धनो नाम वटः सुभद्रं नाम चत्वरं।
एतद्राजकुलद्वारमाकुमारात् स्मराम्यहम्॥
कार्य्येणात्यर्थगूढेन वाहीकेषूषितं मया।
तत एषां समाचारः संवासाद् विदितो मया॥
शाकलं नाम नगरमापगा नाम निम्नगा।
जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम्॥
धाना गौड्यासवं पीत्वा गोमांसं लशुनैः सह।
अपूपमांसमद्यानामाशिनः शीलवर्जिताः॥
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः।
नगरागारवप्रेषु बहिर्माल्यानुलेपनाः॥
मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः।
अनावृता मैथुने ताः कामचाराश्च सर्वशः॥
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः।
हे हते हे हतेत्येवं स्वामिभर्त्तृहते ति च॥
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः सर्वस्वसंयताः।
तासां किलावलिप्तानां निवसन् कुरुजाङ्गले॥
कश्चिद् वाहीकदुष्टानां नातिहृष्टमना जगौ।
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी॥
मामनुस्मरती शेते वाहीकं कुरुजाङ्गले।
शतद्रुकामहं तीर्त्वा तां च रम्यामिरावतीम्॥

कत्वम् । शतद्रुविपाशैरावतीवितस्ताचन्द्रभागेति पञ्चनद्यः सिन्धुः षष्ठस्तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः। कुपितमताश्वत्थे

गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः।
मनः शिलोज्ज्वलापाङ्गो गौर्यस्त्रीककुदोऽञ्जनाः ॥
कम्बलाजिनसंवीताः क्रदन्त्यः प्रियदर्शनाः।
मृदङ्गानकशङ्खानां मङ्गलानां च निःस्वनैः॥
खरोष्ट्रोश्वतरश्चैव मत्ता यास्यामहे सुखम्।
शमीपीलुकरीराणां वनेषु सुखवर्त्मसु॥
अपूपान् सक्तुपिण्डांश्च प्राश्नन्तो मथिताम्वितान्।
पथि सुप्रबला भूत्वा कदा सम्पततोऽध्वगान् ॥
चेलापहारं कुर्वाणास्ताडयिष्याम भूयशः।
एवं शीलेषु व्रात्येषु **वाहीकेषु** दुरात्मसु॥
कश्चेतयानो निवसेत् मुहूर्त्तमपि मानवः।
इदृशा ब्राह्मणेनोक्ता **वाहीका** मोघचारिणः॥
येषां षड्भागहर्ता त्वमुभयोः शुभपापयोः।
इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान्॥
**वाहीके**ष्वविनीतेषु प्रोच्यमानं निबोध तत्।
तत्र स्म राक्षसी गीतिः सदा कृष्णचतुर्दशीम्॥
नगरे **शाकले** स्फीते आहत्य निशि दुन्दुभिम्।
कदा वाहेयिका गाथाः पुनर्गास्यामि **शाकले**॥
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवम्।
गौरीभिः सह नारीभिर्बृहतीभिः स्वलङ्कृता॥

ग्रैषिकेष्वित्यस्य वैयर्थ्यं व्यवस्थितविभाषयैव सिद्धेः। अतोऽन्यमताश्रयेणैव भाष्यम्। भाष्यप्रामाण्याच्चैताववाहीकग्रामावपीत्यन्ये।

---

पलाण्डुगण्डूषयुतान् खादन्तो चैडकान् बहून्।
वराहं कौक्कुटं मांसं गव्यं गर्दभमौष्ट्रिकम्॥
एडं च ये न खादन्ति तेषां जन्मनिरर्थकम्।
इति गायन्ति ये मत्ताः सीधुना **शाकलाश्च** ये॥
स बालवृद्धाः क्रन्दन्तस्तेषु धर्मः कथम्भवेत्।
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते॥
यदन्योऽप्युक्तवानस्मान् ब्राह्मणः कुरु संसदि।
पञ्च नद्यो वहन्त्येता यत्र पीलवनान्युत॥
**शतद्रुश्च विपाशा** च तृतीयै**रावती** तथा।
**चन्द्रभागा वितस्ता** च **सिन्धु**षष्ठो वहिर्गिरेः॥
आरट्टा नाम ते देशा नष्टधर्मा न तान् व्रजेत्।
व्रात्यानां दासमीयानां **वाहीका**नामयज्वनाम्॥
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा।
तेषां प्रनष्टधर्म्माणां **वाहीकान**मितिश्रुतिः॥
ब्राह्मणेन तथा प्रोक्तं विदुषा साधुसंसदि।
काष्ठकुण्डेषु **वाहीका** मृण्मयेषु च भुञ्जते॥
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः।
आविकञ्चौष्ट्रिकञ्चैव क्षीरं गर्दभमेव च॥
तद्विकारांश्च **वाहीकाः** खादन्ति च पिबन्ति च।
पुत्रसङ्करिणो जाल्माः सर्वान्नक्षीरभोजनाः॥

भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्यार्थस्य ग्रैषिकेष्विति ज्ञापकमित्यपरे ॥

---

आरट्टा नाम वाहीका वर्जनीया विपश्चिता ।
हन्त प्रत्यय विजानीहि हन्त भूयो ब्रवीमि ते ॥
यदन्योऽप्युक्तवान् मह्यं ब्राह्मणः कुरु संसदि ।
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ॥
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ।
पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ॥
आरट्टा नाम वाहीका न तेष्वार्यो द्व्यहं वसेत् ।
वहिश्च नाम हीकश्च विपाशायां पिशाचकौ ॥
तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः ।
– – – – – – – – – ॥
कारस्करान् माहिषकान् कालिङ्गान् केरलांस्तथा ।
कर्कोटकान् वीरकांश्च सुधर्मांश्च विवर्जयेत् ॥

महाभारत – कर्णपर्व – ४४ अध्यायः ।

आमत्स्येभ्यः कुरुपाञ्चालदेश्या
आनैमिषाच्चेदयो ये विशिष्टाः ।
धर्मं पुराणमुपजीवन्ति सन्तो
मद्रादृते पाञ्चनदांश्च जिह्मान् ॥

पूज्यमाने पुराधर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥

अपत्येत्यादि । (कै)

"[1]उदीचां वृद्धाद्" इति "[2]नित्यं वृद्ध" इति चेति सर्वेष्टसिद्धिः ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम्
पादश्चायं समाप्तः ॥
इति शिवम् ॥



१ अ ४ । पा १ । सू १५७ ॥ २ अ ४ । पा ३ । सू १४४ ॥

ब्राह्मं पाञ्चालाः कौरवेयास्तु धर्म्यं
सत्यं मत्स्याः शूरसेनाश्च यज्ञम् ।
प्राच्या दासा वृषला दाक्षिणात्या-
स्तेना वाहीकाः सङ्करा वै सुराष्ट्राः ॥

कृतघ्नता परवित्तापहारो मद्यपानं गुरुदारावमर्दः ।
वाक्पारुष्यं गोवधो रात्रिचर्या बहिर्गेहं परवस्त्रोपभोगः ॥

येषां धर्मस्तान् प्रति नास्त्यधर्मो
ह्यारट्टानां पञ्चनदान् धिगस्तु ।
आपाञ्चालेभ्यः कुरवो नैमिषाश्च
मत्स्याश्चैतेऽप्यथ जानन्ति धर्मम् ॥

महाभारत – कर्णपर्व – ४५ अध्यायः ।

# शुद्धिपत्रम् ।

| पृष्ठाङ्कः । | पङ्क्त्यङ्कः । | अशुद्धम् । | शुद्धम् ॥ |
|---|---|---|---|
| १०१ | १६ | तद्वारैव | तद्द्वारैव । |
| १०२ | १८ | मास तु | मास्तु । |
| १०८ | १२ | अथवेत्यक्तेः | अथवेत्युक्तेः । |
| १०८ | १६ | पूर्वंक्ततो | पूर्वंक्ततो । |
| ११७ | ५ | इष्ठिरिति | इष्ठिरिति । |
| ११९ | १३ | सेन्द्रस्येति | नेन्द्रस्येति (पा) । |
| १२० | ६ | अर्शशब्दात् | अर्शः शब्दात् । |
| ... | १९ | ... ... | ... ... |
| १३६ | १६ | अनुवर्त्यस्यादिति | अनुवर्त्यंस्यादिति । |
| १४० | ७ | भाष्यकारास्त्विति | भाष्यकारस्त्विति । |
| १४० | १० | भाष्ये | ० |
| १५२ | २ | गुणवृद्धिग्रहणस्यो- | गुणवृद्धिग्रहणस्यो । |
| १५७ | २ | उणादिनाम- | उणादीनाम- । |
| १७१ | १७ | दूषणो- | दूषणो- । |
| १९१ | १४ | विधायकत्वे | विधायकत्वे । |
| २१३ | १३ | दुह्यमानसु | दुह्यमानासु । |
| ३२४ | १८ | मिंहशब्दस्य | सिंहशब्दस्य । |
| ३९५ | १८ | मुसाधवः | सुसाधवः । |
| ... | २४ | धात्रूपाणि | धातुरूपाणि । |
| ५१९ | ११ | एतत्सुत्रो- | एतत्सूत्रो- । |
| ५७६ | १५ | नखविदलादि- | नखविदलनादि- । |
| ५७८ | १९ | शित्ककरणादेवात्र | शित्करणादेवात्र । |

| पृष्ठाङ्कः । | पङ्क्त्यङ्कः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ५७९ | ८ | पंचमी- | पञ्चमी- । |
| ५९६ | १२ | तद्दारके | तद्द्वारके । |
| ६०१ | २२ | पतिपद्यते | प्रतिपद्यते । |
| ६०८ | १ | प्रश्नेष- | प्रश्लेष- । |
| ६१३ | २१ | तिस्त्र- | तिस्र- । |
| ६२२ | ३ | ऽवि | ऽपि । |
| ६२४ | १ | पदान्तरस्यस्यैव | पदान्तरस्यैव । |
| ६८६ | २१ | पंचमी | पञ्चमी । |
| ६९५ | १९ | वैयात्या | वैजात्या । |
| ७४५ | १० | आदि सिच | आदिः सिच । |

---

# सङ्केतचिह्नम् ॥



अ । पा । आ । अध्यायः । पादः । आह्निकम् ।

| | | | |
|---|---|---|---|
| पा | ... | ... | पाणिनिसूत्रम् ॥ |
| भा | ... | ... | महाभाष्यम् ॥ |
| वा | ... | ... | वार्त्तिकम् ॥ |
| उ | ... | ... | उणादिसूत्रम् ॥ |
| शि—सू | ... | ... | शिवसूत्रम् ॥ |
| न—का | ... | ... | नन्दिकेश्वरकृतकाशिका ॥ |
| गो—सू | ... | ... | गोतमसूत्रम् ॥ |
| सा—सू | ... | ... | सांख्यसूत्रम् ॥ |
| यो—सू | ... | ... | योगसूत्रम् ॥ |
| हरिः | ... | ... | भर्तृहरिकारिका ॥ |
| ऋ—सम् | ... | ... | ऋग्वेदसंहिता ॥ |



# महाभाष्यप्रदीपोद्योतान्तर्गतानां शिवसूत्राणां पाणिनिसूत्राणाञ्च वर्णानुक्रम-सूचीपत्रकम् ॥



---

# महाभाष्यप्रदीपोद्योतस्थप्रथमपादान्तर्गतानां सूत्रवार्त्तिकमहाभाष्यादीनां वर्णानुक्रम-सूचीपत्रकम् ॥

## अ ।

## आ।

---

## इ ।

## ई।







## उ।

## ऊ।



## ऋ।

---

## ॠ।



---

## ऌ।



---

## ॡ।



---

## ए।

---

## ऐ ।



---

## ओ ।



---

## औ ।



---

## क ।

4

---

## ख ।



---

## ग ।

## घ ।



## ङ ।



## च ।



## छ ।

---

## ज ।



---

## झ ।



---

## ञ।



## ट।



## ठ।



## ड।



## ढ।



## ण।



## त।

## थ।



---

## द।

---

## ध ।

## न।

---

## प ।

## फ।



## ब।

# भ ।

## म।

## य ।

## र।

## ल ।



## व ।

## श ।